# प्रबन्धप्रकाशः

## ( प्रथमो भागः )

अर्थात्

**संस्कृतनिबन्धरचनाप्रक्रियायाः प्रदीपकः संस्कृतनिबन्ध-रत्नानां सुभाषितरत्नसंदोहस्य च समुल्लासैः समुपेतो ग्रन्थः**

स च

'तुलनात्मकभाषाशास्त्र', 'ऋग्वेदप्रातिशाख्यव्याख्या' प्रभृतिग्रन्थानां
निर्मात्रा; नैकप्राचीनग्रन्थानां संपादकेन; भारतीयसंविधानस्य
( उत्तरार्धस्य ) संस्कृतानुवादकर्त्रा; प्रिंसिपल, गवर्नमेण्ट
संस्कृत कालेज, बनारस, सुपरिन्टेन्डेन्ट ऑफ़ संस्कृत
स्टडीज़, यू० पी० इत्यादिपदं च पूर्वमधिष्ठितवता

**विद्यामार्त्तण्ड (कां० वि०)**

**डाक्टर श्रीमङ्गलदेव शास्त्री,**

M. A., M. O. L., D. Phil. ( Oxon. )

इत्येतेन विनिर्मितः

२००६ वै० ( सन् १९५२ )

नवमं संस्करणम् ]
१०००

[ मूल्यम् ३)

प्रकाशक
के० मित्रा
इंडियन प्रेस, लिमिटेड.
इलाहाबाद।

| | |
|---|---|
| प्रथमं संस्करणम् | १६३० ई० |
| द्वितीयं संस्करणम् | १६३२ ई० |
| तृतीयं संस्करणम् | १६३५ ई० |
| चतुर्थं परिवर्धितं संस्करणम् | १६३८ ई० |
| पञ्चमं परिवर्धितं संस्करणम् | १६३६ ई० |
| षष्ठं संस्करणम् | १६४१ ई० |
| सप्तमं परिवर्धितं संस्करणम् | १६४२ ई० |
| अष्टमं परिष्कृतं परिवर्धितं च संस्करणम् | १६४७ ई० |
| विशेषतः परिष्कृतं परिवर्धितं च नवमं संस्करणम् | १६५२ ई० |

मुद्रक
श्री अमलकुमार बोस,
इंडियन प्रेस, लिमिटेड,
बनारस ब्रांच।

महामहोपाध्याय श्री० प० गोपीनाथ कविराज, एम० ए० (Late Principal, Government Sanskrit College, Banaras, and Superintendent of Sanskrit Studies, U P )

महोदयाना सम्मतिः—

गवर्नमेंट संस्कृत कालेज,

बनारस

प्राचामभिनवाना च विदुषा गीर्वाणभाषयोपनिबद्धान् निबन्धान् तत्तद्विषयभेदगर्भितान् सगृह्य सकलितोऽय प्रबन्धप्रकाशो नाम ग्रन्थो डा० श्रीमङ्गलदेवशास्त्रिणा। सोऽय वस्तुवैचित्र्येण गुम्फनसौष्ठवेन च श्लाघनीया लेखसरणिं प्रदर्शयन् सचेतसां मनसि मोदमादधानो देवभाषाया रचनापाटवमधिजिगमिषूणां विद्यार्थिनां भृशमुपकरिष्यतीति सभावयन्तो ग्रन्थस्यास्योपादेयत्वे श्रद्दधाना वय शतशो धन्यवादैर्ग्रन्थकर्तॄन् सभाजयाम।

२०।८।१९३०

कविराजोपाह्वगोपीनाथशर्माणः

अध्यक्षाः

विद्वद्वर्य श्री डा० लक्ष्मणसरूप, एम० ए०, डी० फिल०,
( भूतपूर्व प्रिंसिपल, ओरिएंटल कालेज, लाहौर )
महोदयानां

## सम्मतिः—

I have looked through the Prabandha Prakaśa of Dr. M. D. Shastri. It is a collecion of essays in Sanskrit on various subjects. Written in easy simple Sanskrit and replete with apt quotations from classical authors, it is suited to the needs of Sanskrit students of Oriental Title Examinations. I believe, it is the only book of its kind and will supply a long-felt want. I hope, the author will get the encouragement he deserves so well.

LAKSHMAN SARUP,
M. A., D. Phil. (Oxon ).
University Professor of Sanskrit,
University of the Punjab, Lahore.

*11th June, 1930.*

सुप्रसिद्ध श्री० पं० ईश्वरीदत्तदौर्गादत्ति शास्त्रि, एम० ए०, एम० ओ० एल०, (Late Superintendent, Sanskrit Studies, Bihar and Orissa ) महोदयैः कृतं

## प्रबन्धप्रकाशशुभाशंसनम्

विद्याभिरनवद्याभिर्विविधाभिर्विभूषितैः ।
कविताकान्तकान्तार-केलिलालसमानसैः ।। १ ।।
प्रज्ञाऽऽकरैः परद्रोहदिवाभीतदिवाकरैः ।
श्रीमन्मङ्गलदेवाख्यशास्त्रिभी रचितः शुभः ।। २ ।।
सहजैरपि सश्रीकैः सरसैः सरलैरपि ।
मितैर्मतैश्च महितः शब्दैः संस्कारशालिभिः ।। ३ ।।
पदे पदे प्रशंसार्हैरस्पृष्टैः पुनरुक्तिभिः ।
युक्त्या समर्थितैरर्थैः प्रापितः स्पृहणीयताम् ।। ४ ।।
सुभाषितैश्च सुरभिर्भव्यैर्भावैर्विभूषितैः ।
रीत्या रञ्जनमञ्जर्या मञ्जुतां काञ्चिदञ्चितः ।। ५ ।।
विद्यार्थिचातकव्रात-नीलनूतननीरदः ।
अध्यापकपिकानां चानन्तो वासन्त उत्सवः ।। ६ ।।
विद्वद्वृन्दमिलिन्दानामरविन्दवनं नवम्
दिव्यवाङ्मयसङ्कोचभुजङ्गमभुजङ्गभुक् ।। ७ ।।

लेखदुर्बलताऽऽवर्त-परीक्षातटिनीतरीम् ।
रचनाचातुरीं चार्वीं गीर्वाणगिरि चार्पयन् ॥ ८ ॥
निबन्धोऽयं सदा भूयाद् भावबन्धाय धीमताम् ।
भारते वसतामन्तेवसतां च विभूतये ॥ ९ ॥

ईश्वरीदत्तदौर्गादत्तिः ।

# FOREWORD

My friend and former pupil, Dr. Mangal Deva Shastri, has put together what I am sure will prove a very useful little book on Essay-writing in Sanskrit. The majority of the essays given as examples are written by himself in an excellent natural style. Others selected from standard authors or from contemporary writers have been judiciously chosen. At the end of the book there are some useful collections of quotations and pithy sayings that can be used to adorn an essay or to provide subjects for others.

*August 1930.*

A. C. WOOLNER
Vice-Chancellor, University
of the Punjab, Lahore,

# विषय-सूची

[ उल्लासः ४ ]

## सुभाषितरत्नसन्दोहः

# मातृभूमेरभिनन्दनम्

卐 सा नो माता भारती भूर्विभासताम् । 卐

येयं देवी मधुना तर्पयन्ती
तिस्रो भूमीरुद्धृता द्योरुपस्थात् ।
कामान् दुग्धे विप्रकर्षत्यलक्ष्मीं
मेधां श्रेष्ठां सा सदास्मासु दध्यात् ॥ १ ॥

सर्वे वेदा उपनिषदश्च सर्वा
धर्मग्रन्थाश्चापरे निधयो यस्याः ।
मृत्योर्मर्त्यानमृतं ये दिशन्ति वै
सा नो माता भारती भूर्विभासताम् ॥ २ ॥

यां प्रच्युतामनु यज्ञाः प्रच्यवन्ते
उत्तिष्ठन्ते ते भूय उत्तिष्ठमानाम् ।
यस्या व्रते प्रसवे धर्म एजते
सा नो माता भारती भूर्विभासताम् ॥ ३ ॥

यां रक्षन्त्यनिशं प्रतिबुध्यमाना
देवा ऋषयो मुनयो ह्यप्रमादम् ।
राजर्षयोऽपि ह्यनघाः साधुवर्याः
सा नो माता भारती भूर्विभासताम् ॥ ४ ॥

महान्तोऽस्यां महिमानो निविष्टा
देवा गातुं यां क्षमन्ते न सद्यः ।
सा नो वन्द्या भ्राजसा भ्राजमाना
माता भूमिः प्रणुदतां सपत्नान् ॥ ५ ॥

अभिनन्दनमिदं पुण्यं
दिव्यभावैः समर्हितम् ।
मातृभूमेः पठन्नित्य-
मात्मकल्याणमश्नुते ॥*॥

---

# हिन्दी अनुवाद

## भारतीय संस्कृति की दृष्टि से मातृभूमि का अभिनन्दन

### विश्वप्रसिद्ध हमारी मातृभूमि भारत देदीप्यमान हो !

१—द्युलोक से अवतीर्ण, तीनो लोकों को दिव्य माधुर्य से आपूर्ण करनेवाली, अभिलषित कामनाओ को देनेवाली तथा दुःख-दारिद्र्य ( अलक्ष्मी ) को हटानेवाली, देवीस्वरूपिणी भारत-माता सद्विचारो की साधना मे हमारी सहायक हो।

२—मनुष्यों को मृत्यु से हटाकर अमृतत्व की प्राप्ति का उपदेश देनेवाले समस्त वेद, उपनिषद् तथा अन्य ( बौद्ध, जैन आदि ) धर्म-ग्रन्थ जिसके निधि-स्वरूप है, वह विश्वप्रसिद्ध हमारी मातृभूमि भारत देदीप्यमान हो !

३—जिसका अपकर्ष ससार मे धर्माचरण के अपकर्ष का कारण होता है, जिसके उत्कर्ष मे धर्माचरण का उत्कर्ष निहित है, जिससे धर्म को प्रेरणा प्राप्त होती है, वह विश्वप्रसिद्ध हमारी मातृभूमि भारत देदीप्यमान हो !

४—देवगण, ऋषि, मुनि, राजर्षि और पवित्रात्मा सन्त-महात्मागण सावधानता तथा तत्परता से जिसके लोक-कल्याणकारी

स्वरूप की निरन्तर रक्षा करते आये हैं, वह विश्वप्रसिद्ध ह
मातृभूमि भारत देदीप्यमान हो !

५—जिसकी महिमा महान् है, देवगण भी जिसके स्वरू
गान नहीं कर पाते, समुज्ज्वल तेज से देदीप्यमान वह सर्व-
वन्दनीय हमारी मातृभूमि अपने विरोधी शत्रुओं का
( निराकरण ) करनेवाली हो ।

( मङ्गलदेव शास्त्री 'मेधातिथि'

# ग्रन्थसमर्पणम्



ग्रन्थकर्त्रा विनीतेन पित्रोर्देवस्वरूपिणोः ।
समर्प्यते पदद्वन्द्वे सद्ग्रन्थकुसुमाञ्जलिः ॥

# प्रबन्धप्रकाशः

( प्रथमो भागः )

—:०—

## उपोद्घातः

जयत्यमन्दमादधन्मुदं मनःसु सन्ततम् ।
सतामुदात्तकर्मणां निरञ्जनं परं प्रभुः ॥

### प्रबन्धरचनायाः स्वरूपम्

अथातः प्रस्तूयते प्रबन्धरचनायाः प्रक्रियादिविषयमधिकृत्य किञ्चिद्वक्तुम् । प्रबन्ध, प्रस्ताव, रचना, सदर्भ, निबन्ध इत्येते शब्दाः समानार्थत्वेनैवाद्यत्वे व्यवह्रियन्ते । तत्रैतैः शब्दैरस्मिन् प्रसङ्गे किमभिप्रेयत इति प्रश्ने सङ्क्षेपत एवमेव वक्तव्यं यत् कमपि प्रतिपाद्यविषयमवलम्ब्य तत्स्वरूपोपयोगमहत्त्वादिप्रदर्शनपुरःसरमुपपत्तिपूर्वकं च हृदयग्राहिण्या भाषया तद्विषयकस्वाभिमतार्थप्रतिपादनमेव तदर्थः ।

### प्रबन्धरचनाया उपयोगः

प्रबन्धरचनाया अभ्यासस्य क उपयोग इति जिज्ञासायामुच्यते । प्रथमं तावदस्योपयोगः स्वबुद्धिविकासार्थं भाषाया गतेर्दार्ढ्यार्थं च । तथा चास्मद्विचारशक्तेः परिमार्जनं विकासः

परिपुष्टता च यथा प्रबन्धरचनाया अभ्यासेन जायते न तथान्येन केनाप्युपायेन। एवं भाषायां गतिः प्रतिष्ठा च यथा प्रबन्धलेखनेन सुदृढा सम्भवति न तथान्यथा। द्वितीयं, स्वविचारप्रचारार्थमप्यस्योपयोगः। सार्वजनिकदृष्ट्यावश्यकानामुपयोगिनां च तत्तद्विषयाणां सम्बन्धे स्वविचारप्रचाराय सामयिकपत्रादिषु प्रबन्धलेखनमेवात्युत्तमोऽभ्युपायः। इत्यादिकारणैरेवाद्यत्वे तत्तत्परीक्षासु प्रबन्धरचनाविषयस्य प्रायः प्राधान्येन समावेशः कृतो दृश्यते। अस्मिन् प्रसङ्ग एतदप्यवधार्यं परीक्षार्थिभिर्यत्प्रबन्धरचनाभ्यासो न केवलं स्वविषय एव समुत्तीर्णतासाधनम्, किन्त्वन्यविषयेष्वपि भाषापाटवसाधकत्वेन महोपकारकः।

## अस्य विषयस्येतिहासः

सोऽयं विषय आपाततो नवीनत्वेन प्रतीयमानोऽपि न हि वस्तुतः सर्वथा नवीनः। सत्यं, प्राचीनसमये प्रबन्धरचनेतिविशिष्टनाम्ना नहि कश्चिद्विषयः प्रायेण पठनपाठनविधेरङ्गमासीत्। तथापि प्राचीनदर्शनशास्त्रेषु तत्तदधिकरणरूपेण, नीत्यादिग्रन्थेषु कथाख्यायिकादिभिः, पुराणेतिहासादिग्रन्थेषु तत्तद्दृष्टान्तसहकारेण च भिन्नभिन्नप्रकारैरेकार्थप्रतिपादनं दृश्यत एव। धर्मशास्त्रादिविषयकानर्थानुद्दिश्य लिखिताः प्राचीना "निबन्धाः" प्रसिद्धा एव। कौटिलीयार्थशास्त्रे ( अधिकरणं १५ ), सुश्रुते ( उत्तरतन्त्रेऽध्यायः ६५ ), चरके ( सिद्धिस्थानेऽध्यायः १२ ) च तन्त्रयुक्तिप्रकरणम्, पूर्वोत्तरमीमांसयोरधिकरणस्वरूपप्रतिपाद-

कानि वाक्यानि[१], अन्येषु च शास्त्रेषु समानार्थप्रतिपादकानि वचनानि प्रकारान्तरेण प्रबन्धरचनाप्रक्रियाप्रतिपादकान्येव सन्ति। सत्यप्येवम्, अद्यत्वे विशेषरूपेण विशिष्टविषयत्वेन च प्रबन्धरचनाया विषयेऽवधानं दीयत आधुनिकपठनपाठनपरिपाट्याम्। एतावदेवान्तरं प्राचीननवीनपरिपाट्योः।

## प्रबन्धरचनायाः प्रकाराः

यद्यपि प्रतिपाद्यविषयाणामानन्त्यात् प्रबन्धकर्तृबुद्धिवैचित्र्याच्च कतिप्रकाराः प्रबन्धा इति विशेषतो निर्देष्टुं न शक्यते, तथापि सामान्येन त्रिप्रकारत्वं तेषामभ्युपगम्यते—**निरूपणात्मकाः, आख्यानात्मकाः, आलोचनात्मकाश्चेति**[२]।

तत्र कमपि चेतनमचेतनं वा पदार्थमधिकृत्य तत्स्वरूपादिनिरूपणपराः प्रबन्धा **निरूपणात्मका** ( Descriptive Essays ) इत्युच्यन्ते। यथा वननदीपर्वतोषःकालसायङ्कालवायुयानादेर्निरूपणम्।

कामप्यैतिहासिकीं सामयिकीं वा घटनां वृत्तान्तं वाधिकृत्य तदाख्यानपराः प्रबन्धा **आख्यानात्मका** ( Narrative Essays )

---

१ पञ्चमं पृष्ठमत्र द्रष्टव्यम्।

२ अयमेव विभागो वस्तुवर्णनात्मका वृत्तान्तवर्णनात्मका विचारात्मकाश्चेति, यद्वा वस्तुमूलका वृत्तान्तमूलका विचारमूलकाश्चेति शब्दान्तरैरपि निर्देष्टुं शक्यते।

इत्युच्यन्ते। यथा देशदेशान्तरतीर्थादियात्राया आत्मनोऽन्यस्य वा जीवनचरितादेश्च वर्णनम्।

कमपि गूढं विमर्शसापेक्षं च विषयमवलम्ब्यालोचनात्मकदृष्ट्या यथावश्यकं पक्षप्रतिपक्षनिर्देशेन च तद्गुणदोषादिविवेचनपराः प्रबन्धा **आलोचनात्मका** (Reflective Essays) इत्युच्यन्ते।

अस्मिन्विषये प्रविविक्तॄणां दृष्ट्या सामान्यरूपेणैव ह्येष विभागः प्रबन्धानामिति द्रष्टव्यम्। वस्तुतस्तु नैष ऐकान्तिको विभागः। तथा च दृश्यते हि विभिन्नभाषासु प्रसिद्धलेखकानां प्रबन्धेष्वेषां भेदानां परस्परं संकरः संसृष्टिश्च।

## प्रबन्धरचनायाः प्रक्रिया

तत्र निरूपणात्मकानामाख्यानात्मकानां च प्रबन्धानां विषये नह्यत्र बहु वक्तव्यमपेक्ष्यते। प्रथमं तावत्संस्कृतपरीक्षास्वालोचनात्मका एव प्रबन्धाः प्रायेणापेक्ष्यन्ते। किञ्च द्वयोरप्याद्ययोः प्रकारयोर्बहून्युदाहरणानि पुराणादिग्रन्थेषु महाकाव्येषु च दृश्यन्ते। इत्यादिकारणैरत्र प्राधान्येनालोचनात्मकप्रबन्धानामेव विषये किञ्चित् संक्षेपेणोच्यते।

आलोचनात्मकप्रबन्धरचनायाः प्रक्रियाविषयेऽनेकानि प्राचीनानि नवीनानि च मतानि दृश्यन्ते। तेषु कानिचिदेवात्र प्रदर्श्यन्ते।

पूर्वोत्तरमीमांसाशास्त्रयोर्हि तत्तद्विषयकप्रबन्धानाम् अधिकरण-सज्ञा प्रसिद्धा। एकार्थप्रतिपादको विषयसशयपूर्वपक्षसिद्धान्तनिर्णया-त्मकपञ्चाङ्गबोधकवाक्यसमुदायो न्यायोऽधिकरणमिति हि पूर्वमीमा-साया तल्लक्षणम्। तथा चोच्यते—

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
निर्णयश्चेति सिद्धान्त. शास्त्रेऽधिकरणं स्मृतम्॥ इति।

"तत्र विचारार्ह वाक्य विषय। तस्यार्थविषये विशय इदमित्थ न वेति विकल्प। तत्र सदिह्यमानयो पक्षयोरसत्पक्षे युक्तिप्रदर्शन-वाक्य पूर्वपक्षवाक्यम्। पूर्वपक्षोक्ता युक्ति खण्डयित्वा सत्पक्षे युक्तिप्रदर्शनवाक्य सिद्धान्त.। ततश्चेत्याद्यभिलापेन सिद्धान्त-सिद्धार्थोपसहारक वाक्य निर्णयकवाक्यमिति।" उत्तरमीमासाया तु "तत्रैकमधिकरण पञ्चावयवम्। विषय. सदेह सगति पूर्वपक्ष सिद्धान्तश्चेति पञ्चावयवा।" इति विशेष·। (वाच-स्पत्येऽधिकरणशब्दोऽत्र द्रष्टव्य)। इत्येतदनुसार प्रबन्धरचनाया अपि विषयादीनि पञ्चाङ्गानीति युक्तम्।

यद्वा "प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा [१]" (न्याय-सूत्रे १।१।३२) इति न्यायसूत्रोक्तविधया प्रबन्धाना प्रतिज्ञादि-पञ्चावयवात्मकत्वमपि प्रतिपादयितु शक्यते। एवमेवान्यान्यपि मतान्यत्र विषये दृश्यन्ते।

---

१ प्रतिज्ञाद्यवयवाना लक्षणादीनि तु न्यायसूत्र एव द्रष्टव्यानि।

परन्तु विषयभेदाद् लेखकानां रीतिवैचित्र्याच्च संभवत्यप्येतेषां सर्वेषामवयवानामनेकेषु स्थलेषु प्रबन्धरचनाया अङ्गत्वे नह्येकान्ततस्तेषां सर्वत्र समानावश्यकता। सर्वविधेष्वपि[१] प्रबन्धेषु समानत्वेनैकान्ततश्चावश्यकान्यङ्गानि तु त्रीण्येव संभवन्ति। तानि चैतानि—**उपक्रमः**, **उपपत्तिः**, **उपसंहारश्चेति**। सत्यप्यावश्यकत्वेऽन्येषामङ्गानां तेषामेतेष्वेव यथायथमन्तर्भावः कल्पयितुं शक्यते।

तत्र **उपक्रमे** तावत्सामान्यरूपेण विषयप्रस्तावना विषयस्वरूपोद्देशस्तदुपयोगिता चेत्यादि प्रदर्शनीयम्।

**उपपत्त्यां** तत्तद्विषये साधकबाधकयुक्तिप्रमाणोपन्यासपूर्वकं विभिन्नसिद्धान्तानामनेकदृष्टीनां च समालोचनया विचारणं स्वाभिमतार्थस्य च प्रतिपादनं विधेयम्। यथावश्यकं प्रसिद्धसमुचितदृष्टान्तैरपि स्वाभिमतार्थस्य पोषणं कर्तव्यम्। किं बहुना, यदपि प्रसङ्गागतं सङ्गतं च तद्विषय आवश्यकं भवेत्तदत्र प्रपञ्चनीयम्।

**उपसंहारे** तु पूर्वोक्तानां प्रधानहेत्वादीनां संक्षेपेणानुवादपूर्वकम् अथवा अनुवादमन्तरेणैव प्रतिपाद्यविषयस्योपसंहारः कर्तव्यः।

---

१ निरूपणात्मकानामाख्यानात्मकानां चापि प्रबन्धानामेतान्येव उपक्रमोपपत्त्युपसंहाररूपाणि त्रीण्यङ्गानि। केवलमेतावानेव भेदो यदेतयोः प्रकारयोः प्राधान्येन (वस्तुवृत्तान्त)वर्णनात्मकत्वादत्र तेषामङ्गानां स्वरूपमपि यथायथं किञ्चिद् भिद्यते।

## प्रबन्धरचनायामुपयोगिनः केचिन्नियमाः ।

### बहिरङ्गनियमाः

प्रबन्धरचनाया उपक्रमात्पूर्वं सामान्येनैते नियमा अनुसरणीयाः—

( १ ) प्रथमं तावत् प्रतिपाद्यविषयस्वरूपस्यावधारणं कर्तव्यम् । विषयस्वरूपं सम्यगनवधार्यैव प्रायशः प्रवर्तन्ते रचनां कर्तुं विद्यार्थिनः । ततश्च रचनायामसङ्गत्यादिदोषा अपरिहार्या भवन्ति ।

( २ ) ततः तत्सम्बन्धिविचाराणां स्वयं विमर्शश्चिन्तनं च विधेयम् । एष स्वयंविमर्श एव बुद्धिविकासे मुख्यं कारणम् ।

( ३ ) तदनन्तरं तद्विशिष्टविषयोपयोगिविचाराणां कृतेऽन्यग्रन्थानामनुशीलनं विधातव्यम् ।

( ४ ) सामान्येन, सामयिकपत्राणामितिहासादेः काव्यग्रन्थरत्नानामन्यस्य चैवंविधसाहित्यस्याध्ययनं तथा तत्तद्विषयोपयोगिसुभाषितादीनां कण्ठस्थीकरणञ्च निबन्धरचनावसरे प्रासङ्गिकविचाराणां संस्फुरणाय तेषामुद्धरणाय चावश्यकम् ।

( ५ ) विषयोपयोगिनां प्रस्तुतरचनाङ्गभूतानामवान्तरविषयाणां प्रथमं संस्फुरणक्रमेणैवैकत्र समासतो लेखनं विधेयम् । अनन्तरमर्थानुपूर्व्येण शृङ्खलाबद्धाः सूत्ररूपेणैव ते लेखनीयाः । एवं रचनोपक्रमात् पूर्वमेव समासतो रचनायाः स्थूलरूपेणाकारो लेख्यः । एवं प्रधानाङ्गानां लेखनानन्तरं तेषामौचित्यानौचित्यादि विचार्य, साकल्येन च रचनास्वरूपमवधार्य पश्चाद्रचना विधेया ।

## अन्तरङ्गनियमाः

(१) समस्तप्रबन्धस्य यथावश्यकं त्रिष्वधिकेषु वा खण्डेषु विभागः कार्यः। ते च खण्डाः पृथक् पृथक् स्वातन्त्र्येण लेखनीयाः। तत्र प्रथमे खण्डे विषयस्योपक्रमः, मध्यमे मध्यमयोर्मध्यमेषु वा विषयस्योपपत्तिः, अन्तिमे चोपसंहारः कर्तव्यः।

(२) अत्रेदमवधेयं यदत्र प्रतिपादितान् साधारणनियमान् वर्जयित्वा नहि रचनाशैलीविषये निश्चिता व्यवस्थिता वा नियमाः सन्ति। प्रधानप्रतिपाद्यविषयस्य रक्षां कुर्वन्, भाषाया औचित्यं चापरिहरन् प्रबन्धलेखको येन केनापि प्रकारेण स्वेच्छया रचनाकरणे स्वतन्त्रः।

(३) विचारेषु स्वोपज्ञता भाषायां च स्वाभाविकतावश्यकी। अलङ्कारशास्त्रप्रतिपादितानां गुणानामपि रचनायां यथोचितः समावेशः कर्तव्यः।

(४) रचनायां यावदुपपत्तिप्रकारस्य प्राधान्यं न तावत् तत्तद्विषयकसिद्धान्तविशेषाणाम्। रचनाप्रकारो हृदयग्राही युक्तियुक्तश्चेत् तत्तद्विषये यस्य कस्यापि सिद्धान्तस्य प्रतिपादने लेखकः स्वतन्त्रः। शब्दान्तरेषु, 'किं प्रतिपाद्यते' इत्यस्यापेक्षया 'कथं प्रतिपाद्यते' इत्यत्रैव विशेषतोऽवधानं देयम्।

(५) रचनायाः परिमाणापेक्षया तस्याः प्रकारः शैली चाधिकमावश्यकौ। शोभनप्रकारेण रचितोऽल्पतरपरिमाणोऽपि निबन्धोऽशोभनप्रकारेण रचितादत्यधिकमादरास्पदम्।

( ६ ) पुनरुक्तव्याघातादिदोषा अन्ये चाप्यलङ्कारशास्त्रप्रतिपादिता दोषाः परिवर्जनीयाः ।

( ७ ) यथा प्रसङ्गोचितसुभाषितादिवचनोल्लेखो रचनायाः शोभामावहति, तथैवात्यधिकोऽप्रासङ्गिको वा तेषामुल्लेखो रचनासौन्दर्यमपहरति । किञ्च नैवं मन्तव्यं यदेतादृशः परवचनोपन्यासः सर्वथावश्यक एव रचनायाम् ।

( ८ ) नैव कश्चिद्व्यवस्थितः प्रकारो रचनाया उपक्रमस्य विषये । बुद्धीनां रुचीनां च वैचित्र्याद् वैचित्र्यमत्र दुर्वारम् । नैव सर्वेषु विषयेषु समान एवोपक्रमप्रकारः समुचितः । प्रतिपाद्यविषयानुकूलेनैव रचनाया उपक्रमेण भवितव्यम् ।

( ९ ) उपसंहारप्रकारोऽपि नहि सर्वत्र समानः । अत्रापि लेखकादिभेदेन विभिन्नताऽनिवार्या । तथा हि कदाचित्पूर्वमुक्तानां हेत्वादीनां समासेन पुनरावृत्तिद्वारैव समाप्तिः क्रियते । कदाचित्पुनरावृत्तिमन्तरेणैव । एवमन्येऽपि भेदा उपसंहारप्रकारे दृश्यन्ते ।

एवमन्येऽपि नियमा दर्शयितुं शक्यन्ते । ते पुनः प्रसिद्धलेखकानां प्रबन्धानामनुशीलनेन स्वयमेव छात्रैर्निर्धारणीयाः । किं बहुना, तथापि स्मर्यताम्—

बह्वपि स्वेच्छया कामं प्रकीर्णमभिधीयते ।
अनुज्झितार्थसंबन्धः प्रबन्धो दुरुदाहरः ॥

( शिशुपालवधे २।७३ )

रीतिं विचिन्त्य विगणय्य गुणान् विगाह्य
शब्दार्थसार्थमनुसृत्य च सूक्तिमुद्राः ।
कार्यो निबन्धविषये विदुषा प्रयत्नः
के पोतयन्त्ररहिता जलधौ प्लवन्ते ॥

(काव्यमीमांसायाम्)

किञ्च, शब्दार्थयोर्ग्रन्थनकौशलस्य महत्त्वमप्यत्र प्रसङ्गे न विस्मरणीयम् । यथा हि—

त एव पदविन्यासा ता एवार्थविभूतयः ।
तथापि नव्यं भवति काव्यं ग्रन्थनकौशलात् ॥

अपि च—

यानेव शब्दान् वयमालपामो
यानेव चार्थान् वयमुल्लिखामः ।
तैरेव विन्यासविशेषभव्यैः
संमोहयन्ते कवयो जगन्ति ॥

(नीलकण्ठदीक्षितस्यैतत्)

## उपसंहारः

एवमत्र संक्षेपेणैव प्रबन्धरचनायाः प्रक्रियादि प्रदर्शितम् । तन्निदर्शनभूताश्च केचित्प्रबन्धा अस्मिन्ग्रन्थे संनिवेशिताः सन्ति । रुचिवैचित्र्येण शैलीवैचित्र्यस्य प्रद्योतनार्थं च न केवलं स्वकर्तृका एव किन्त्वन्यप्रसिद्धलेखकनिबद्धा अपि

प्रबन्धाः, यथावश्यकं तदधिकारिणामनुज्ञयैव, सधन्यवादमत्र संगृहीताः। किंच, यद्यप्यालोचनात्मकनिबन्धानामेव प्रायशोऽपेक्षितत्वेन तेषामेवात्र प्राधान्येन समावेशः कृतस्तथाप्यन्यप्रकारका निबन्धा न सर्वथैवोपेक्षिताः। ग्रन्थान्ते पुनः सुभाषितानां वैदिकसूक्तीनां लौकिकन्यायानां च प्रबन्धरचनायामुपयोगितामाकलय्य पञ्चभिः प्रकरणैस्तान्यपि संगृहीतानि ॥

इति प्रबन्धप्रकाशस्य प्रथमभाग
उपोद्घातो नाम
प्रथमोल्लासः ॥

---

( १ )

# समयस्य सदुपयोगः

मनुष्यस्य सर्वमपि कार्यम्, सर्वमप्यभीष्टम, समयस्य सदुपयोगेनैव साध्यम्। ततश्च मनुष्यजीवने समयस्य मूल्य कियदिति वक्तुमशक्यम्।

जीवने यद्यत्कार्यजात सपादनीय तदपेक्षया उपलभ्यमानस्य समयस्यापर्याप्तत्वमिति केन नानुभूयते ? वस्तुत एव "अनन्तपार किल कार्यजात स्वल्प तथायुर्बहवश्च विघ्ना"। अत एव "जीवन वारितरङ्गचञ्चलतरम्" इत्याहुरभियुक्ता.।

सत्यप्येव यथा समयस्यापव्ययो दुरुपयोगो वा दृश्यते, न तथा कस्याप्यन्यस्य पदार्थस्य अत्यल्पमूल्यस्यापि।

धनादिपदार्था नष्टा अपि भूय· प्राप्तु शक्यन्ते, नष्ट समयस्तु सर्वथा नष्ट एव। न हि कथमपि तस्य पुनरवाप्ति सभवति। तथापि लोका प्रायेण यथा धनाद्युपार्जने कृतभूरिपरिश्रमा, नैव तथा समयस्य सदुपयोगे सरक्षणे वा।

जीविकोपार्जनार्थमपेक्षितात्समयादतिरिक्तस्य समयस्य सदुपयोग उपेक्षावन्तो मन्दा नावगच्छन्ति यज्जीवनस्य प्रत्येकं क्षणो जीवनयात्राया सफलतायै नितरामावश्यक. ।

अत एव "न कार्यकालमतिपातयेत् ।" ( चरके ),
"अद्धा हि तद्यदद्य अनद्धा हि तद् यच्छ्व ( शतपथे )
(अद्धा-सत्यम्), "का हानि ?समयच्युति.' ( नीतिशतके ),
"क्षिप्रमक्रियमाणस्य काल पिबति तद्रसम्" इत्येवमभियुक्तोक्तयो बह्वयो जाग्रति ।

अवकाशसमयस्यापि सदुपयोग कुर्वाणैरनायासेन हेलयैव वा महान्ति कार्याणि संपाद्यन्ते—इत्यत्र विषये विद्यन्ते बहून्युदाहरणानि । अनेकेषा ग्रन्थरत्नाना निर्माणमनुवादो वा, अनेकभाषाणा परिज्ञान वा बहुभिर्विद्वद्भि स्वकीयावकाशसमयस्य, यानेन स्थानात्स्थानान्तरगमनकालस्य वा सदुपयोगेन हेलयैव सपादितमिति केन न श्रुत भवेत् ?

भवति चात्र श्लोक —

स्वल्पेऽपि पुनरप्राप्ये सर्वाभीप्सितसाधने ।
अमूल्ये समये मोहान्मानवा नहि सादरा ॥

ततश्च मानवेन

यावत्स्वस्थमिद शरीरमरुज यावच्च दूरे जरा,
यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुष. ।
आत्मश्रेयसि तावदेव विदुषा कार्य. प्रयत्नो महान् ,

सदीप्ते भुवने च कूपखनन प्रत्युद्यम कीदृश ॥
इत्येव सदा समयस्य सदुपयोगे समवहितेन भाव्यम् ॥

---

( २ )

# मित्रता

मानवीयसबन्धेषु मित्रताया सबन्धोऽतीव विशिष्ट । नैव तस्य स्थान केनाप्यन्येन सबन्धेन ग्रहीतु शक्यते, न चापि तस्याव-श्यकताया पूर्ति केनाप्यन्येन कर्तु पार्यते। एतादृश हि तस्य स्वालक्षण्यम्, प्रातिस्विक च स्वरूपम्। एतदेव पश्यत कस्यापि मनीषिण सहसेव मुखान्नि सृत सुभाषितरत्नमेतत्—

शोकारातिभयत्राण प्रीतिविश्रम्भभाजनम् ।
केन रत्नमिद सृष्ट मित्रमित्यक्षरद्वयम् ॥

यद्यपि "व्यतिषजति पदार्थानान्तर कोऽपि हेतुर्न खलु बहिरु-पाधीन् प्रीतय. सश्रयन्ते" इत्युक्त्यनुरूपम्, अनासक्तबुद्धया क्रियमाणे निष्कामकर्मणीव, स्वाभाविकमित्रतायामपि नहि किञ्चिद् बाह्य कारणमपेक्ष्यते, तथापि मित्रताया किं महत्त्व का चानितरसाधारणी विशिष्टा आवश्यकतेति द्योतयितु शक्यते ।

को नामात्र लोके मानवो यस्य विपदो नोपतिष्ठन्ते, सकटानि नोपजायन्ते, कठिना वा अवसरा न समापतन्ति। एतादृशे हि समये

मनुष्यो निःस्वार्थबुद्धया प्रदत्तम्, सद्भावेन निरुपधिसौहार्देन च समन्वितम्, छद्मना विरहितम्, बुद्धया संयुक्तं च परामर्शं साहाय्यं चान्विच्छति। तादृशं च साहाय्यं परामर्शश्च सन्मित्रादेव प्राप्यते। अत एवोच्यते—

आपन्नाशाय विबुधैः कर्तव्या सुहृदोऽमलाः।
न तरत्यापदं कश्चिद्योऽत्र मित्रविवर्जितः॥

तत्र मित्रेण कीदृशेन भवितव्यमित्यत्र विषये सर्वतः प्रथमं वास्तविकमित्रे निःस्वार्थताया अकृत्रिमसौहार्दस्य च अपरिहार्यत्वेन आवश्यकता। मित्रेऽपेक्ष्यमाणा अन्ये गुणा एते एवानुधावन्ति। एतद्द्वयं च स्वाभाविकेऽकृत्रिमे च मित्र एव संभवति। एतादृशमेव मित्रमापदि सुखे च समक्रियं भवति। भाग्येनैव चैतादृशं मित्रं लभ्यते।

भवन्ति चात्र सन्मित्रविषयेऽभियुक्तोक्तयः—

न मातरि न दारेषु न सोदर्ये न चात्मनि।
विश्वासस्तादृशः पुंसां यादृग्मित्रे स्वभावजे॥
स्वाभाविकन्तु यन्मित्रं भाग्येनैवोपजायते।
तदकृत्रिमसौहार्दमापत्स्वपि न मुञ्चति॥

किञ्च।

पापान्निवारयति योजयते हिताय
गुह्यानि गूहति गुणान् प्रकटीकरोति।
आपद्गतं न च जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः॥

यद्यपि "यानि कानि च मित्राणि कर्तव्यानि शतानि च", "यस्यार्थास्तस्य मित्राणि", "ये चान्ये सुहृदः समृद्धिसमये द्रव्याभिलाषाकुलास्ते सर्वत्र मिलन्ति", "कार्यापेक्षी जनः प्रायः प्रीतिमाविष्करोत्यलम्" इत्याद्युक्त्यनुरूपमुपरिनिर्दिष्टनिरुपधिसौहार्दगुणेन हीनेष्वपि कार्यापेक्षिषु कादाचित्कमित्रेष्वपि मित्रशब्दस्य व्यवहारो लोके दृश्यते, तथापि कादाचित्कत्वेनैव मित्राभासा एव तानि, नैव वस्तुतो मित्राणि। अत एव नास्य प्रबन्धस्य विषयः।

ततश्च प्रत्यक्षरं सत्यमेतद् यद् "मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः, पात्रं यत्सुखदुःखयोः सह भवेन्मित्रेण तद् दुर्लभम्"। तादृशस्य च सौभाग्येनैव प्राप्तस्य मित्रस्य मित्रताया रक्षणं प्राणपणेनापि मनुष्येण कर्तव्यम्॥

---

( २ )

## यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम्।
## न हि कस्तूरिकामोदः शपथेन विभाव्यते॥

प्रायेण मानवाः स्वभावत एव पुत्रैषणा-वित्तैषणा-लोकैषणेत्येषणात्रयस्य प्रभावेण प्रभाविता व्यामूढा एव इतस्ततो धावन्तः कार्यव्यग्राः समालोच्यन्ते। तत्र लोकैषणा नाम स्वप्रख्यातिसमभिलाषः। सा हि विशेषेणात्युग्रप्रभावा। पुत्रैषणाया वित्तै-

षणायाश्च व्युत्थायापि प्रायेण मानवा लोकैषणायाः प्रभावमपनेतुमशक्ता दृश्यन्ते। सांसारिकजीवनं परित्यज्य आपाततो लोकसेवायां तत्परेष्वपि आत्मनः ख्यातिकामना जागर्त्ति। अत एव "उदात्तचेतसामन्तिमा दुर्बलता" (last infirmity of noble minds) इत्येवं तां वर्णयति रस्किन-नामा पाश्चात्यो मनीषी।

एवं च सति नात्र महदाश्चर्यं यद् दृश्यन्ते लोके बहवो मनुष्या ये रात्रिंदिवं स्वप्रसिद्धिं कामयमानाः,

घटं भित्वा पटं छित्वा कृत्वा रासभरोहणम्।
येन केन प्रकारेण प्रसिद्धः पुरुषो भवेत्॥

इत्युक्त्यनुरूपं स्वकीययोग्यतायोग्यतयोर्विचारमुपेक्ष्यैव, सर्वथा विशिष्टगुणैर्विहीना अपि, युक्तैरयुक्तैर्वा उपायैः ख्यातिलाभायैव चेष्टापरा भवन्ति।

तथापि एतादृशा अपि मानवोत्तंसा विद्यन्ते जगति येऽसाधारणगुणगणैरलंकृता अपि आत्मसंमानभावनयैव निरुद्धा नैव ख्यातिकामनया प्रयत्नपरा भवितुं शक्नुवन्ति। तादृशानेवाभिलक्ष्य नूनं "यदि सन्ति गुणाः" इत्यादि पद्यमुच्यते।

एष एवार्थो भङ्ग्यन्तरेणैवं वर्ण्यते—

वार्ता च कौतुकवती विमला च विद्या
लोकोत्तरः परिमलश्च कुरङ्गनाभेः।

तैलस्य बिन्दुरिव वारिणि पुर्निवारम्
एतत्त्रय प्रसरति स्वयमेव भूमौ ॥

स्वशरीरस्य च्छायेव शरीर, सत्पुरुषान् स्वत एव ख्यातिरनु सरति। ततश्च "सता गुणा स्वत एव प्रकाशन्ते" इति निय विश्वसन्तो गुणवन्त सन्त आत्मसमानभावनया भावितचित्त मर्यादामतिक्रम्य ख्यातिलाभाय यत्नपरा न भवन्ति।

तदत्र स्मर्यतामेतदपि पद्यम्—

अद्यापि दुर्निवार स्तुतिकन्या वहति कौमारम्।
सद्भ्यो न रोचते साऽसन्तस्तस्यै न रोचन्ते ॥

अयमेवार्थ परा काष्ठा नीत्वा एव वर्ण्यते मनुस्मृतौ—

समानाद् ब्राह्मणो नित्यमुद्विजेत विषादिव।
अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा ॥

—

( ४ )

## दीर्घौ बुद्धिमतो बाहू।

मानवेन नून बलवता भवितव्यमिति केन नाभ्युपगम्येत। तद्धि बल सामान्येन शरीरबल शस्त्रबल सैन्यबल वा इतिरूपेणैव गृह्यते तद्वै "भौतिक बलम्" इत्येव वर्णयितु शक्यते। वस्तुतस्तु तदतिरिक्त यद् बुद्धेर्बल तदेव सर्वप्रधानमिति मन्तव्यम्। यतस्तद्विरहित हि भौतिक बलमन्तत आत्मन एव हानिकर सपद्यते।

अयमेवार्थस्तैस्तै प्रकारैरस्मत्प्राचीनवाङ्मये प्रपञ्चितो दृश्यते। वसिष्ठविश्वामित्रयो सघर्षे "धिग्बल क्षत्रियबल ब्रह्मतेजोबल बलम्" इत्येव क्षत्रबलापेक्षया ब्रह्मबलस्य श्रेयस्त्वप्रतिपादन वस्तुतो भौतिकबल-बुद्धिबलयोस्तारतम्यस्य प्रदर्शनार्थमेव। एवमेव बुद्धिमतश्चाणक्यस्य साहाय्येन चन्द्रगुप्तस्य नन्दराज्यावाप्तिरप्येतस्यैवार्थस्यापर निदर्शनम्।

तस्यैतस्य तारतम्यप्रदर्शनस्यायमेवाभिप्रायो यद् व्यक्तिगतस्य समाजगतस्य वा कल्याणस्य कृते उभयविधयोरपि बलयो समन्वय सामञ्जस्य चापेक्षितम्। अत एव "ब्रह्म च क्षत्र च सश्रिते" ( ऐत० ब्रा० ३।११), "ब्रह्मणि खलु वै क्षत्र प्रतिष्ठितम्। क्षत्रे ब्रह्म" ( ऐत० ब्रा० ८।२ ) इति श्रूयते। केवल हि भौतिकं बल चक्षूरहितोऽन्ध इव कार्याक्षमम्। अत एव "बुद्धया सर्व प्रसाध्यते", "कृत्स्नो हि लोको बुद्धिमतामाचार्य। शत्रुश्चाबुद्धिमताम्" (चरके) इत्येव बुद्धे प्रशंसा, "मेधा मे वरुणो ददातु मेधामग्नि प्रजापति" ( यजु० ३२।१५ ), 'धियो यो न प्रचोदयात्" इत्यादिमन्त्रवर्णेषु च बुद्धिसबन्धिनी प्रार्थना दृश्यते।

ततश्च भौतिकबलेन सहैव तदपेक्षया उत्कर्षातिशय भजमानाया बुद्धे. सपादनार्थमपि मनुष्येण प्रयतनीयमित्येतदेव "दीर्घौ बुद्धिमतो बाहू" इति सुभाषितस्य हृदयम्।

भवन्ति चात्राभियुक्तोक्तयः। तथा हि—

तैलस्य बिन्दुरिव वारिणि पुर्निवारम्
एतत्त्रयं प्रसरति स्वयमेव भूमौ ॥

स्वशरीरस्य च्छायेव शरीरं, सत्पुरुषान् स्वत एव ख्यातिर
सरति। ततश्च "सतां गुणाः स्वत एव प्रकाशन्ते" इति नि
विश्वसन्तो गुणवन्तः सन्त आत्मसंमानभावनया भावितचि
मर्यादामतिक्रम्य ख्यातिलाभाय यत्नपरा न भवन्ति।

तदत्र स्मर्यतामेतदपि पद्यम्—

अद्यापि दुर्निवारं स्तुतिकन्या वहति कौमारम्।
सद्भ्यो न रोचते साऽसन्तस्तस्यै न रोचन्ते ॥

अयमेवार्थः परां काष्ठां नीत्वा एवं वर्ण्यते मनुस्मृतौ—

संमानाद् ब्राह्मणो नित्यमुद्विजेत विषादिव।
अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा ॥

—

( ४ )

# दीर्घौ बुद्धिमतो बाहू।

मानवेन नूनं बलवता भवितव्यमिति केन नाभ्युपगम्येत। त
बलं सामान्येन शरीरबलं शस्त्रबलं सैन्यबलं वा इतिरूपेणैव गृह्य
तद्धि "भौतिकं बलम्" इत्येवं वर्णयितुं शक्यते। वस्तुतस्तु तदति
यद् बुद्धेर्बलं तदेव सर्वप्रधानमिति मन्तव्यम्। यतस्तद्विरहितं
भौतिकं बलमन्तत आत्मन एव हानिकरं संपद्यते।

अयमेवार्थस्तैस्तैः प्रकारैरस्मत्प्राचीनवाङ्मये प्रपञ्चितो दृश्यते। वसिष्ठविश्वामित्रयोः संघर्षे "धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम्" इत्येवं क्षत्रबलापेक्षया ब्रह्मबलस्य श्रेयस्त्वप्रतिपादनं वस्तुतो भौतिकबल-बुद्धिबलयोस्तारतम्यस्य प्रदर्शनार्थमेव। एवमेव बुद्धिमतश्चाणक्यस्य साहाय्येन चन्द्रगुप्तस्य नन्दराज्यावाप्तिरप्येतस्यैवार्थस्यापरं निदर्शनम्।

तस्यैतस्य तारतम्यप्रदर्शनस्यायमेवाभिप्रायो यद् व्यक्तिगतस्य समाजगतस्य वा कल्याणस्य कृते उभयविधयोरपि बलयोः समन्वयः सामञ्जस्यं चापेक्षितम्। अत एव "ब्रह्म च क्षत्रं च संश्रिते" (ऐत० ब्रा० ३।११), "ब्रह्मणि खलु वै क्षत्रं प्रतिष्ठितम्। क्षत्रे ब्रह्म" (ऐत० ब्रा० ८।२) इति श्रूयते। केवलं हि भौतिकं बलं चक्षूरहितोऽन्ध इव कार्याक्षमम्। अत एव "बुद्ध्या सर्वं प्रसाध्यते", "कृत्स्नो हि लोको बुद्धिमतामाचार्यः। शत्रुश्चाबुद्धिमताम्" (चरके) इत्येवं बुद्धेः प्रशंसा, "मेधां मे वरुणो ददातु मेधामग्निः प्रजापतिः" (यजु० ३२।१५), 'धियो यो नः प्रचोदयात्" इत्यादिमन्त्रवर्णेषु च बुद्धिसंबन्धिनी प्रार्थना दृश्यते।

ततश्च भौतिकबलेन सहैव तदपेक्षया उत्कर्षातिशयं भजमानाया बुद्धेः संपादनार्थमपि मनुष्येण प्रयतनीयमित्येतदेव "दीर्घौ बुद्धिमतो बाहू" इति सुभाषितस्य हृदयम्।

भवन्ति चात्राभियुक्तोक्तयः। तथा हि—

शस्त्रैर्हता न रिपवो निहता भवन्ति
प्रज्ञाहताश्च सुतरा निहता भवन्ति ।
शस्त्र निहन्ति पुरुषस्य शरीरमेकम्
प्रज्ञा यशश्च विभव च कुल च हन्ति ॥
यत्र वायोर्गतिर्नास्ति रश्मीना च विवस्वत ।
तत्रापि प्रविशत्याशु बुद्धिर्बुद्धिमतामिह ॥

इममेवार्थं नीतिविद एव वर्णयन्ति—

अपकृत्य बुद्धिमतो दूरस्थोऽस्मीति नाश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू याभ्या हिंसति हिंसितः ॥
( विदुरनीति ६।८ )

किञ्च । एक हन्यान्नवा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्र सराजकम् ॥
( विदुरनीति १।४८ )

---

( ५ )

# ज्ञानं भारः क्रियां विना ।

ज्ञान तदनुकूलाचरण विना, तस्य कार्यरूपेण प्रयोग वा विना, केवल भार एव । ज्ञान सपाद्य यदि कोऽपि जनस्तदुपयोग न वेत्ति न करोति वा तर्हि नून तज्ज्ञानसपादन व्यर्थमेव ।

सर्वाणि शास्त्राणि सर्वाश्च विद्याः किञ्चित्प्रयोजनमुद्देश्यं वा पुरस्कृत्यैव प्रवर्त्तन्ते। "सर्वस्यैव हि शास्त्रस्य...यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यताम्" इति वै सर्वसम्मतः सिद्धान्तः।

सत्यप्येवं प्रायेण दृश्यते यद्बहवस्तत्तच्छास्त्राण्यधीत्यापि नहि तदनुकूलमाचरन्ति नापि तदुपयोगरहस्यं जानन्ति। तानुद्दिश्यैव प्रोच्यते—

"शास्त्राण्यधीत्यापि भवन्ति मूर्खाः" इति।

'मूर्खाः' इत्यल्पतरकमुच्यते। दुष्टा अनाचारवन्त इत्यपि वक्तव्यम्।

सर्वस्यापि ज्ञानस्य साफल्यं तदनुकूलाचरणे तस्य प्रयोग एव वा विद्यते।

आयुर्वेदं चिरायाधीत्यापि यदि कश्चित्तत्प्रयोगेऽवसीदति, तत्तद् भौतिकविज्ञानमभ्यस्यापि यदि कश्चित्तत् प्रयोगरूपेण घटयितुं न शक्नोति, तर्हि तस्य किं फलं किं वा सार्थक्यम्?

धर्मशास्त्रपारंगतोऽपि यदि तद्विपरीतमाचरति तर्हि स मायावी सन्, न केवलं लोकमेव, किन्त्वात्मा मपि वञ्चयति। "यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः" तथैव तं प्रति केवलं नाम बिभ्रदपि निःसारं शास्त्रम्। तादृशमेव च्छद्मना वर्तमानं जनमुद्दिश्य उच्यते—

नैनं छन्दांसि वृजिनात्तारयन्ति
मायाविनं मायया वर्तमानम्।
नीडं शकुन्ता इव जातपक्षाश्
छन्दांस्येनं प्रजहत्यन्तकाले॥

"किं तया क्रियते धेन्वा या न सूते न दुग्धदा" इति न्यायानुसार धर्मशास्त्रस्य तत्कृते व्यर्थत्वमेव ।

किं कर्तव्यं किं वा न कर्तव्यमिति ज्ञानेऽपि जनो यदि स्व-कर्तव्यविषय उदास्ते तर्हि किमर्थं तस्य तज्ज्ञानम् । चक्षुष्मान-पि अन्ध इवाचरति चेत्तर्हि 'को लाभस्तस्य नेत्रयोः' ?

किञ्च, शास्त्रज्ञोऽपि यदि शास्त्रप्रतिकूलतयाचरति तर्हि स न केवलमात्मन एवापकुरुते, किन्तु लोकस्यापि हान्यै प्रभवति ।

"यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" इत्युक्तेः शास्त्रज्ञा एव लोकस्य नेतारः । त एव यद्यनाचारवन्तस्तर्हि ध्रुवं लोकस्य हानिः । अत एवोच्यते—

नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत् ।
विश्वस्मिन्नधुनान्यः कुलव्रतं पालयिष्यति कः ॥

किञ्च । श्रुतेः पथो दर्शयितार ईश्वरा
मलीमसामाददते न पद्धतिम् ॥

एवमेव भौतिकविज्ञानस्य साफल्याय क्रियायाः तत्प्रयोगस्य वा अपेक्षा । एतदेव साम्प्रतिकानामाविष्काराणां निदानम् । अत एवोच्यते—

"शरीरे चैव शास्त्रे च दृष्टार्थः स्याद्विशारदः ।"
किञ्च । शास्त्राण्यधीत्यापि भवन्ति मूर्खा
यस्तु क्रियावान् पुरुषः स एव ।

ततश्च सर्वथा सत्यमेव—

ज्ञानं भारः क्रियां विना ॥

---

( ६ )

**अलोकसामान्यमचिन्त्यहेतुकं**
**द्विषन्ति मन्दाश्चरितं महात्मनाम् ॥**

द्वन्द्वात्मकं खलु जगदिदम्। सततं गच्छतीति व्युत्पत्त्या निष्पन्नो हि जगच्छब्दः। ततश्च सततं गतिशीलस्य जगतस्तत्त्वमेतत्कृतमेव। वस्तुतः परस्परविरुद्धशक्त्योः संघर्षेणैव जगतः स्थितिः प्रगतिश्च। अत एवास्मिन् संसारे कस्यचिदपि पदार्थस्य विरोधिपक्षो न विद्यत इत्यसंभवमेव।

एतन्नियमानुरूपमेव महात्मनामलोकसामान्येऽचिन्त्यहेतुकेऽपि चरिते मन्दाः प्रायेण सद्वेषा भवन्तीति नाश्चर्यकरम्।

सहस्ररश्मेर्लोकाभिनन्दनीयमपि तेजः प्रति कौशिकस्य द्वेषबुद्धिः कस्य न विदिता ?

लोकाभिरामं भगवन्तं रामं प्रति रावणस्य, भगवन्तं देवकीसुतं वासुदेवं प्रति कंसस्य शिशुपालस्य वा, करुणावतारं भगवन्तं बुद्धं प्रति पितृव्यसुतस्यापि देवदत्तस्य वा द्वेषबुद्धिर्जाज्वल्यमानमत्र निदर्शनम्।

सांप्रतिके भारतवर्ष एव अहिंसासत्ययोरवतारस्य लोकानुग्रहमूर्त्तेर्महात्मनो गान्धेश्चरितविषयेऽपि केषाञ्चिन्निष्कारणं द्वेषबुद्धिरस्माकं विदितैव।

दुर्जनाः स्वभावेनैव सुजनानां निष्कारणवैरिणो द्वेषिणश्च भवन्तीति नीतिविदामुच्चैर्घोषः। तथा चोच्यते—

दुर्जनो दूषयत्येव सतां गुणगणं क्षणात्।
मलिनीकुरुते धूमः सर्वथा विमलाम्बरम्॥

मृगमीनसज्जनानां
तृणजलसन्तोषविहितवृत्तीनाम्।
लुब्धकधीवरपिशुना
निष्कारणवैरिणो जगति॥

दह्यमानाः सुतीक्ष्णेन नीचाः परयशोऽग्निना।
अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते॥

किञ्च।

"न विना परवादेन रमते दुर्जनो जनः।"
"परदूषणमेव भूषणं येषाम्" (=दुर्जनानाम्)। इति।

तस्यैतस्य दुर्जनपक्षे स्वाभाविकस्य द्वेषस्य वास्तविकं मूलं तु सर्वानर्थकारणमज्ञानमेव। एतदेव प्रकृतस्य प्रबन्धस्य शिरोवाक्ये 'मन्दाः' इति पदेन ध्वन्यते। कस्यापि गुणवतो वस्तुनोऽवज्ञायाः कारणं वस्तुतोऽज्ञानमेव भवति। तथा चोक्तम्—

न वेत्ति यो यस्य गुणप्रकर्षं
स तस्य निन्दां सततं करोति।
यथा किराती करिकुम्भजातां
मुक्तां परित्यज्य बिभर्ति गुञ्जाम्॥

महात्मनः क्राइस्टस्य आत्मनोऽकारणाद्वेषिणः प्रति लोकानां पितरं परमेश्वरं संबोध्य "यतस्तेऽज्ञानिनः, अतस्तेषां मां प्रति द्वेषबुद्धिः क्षन्तव्या" इत्युक्तिरत्र स्मृतिपथमायाति। अत एव महात्मानो द्वेषिष्वपि करुणापरा एव भवन्ति।

वस्तुतस्तु निष्कारणाद्वेषेण नैव महात्मनां काचिद्धानिर्जायते। प्रत्युत स तेषां माहात्म्यस्य वृद्धये विकासाय चैव कल्पते। विरोधिशक्त्यैवास्माकं शक्तेर्विकास इत्येष वै प्रकृतेर्नियमः॥

---

( ७ )

**कुमुदाकरेण शरदिन्दुचन्द्रिका**
**यदि रामणीयकगुणाय संगता।**
**सुकृतं तदस्तु कतमस्त्वयं विधिर्**
**यदकालमेघविततिर्व्ययूयुजत्॥**

सृष्टावेतस्यां किमपि वस्तु अविचालि कापि परिस्थितिर्वा अनपायिनीति वै विप्रतिषिद्धम्। नहि कापि अभिमता परिस्थितिश्चिराय एकरसेनानुवर्तते। न चापि इष्टैः संयोगाः स्थायिनो भवन्ति। एतत्सर्वमालोचयत एव कस्यापि कवेरन्योक्तिरूपं सुभाषितम्—

## कुमुदाकरेणेत्यादि ।

संसारेऽस्मिन् "रत्नं समागच्छतु काञ्चनेन" इत्यनुरूपं जायमानो योग्यस्य योग्येन सह संगमो नितरां लोकानामानन्दाय कल्पते। महनीयचरितानां यशश्चन्द्रिकाधवलीकृतदिगन्तराणां त्रिभुवनभूषणानां मानवकुलतिलकानां स्वयोग्यतमेन जनान्तरेण पदेन परिस्थित्या वा संयोगः निरतिशयां शोभासम्पत्तिमावहति। परं "संयोगा विप्रयोगान्ताः पतनान्ताः समुच्छ्रयाः" इति न्यायानुसारं यदि कथंचित्सहसा तयोर्वियोगो जायते तन्नूनं लोकानामसह्यपीडनं भवति। शरदिन्दुज्योत्स्नायाः कुमुदाकरेण साकं संयोगो वै नितरां सौन्दर्यावहः। स एव संयोगो यद्यकालमेवपङ्क्त्था विहन्यते तदतितरामसह्यं शोचनीयं च भवति।

यथा हि राजराजो नलो दमस्वस्रा संगमं समासाद्य नितरामेव लोकाभिनन्दनीयः सन् विवासकाले सहसा तया वियुक्तो लोकानां शोकसागरे निमज्जनाय बभूव।

एवं भगवत्या सीतया संयोगमासाद्य विवासकालेऽकाले तया वियुक्तः श्रीरामचन्द्रोऽत्र निदर्शनम्।

एतादृशेऽवसरे हि सहसैव मुखान्निःसरति—

प्रायेण सामग्र्यविधौ गुणानां
पराङ्मुखी विश्वसृजः प्रवृत्तिः।

अथवा सर्वथा सत्यमेवैतदुच्यते यद् "मधुरविधुरमिश्राः सृष्टयो हा विधातुः"।

एवं हि प्रतीयते यत्क्रूरो विधिः क्रीडनकैरिवावशैर्मानवैः सह क्रीडति।

भवन्ति चास्मिन्नर्थे कवीनामन्या अप्युक्तयः। तथा हि—

सुहृदिव प्रकटय्य सुखप्रदः
प्रथममेकरसामनुकूलताम्।
पुनरकाण्डविवर्तनदारुणो
विधिरहो विशिनष्टि मनोरुजम्॥

किञ्च। नियतिर्विधाय पुंसां
प्रथमं सुखमुपरि दारुणं दुःखम्।
कृत्वालोकं तरला
तडिदिव वज्रं निपातयति॥

एतादृशीभिरुक्तिभिर्वै अपूर्णोऽस्मिन् जगति खिन्नमनस्कतामनुभवतो मानवस्य उत्तरोत्तरं पूर्णतायाः सामग्र्यस्य च कृते तीव्राभिलाष एव व्यज्यते॥

---

( ८ )

## दैवं हि दैवमिति कापुरुषा वदन्ति।

सर्वस्यामपि सृष्टौ कर्मण एव साम्राज्यं समालोच्यते। न केवलं प्राणन्निमिषच्च जगदेव स्वभावतः कर्मपरायणम्, न केवलं वृक्षौषधिवनस्पत्यादयो नदीनदा एव वा सततं कर्मपराः, किन्तु विश्वस्य संचालका वाय्वादित्यादयो देवताकोट्यन्तर्गता अपि अविरतं

स्वस्वकर्मणि निरता दृश्यन्ते। तेषु सर्वेषु सर्वमेतद्वृत्तं पश्यतोऽपि, बुद्धया समन्वितस्यापि केवलं मनुष्यस्यैव मनसि स्वकर्तव्यकर्म परित्यज्य दैवमेवाश्रयणीयमित्येषा भावना कथमपि पदं लभेतेति महदाश्चर्यम्!

स्पष्टं मानवसमाजस्य सभ्यतायाश्च सर्वोऽपि विकासः, नानाविधनूतननूतनाविष्काराश्च, मानवीयपरिश्रमस्यैव परिणामः। तत्तद्विद्यानां तत्तद्विज्ञानानां च स्वस्वविभागे चेतश्चमत्कारिणी समुन्नतिरपि आजीवनं घोरतपांसि चरतां विदुषां परिश्रमस्यैव साफल्यमुद्घोषयति। इतिहासेषु वर्णितानां महतीनां क्रान्तीनां महतां कार्याणां वा मानवीयः समुद्यम एव मूलम्। स्वकीयप्रकृत्या प्रचोदित इव शिशुरपि अविरतं हस्तपादादि चालयन् कर्मणः परिश्रमस्यैव च माहात्म्यं वर्णयति।

तदेवं सर्वत्रापि कर्मणः, परिश्रमस्य, उद्योगस्य वा निरपवादां प्रवृत्तिं पश्यतोऽपि मनुष्यस्य मनसि कर्म परित्यज्य दैवमाश्रयणीयमित्येषा भावना समुत्पद्यते चेत्तस्याः कारणं केवलं निखिलानर्थमूलं काचिद् भ्रान्तिः, बुद्धेर्विपर्ययः, सर्वस्याः समुन्नतेररातिरूपमालस्यमेव वा भवितुमर्हति।

प्रथमं तु दैवेत्याख्यो वस्तुतः कर्मणोऽपेक्षया स्वतन्त्रः पदार्थ एव न विद्यते। येऽपि दैववादिनस्तैरपि पूर्वजन्मकृतस्य कर्मण एव दैवमिति संज्ञा क्रियते। द्वितीयं पुनः, यदपि दैवाख्यं पूर्वकृतं कर्म तदपि वर्तमाने क्रियमाणस्य कर्मणो नैरपेक्ष्येण स्वातन्त्र्येण वा

नहि कार्यक्षमं भवितुमर्हति । न चापि तत्कर्मकर्तुरनाश्रयेण कुत्रचित् स्वातन्त्र्येण तिष्ठति । केवलं कर्तुः कर्मकरणस्य शक्तेः स्वरूपसंपादन एव तत्पर्यवस्यतीति बुद्धिमारोहति । अत एवोच्यते— "पुरुषकारेण विना दैवं न सिद्धयति" इति ।

ततश्च दैवमित्याख्यः स्वतन्त्रस्थितिः पदार्थः केवलमलीकमेव । सत्यपि तस्मिन् न तेन मनुष्यस्य किञ्चित् प्रयोजनम् । दैवमाश्रयणीयमिति भावना च न केवलं विश्वप्रपञ्चस्य किन्तु कर्मण्येवाधिकारं भजमानस्य मनुष्यस्यापि यः स्वभावस्तस्य प्रतिकूलैव ।

भवन्ति चात्र श्लोकाः—

आरभेतैव कर्माणि श्रान्तः श्रान्तः पुनः पुनः ।
कर्माण्यारभमाणं हि पुरुषं श्रीर्निषेवते ॥
कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥
न दैवमिति संचिन्त्य त्यजेदुद्योगमात्मनः ।
अनुद्यमेन कस्तैलं तिलेभ्यः प्राप्तुमिच्छति ॥
पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते ।
तस्मात् पुरुषकारेण विना दैवं न सिध्यति ॥
धीमन्तो वन्द्यचरिता मन्यन्ते पौरुषं महत् ।
अशक्ताः पौरुषं कर्तुं क्लीबा दैवमुपासते ॥
काकतालीयवत्प्राप्तं दृष्ट्वापि निधिमग्रतः ।
न स्वयं दैवमादत्ते पुरुषार्थमपेक्षते ॥

तस्मादवितथमेवेदं यत्—

दैवं हि दैवमिति कापुरुषा वदन्ति ॥

---

( ९ )

## तीर्थयात्राया लाभाः ।

चिराय राजनीतिकदास्येन पीडिता वयं भारतीया हन्त! स्वदेशेऽपि वैदेशिकाः संवृत्ताः स्मः। एतदेव कारणं यद् भारतीयेष्वाचारविचारेषु अज्ञानमूलको विरागोऽनास्था चास्माकं दरीदृश्यते। चिरन्तनकालात्प्रचलितायास्तीर्थयात्राया विषयेऽपि समानैव उपेक्षात्मिका प्रवृत्तिर्बहूनामस्माकम्। अत एव भारतेऽद्यत्वेऽपि आबालवृद्धमाराजरङ्कं च समादृतायास्तीर्थयात्राया लाभानधिकृत्य किञ्चिदत्र वक्तुं साम्प्रतमेव।

संक्षेपेणैव ते लाभा अत्र प्रदर्श्यन्ते—

(१) प्रथमं तावत्पदमवगाहते आध्यात्मिको लाभः। मुख्यतया एतदुद्देश्येनैव नानाविधकष्टपरम्पराः सहमानैरपि तीर्थयात्रा क्रियते। आध्यात्मिकता हि मानसी अवस्था। सा च संकल्पाधीना। अत एव "तन्मे मनः शिवसंकल्पमस्तु" इत्येवं वैदिकप्रार्थनाः श्रूयन्ते। यत्संकल्पेन मनुष्यः कर्मारभते तस्य तदेव फलं लभ्यते। अत एव "मन एव मनुष्याणां कारणं बन्धमोक्षयोः" इति स्मर्यते।

किञ्च, सांसारिकान् रागद्वेषानुबन्धिनो भावान् तावत्कालं विहाय तेषु तेषु पवित्रतीर्थेषु विचरन्मनुष्यस्तैः संबद्धमात्मन उन्नायक-

मितिहासं श्रावं श्रावम्, तत्रत्यैर्महात्मभिश्च समागमं कुर्वन् नूनमाध्यात्मिकभावनानां दृढभूमिकतां लभत इति कोऽत्र संदेहस्यावकाशः।

(२—३) तदनन्तरमागच्छतो मनोविनोदोऽनुभववृद्धिश्च। दैनन्दिनीं गार्हस्थ्यजीवनस्य चिन्तां मुक्त्वा तीर्थयात्रार्थं गतवतो जनस्य तत्तत्समाजेन प्रकृत्या च संबद्धानां विभिन्नप्रकारकाणां नूतननूतनानां दृश्यानां प्रसङ्गानां च दर्शनेन न केवलमत्यन्तमवर्णनीयो मनोविनोद एव, किन्तु अनुभवस्य ज्ञानस्य वा वृद्धिरपि भवत्येव। तथा चोक्तम्—

देशाटनं राजसभाप्रवेशो
व्यापारिविद्वज्जनसंगतिश्च।
सर्वेषु शास्त्रेष्ववलोकनं च
चातुर्यमूलानि भवन्ति पञ्च॥

किञ्च। नद्यः फुल्लसरोरुहा वनभुवः पुष्पानमद्वीरुधः
शैलाः काञ्चनरत्नचित्रकटकाः प्रोत्तुङ्गहर्म्याः पुरः।
नानाकेलिविचक्षणा युवतयः शूराश्च घोराहवाः
दृश्यन्ते भुवि केन कोमलहृदा देशानगत्वा बहून्॥

(४) भारतीयसंस्कृतेरेकात्मकतायाः पुष्टिरित्यपरो लाभः। भारतवर्षो हि महान् देशः। अत्र हि विभिन्ना भाषा आचारविचाराश्च तत्तत्प्रान्तभेदेनोपलभ्यन्ते। एतद्दृष्ट्या भारतं नाम नैको देशः, किन्तु देशानां समूह इत्यपि वक्तुं शक्यते। तथापि समस्तेऽपि

भारत एकैव भारतीया संस्कृतिरिति भारतीयानां चिरप्ररूढो विश्वासः। अत एव विभिन्नदेशवासिषु परस्परमुपलभ्यमानाया देशमूलकविद्वेषभावनाया नामापि भारतीयेतिहासे न श्रूयते। तत्स्थाने विभिन्नप्रान्तीयतीर्थेषु समानां श्रद्धां भक्तिं मान्यतां च धारयन्तो भारतीयास्तीर्थयात्रां कुर्वन्ति। स एष भारतीयतीर्थयात्राया एव महान् महिमा।

एवम् "आम्राश्च सिक्ताः पितरश्च प्रीणिताः" इति न्यायानुरूपं मुख्येन आध्यात्मिकताया लाभेन सहैव तीर्थयात्राया अनेके लाभाः।

किञ्च। कस्याविदितं यत् पाश्चात्यदेशेषु अपि प्राकृतिकसौन्दर्यविहानां समुद्रतीरस्थनगरादीनां यात्रायाः परिपाटी अद्यत्वेऽपि सोत्साहं प्रचलति। पूर्वोक्तहेतुभिः स्पष्टमेतद् यदस्मद्देशीयतीर्थयात्रायां न केवलं तस्याः पाश्चात्यप्रथाया एव गुणाः, किन्तु ततोऽप्यधिकाः, अन्तर्गच्छन्ति। तच्चैतदाध्यात्मिकभावनाप्रधानानां भारतीयानामस्माकं स्वाभाविकं वैशिष्ट्यम्॥

---

(१०)

## वरमद्य कपोतः श्वो मयूरात्।

इह खलु नानाविधचिन्तासन्तानसन्दानित[१]मानवकुलसंकुले संसारे किन्तु मनुष्याणां दुःखस्य निदानं किं वा तत्प्रतीकार

१ "बद्धे सन्दानितं मूतम्" इत्यमरः।

इति मीमांसाव्यतिकरे[1] समाहितमित्थं केनचिन्नीतिज्ञधुरन्धरेण विपश्चिता—

वरमद्य कपोतः श्वो मयूरादिति

स्वल्पाक्षरं खल्विदं वचनम्। अर्थस्त्वस्यातीव गम्भीरः तथ्योपदेशप्रदः परमोपयोगी च। इह लोके हि नानाविधा मानवा दृश्यन्ते। तत्रैतादृश एवादीर्घदर्शिनो बहवो ये स्वकीयवर्तमानावस्थितावसन्तुष्टा उपस्थितश्रेयोऽवमानिनो भाविन्याः समुत्कृष्टतरावस्थायाः कृत एव निरन्तरमितस्ततो धावन्तः

"आशाया ये दासास्ते दासाः सर्वलोकस्य।"

"आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला,
रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी।
मोहावर्तसुदुस्तरातिगहना प्रोत्तुङ्गचिन्तातटी'

इत्याद्युक्त्यनुरूपमामरणमेव चिन्तासन्तानसन्दानितहृदयास्तृष्णासमुद्भूतेनासन्तोषेण च "अशान्तस्य कुतः सुखम्" इत्यनुकूलं सदैव दुःखिनः स्वजीवनकालमतिवाहयन्ति। अन्ततोऽपि ते सफलमनोरथाः सुखिनश्च भवन्तीति सन्देहास्पदमेव। ततश्च प्रायशः स्वकीयसुखमयपूर्वावस्थातोऽपि परिभ्रष्टानां तेषां सकलं जीवनं दुःखमयमेव जायते।

अन्ये पुनः स्वकीयवर्तमानावस्थायां सन्तुष्टाः परेशस्य धन्यवादपुरःसरं प्राप्तं सुखमनुभवन्ति। तेषु केचिदत्यन्तं स्वकीयभाग्युन्नति-

---

१ व्यतिकरः प्रसङ्गः।

निरपेक्षा भवन्ति। परन्तु ये बुद्धिमन्तस्ते तु वर्तमानेन सन्तुष्टा अपि भविष्यदर्थमपि प्रयतमाना भवन्ति।

तत्र ये पूर्वविधा मानवास्तानेव समुद्दिश्येदं नीतिवचनम्—वरमद्येत्यादि।

एष एव समुन्नतिमार्गो यदधिगतस्य संरक्षणम्। प्राप्तस्य हि सम्यग्रक्षणे क्रमेण शनैः शनैरुत्तरोन्नतिः सम्भाव्यते। न केवलमधिगतस्य स्वरूपेणैवोपयोगित्वं किन्तु भाविन्या अभीष्टाया अभ्युन्नतेः साधनत्वेनापि। यत्पूर्वमधिगम्यते तद्द्वारैव प्रायशो बुद्धिमद्भिः समुत्कृष्टतरस्यानागतस्य वस्तुनः प्राप्तिरुत्तरकाले साध्यते। अतो नहि भाविनीमाशामनुरुध्याधिगतस्यापि परित्यागः परिहारो वा समुचितः। अत एव नीतिविदः प्राहुः—

"चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान्।"
"उपनतमवधीरयन्त्यभव्याः।"
"वर्तमानेन कालेन वर्तयन्ति विचक्षणाः।" इति।

तथा चात्र शातपथी श्रुतिः—"अद्धा[१] हि तद् यदद्य...अनद्धा हि तद् यत् श्वः"।

ये पुनरेतं नियमं तिरस्कृत्य वर्तन्ते तेषां विषये हि "इतो भ्रष्टस्ततो भ्रष्टः", "इदं च नास्ति न परं च लभ्यते", "वृद्धिमिष्टवतो मूलं विनष्टम्", "पुत्रलिप्सया देवं भजन्त्या भर्तापि

---

१ अद्धा = निश्चितम्।

नष्टः", "एकं सन्धित्सतोऽपरं प्रच्यवते" इत्यादिन्यायाश्चरितार्था भवन्ति।

युक्तियुक्ता हि एषा नीतिः। तथा हि, अस्थापिते ह्यपरस्मिन्पादे स्थितस्य चरणस्याप्युत्थापनं को नु विद्वान् समनुमन्येत? भाविन्याः श्येनाधिगत्या आशया को नु व्याधो जालमापन्नमपि कपोतजातं परिहरन् स्ववृत्तिमाचरन् सुखाभिलाषी भवेत्? भाविनः कुञ्जराधिगमस्याशामनुरुध्य मृगमुत्सङ्गागतमपि पर्यस्यतः केसरिणो वा कथंकारं प्राणाधारसम्भवः?

ततश्च भाविनोऽर्थस्याशामवलम्ब्य प्राप्तमपि परित्यजन्नहि कोऽपि सुखमधिगन्तुमर्हति। प्रत्युत तद्विनाशनिदानमेवैतदन्ततः सञ्जायते। तदत्र गीयते सुभाषितमेतत्—

> यो ध्रुवाणि परित्यज्य ह्यध्रुवं परिषेवते।
> ध्रुवाणि तस्य नश्यन्ति ह्यध्रुवं नष्टमेव तु॥

ये पुनरेनां नीतिमनुवर्तन्ते त एवात्र जगति न केवलं सुखिन एव भवन्ति किन्तूत्तरोत्तरामुन्नतिं चाप्यासादयन्ति।

न केवलं साधारणव्यवहार एव, किन्तु महत्त्वयुक्ते राजनीत्यादिव्यवहारेऽप्येषैव नीतिरवलम्ब्यते सुज्ञैः। राजनीतिज्ञा हि पदे पदे यदपि किञ्चिदल्पं बहु वा समयानुकूल्येन समुपस्थितं भवति तदेव बहु मन्यन्ते। न तु भावि समुत्कृष्टतरं वस्त्वनुधावन्तस्तत्तुच्छं मत्वा परिहरन्ति। आयर्लैण्डादिदेशानामितिहासे पूर्णस्वतन्त्रतावाप्तितत्परैरपि तैः समयानुसारं परिमितस्वतन्त्रतायाः स्वीकारोऽस्या एव नीतेर्निदर्शनम्।

अतो बुद्धिमन्तो नह्युपनतमवधीरयन्ति। किन्तु तत्सादरं सहर्षं च स्वीकृत्य तद्द्वारैव भाविन्या उन्नत्यै प्रयतन्ते। अतः सम्यगेवोच्यते—

वरमद्य कपोतः श्वो मयूरादिति ॥

---

( ११ )

## मर्कटस्य सुरापानं ततो वृश्चिकदंशनम् । तन्मध्ये भूतसंचारो यद्वा तद्वा भविष्यति ॥

इह खलु नानाविधकार्यकारणसम्बन्धनिबन्धने भुवने कोऽप्ययं नियमस्त्रिलोकीनाथेन भगवता निखिलजगद्व्यापारनिर्वर्तकेन प्रवर्तितः संदृश्यते यत्स्वानुरूपसाहाय्यमासाद्य सर्वेऽपि भावाः प्रबलाः संजायन्ते। एवं च यद्वस्तु स्वत एवानर्थकारि तद्यदि स्वानुरूपं साहाय्यमासादयेत्तर्हि भूयसेऽनर्थायैव प्रकल्पते। यथा हि खलु वह्निः स्वभावेनैव पदार्थान् भस्मसात्करोति। स यदि कस्मिंश्चिदुटजे संदीप्तः स्यात्, उटजं चानार्द्रतृणप्रकल्पितं भवेत्, प्रचण्डमार्त्तण्डातपेनोष्णश्चण्डवेगश्च वायुः प्रवहेत्; तर्हि तदेतदखिलं सहजानर्थकारिणो वह्नेरनुरूपं साहाय्यं महतेऽनर्थप्रवाहाय प्रभवति। तादृश्यामवस्थायामपरिमेयानर्थसन्ततिसम्भूतिशङ्का सुतरां स्वाभाविकी। तदत्रैतदाशयवर्णनपरैव कस्यचित्कविप्रकाण्डस्य भणितिरियम्—

मर्कटस्य सुरापानमित्यादि।

अयं भावः। यथा हि प्रथमं तु मर्कटः स्वाभावेनैव चपल इति महाननर्थः। स यदि सुरापानं विदधीत, वृश्चिकश्च तं दशेत्, ततोऽपि च प्रेतादिसंचारः स्यात्तर्ह्येतदनर्थचतुष्टयसमापतने यदपि संघटेत तदल्पमेवेति मन्तव्यम्। यतस्तस्यामवस्थायां को नु वक्तुं समर्थो यदेतावत्येवानर्थसम्भूतिर्भविष्यति। एवमेव यत्रापि स्वतोऽनर्थकारिणोऽनुरूपसाहाय्यलाभस्तत्र कदा कोऽनर्थः समापतेदित्येतदवधारणं दुःशकम्।

यथा हि खलु यत्र यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता इत्येतच्चतुष्टयसद्भावस्तत्र यदप्यनर्थजातं समापतेत्तदल्पमित्येवावगन्तव्यम्। नैव तत्रानर्थश्रेणिसमापतन इयत्तावधारणसंभवः। तदेतत्पद्यं गीयते—

यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता।
एकैकमप्यनर्थाय किमु यत्र चतुष्टयम्॥ इति।

तथ्यमियमेवावस्था समुपस्थितासीद् भारते वर्षे महाभारतयुद्धप्रवर्तनात्प्राक्। तस्मिन्नेव हि समये यैर्दुर्योधनादिभिर्धनादिमदोन्मत्तैर्भारतं समाक्रान्तं तेऽपि यौवनधनसंपत्त्यादिभिश्चतुर्भिरप्यनर्थकारणैः समेता बभूवुः। तत एव तत्तन्महानर्थजातं भारतस्योपरि समापतितं यस्य दुष्प्रभावेणाद्यापि ग्रस्तं भारतमुन्नतिपथात्प्रस्खलति।

किं बहुना, यस्मिन्नपि काले कस्याप्युद्दण्डतया निरंकुशाचारेण च समुद्वेजितो लोक आसीत्तदैवमेवानर्थमूलानि नानाविधकारणानि समुपस्थितान्यासन्।

अद्यत्वेऽपि नानादेशेषु यत्रापि शासकानामत्याचारेण पीडिताः प्रजास्तत्रैवमेवानेकविधान्यनर्थानुरूपकारणानि संघटितानि दरीदृश्यन्ते। तद्यथा 'ट्यूनीशिया' देशे 'फ्रांस' देशवासिनामत्याचाराः। एतादृशानां हि परपीडापराणां धनसम्पत्तिरतिरोहिता, प्रभुत्वमपि साक्षात्। अविवेकितापि प्रत्यक्षैव। अनपराधिनां कारागारपातनं प्राणादानमसमसमीक्षणमधिकारिभ्योऽप्यधिकारावितरणमित्यादि सर्वं बहुविधचेष्टितं तेषामविवेककारितमेव। तत्रैवं नानानर्थकारणकलाप[1] सन्निधाने स्वदेशहितचिकीर्षूणां येऽपि कारागारावरोधप्रभृतयोऽनर्थप्रवाहाः समुपस्थिता भवन्ति ते स्वल्पा इत्येवावगन्तव्यम्। स्वार्थिनां लक्ष्मीवतां प्रभूणामविवेकिनामेतादृशामधिकारे किं किमनर्थं जातं समुपस्थितं भवेदिति को नु वक्तुं शक्नोति।

एतादृशे ह्यवसरे सुतरां सङ्कटत उपरि निर्दिष्टा कस्यापि विद्वन्मणेर्भणितिरियम्—

मर्कटस्य सुरापानं ततो वृश्चिकदंशनमित्यादि ॥

——

( १२ )

## उद्योगः

इह जगति सर्वेषामेव प्राणिनामियं स्वभाविक्यभिवाञ्छा यत्कथमपि शुभमधिगच्छाम इति। सत्यप्येवं विरला एव ते ये

१ कलापः समूहः।

स्वाभीष्टार्थाधिगतौ सफला भवन्ति। तदत्र किं निदानमिति मीमांसायामेतदेव वक्तव्यं यद् बाहुल्येनालस्यमहाव्यालदष्टानां विमुग्धधियामुद्योगमहामन्त्रमाहात्म्यस्याज्ञानमेव तत्कारणम्। आलस्यं हि शरीरिणां महान् रिपुरुद्यमश्च परमः सखेति कस्याविदितं सचेतसः। तथा चोच्यते—

आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः।
नास्त्युद्यमसमो बन्धुः कृत्वा यं नावसीदति॥

उद्योगो हि नाम स्वाभीष्टार्थाधिगत्यै दृढसङ्कल्पपूर्वकोऽगणित-विघ्नबाधाप्रहारो व्यापारः। अयमेव उद्यमः, पुरुषकारः, पौरुषम्, कर्म, अभ्यासः, तपः इत्यादिनामभिस्तत्तद्विषयभेदेन व्यवह्रियते। तथा च, एकेन वणिजा धनोपार्जनाय क्रियमाणो देशदेशान्तर-गमनागमनादिकष्टबहुलो वाणिज्यरूपः समारम्भः, कृषीवलेन केनचित् "कृषिः क्लिष्टा वृत्तिः" इत्यनुसारं शीतोष्णादिकष्ट-परम्परामगणयता शस्योत्पादनार्थं क्रियमाणः कर्षणादिरूपः परिश्रमः, "सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम्" इत्युक्तिमनुसरतो विसृष्टविषयभोगतृष्णस्य विद्यार्थिनो वा कस्य-चिद् ज्ञानसम्पादनाय विद्याभ्यासरूपो व्यापारः, योगिनो वैकस्य निरस्तविषयव्रातस्य "चञ्चलं हि मनः कृष्ण! प्रमाथि बलवद् दृढम्" इति भगवदुक्त्यनुसारं दुर्दमनीयस्य मनसो वशीकरणार्थम् "अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते" इत्यनुसारं यद्वा "अभ्यासवैराग्याभ्यां तन्निरोधः" इति पातञ्जलयोगसूत्रार्थमनु-

सृत्य जपेश्वरप्रणिधानादिरूपोऽभ्यासः, तपस्विनो वा कस्यापि निखिलद्वन्द्वतितिक्षोर्वह्निसेवनोपवासादिरूपं तपः सर्वमेतद्वस्तुत उद्योगस्यैव निदर्शनम्।

ततश्चायमुद्योगः सर्वेषामेव लौकिकानां पारलौकिकानां चार्थानाम्, आधिभौतिकाधिदैविकाध्यात्मिकानां वाभीष्टपदार्थानामधिगत्यै मुख्यं साधनम्। आपामरमाप्राज्ञं च सर्वेषामभीष्टार्थाधिगतिरेनमन्तरेण नहि शक्या सम्पादयितुम्। अत एवोच्यते "इह जगति हि न निरीहदेहिनं श्रियः संश्रयन्ते।", "श्रेयांसि च सकलान्यनलसानां हस्ते नित्यसान्निध्यानि।", "सोद्योगं नरमायान्ति विवशाः सर्वसम्पदः।", "उद्योगिनः करालम्बं करोति कमलालया।", "उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः।" इत्यादि।

उद्योगशीलस्य हि जनस्य नानवाप्तं किञ्चिदवाप्तव्यमिह जगति। तथा चोक्तम्—

नात्युच्चशिखरो मेरुर्नातिनीचं रसातलम्।
व्यवसायद्वितीयानां नाप्यपारो महोदधिः॥

किञ्च। अप्राप्यं नाम नेहास्ति धीरस्य व्यवसायिनः। इति।

सत्यप्येवं "दैवे निरुन्धति निबन्धनतां[1] वहन्ति हन्त प्रयासपरुषाणि न पौरुषाणि", "दैवं फलति सर्वत्र न विद्या न च पौरुषम्", "न केवलं मनुष्येषु दैवं देवेष्वपि प्रभु" इत्यादिवचोभिर्विमूढधियोऽनेके प्रमादालस्यग्राहगृहीता दैवे पराग्वदनशालिनि[2]

१ निबन्धनतां कार्यं प्रति कारणताम्।

२ पराङ्मुख इत्यर्थः।

जाते न किञ्चित्कार्यं सम्पादयितुं शक्यते, तस्मिन्ननुकूले तु स्वयमेव तत्सिध्येदिति किं प्रयासपरुषेण पौरुषेणेति चिन्तयन्तो भीता इवोद्योगाद् दूरतः पलायन्ते। तैः खल्वेवमवधारणीयं यत्प्रथमं तु यद्दैवमिति कथ्यते तदपि पूर्वजन्मकृतकर्मण एव फलम्। द्वितीयं, दैवं हि प्रारब्धकर्मरूपं संचितकर्मरूपं वा नानन्तफलम्। स्वफलं निर्वर्त्य तत्स्वयं क्षयं याति। तत्र सर्वदैव क्रियमाणस्य कर्मण उपयोगोऽनपवादश्च।

किञ्च नैवं मन्तव्यं यद्दैवं पुरुषकारेण नान्यथा कर्तुं शक्यते। एवं चेत्क उपयोगोऽनिष्टवारणार्थं कृतानां दानजपोपवासादीनां शास्त्रीयाणां कर्मणाम्।

तत्रैते श्लोका भवन्ति—

न दैवमिति संचिन्त्य त्यजेदुद्योगमात्मनः।
अनुद्यमेन कस्तैलं तिलेभ्यः प्राप्तुमर्हति॥
पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते।
तस्मात्पुरुषकारेण विना दैवं न सिध्यति॥
यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत्।
एवं पुरुषकारेण विना दैवं न सिध्यति॥

किञ्च—

पुरुषार्थात्फलप्राप्तिर्देशकालवशादिह।
प्राप्ता चिरेण शीघ्रं वा यासौ दैवमिति स्मृता॥
पौरुषाद् दृश्यते सिद्धिः पौरुषाद्धीमतां क्रमः।
दैवमाश्वासनामात्रं दुःखे पेलवबुद्धिषु॥

प्राक्स्वकर्मेतराकारं दैवं नाम न विद्यते।
बालः प्रबलपुंसेव तज्जेतुमित शक्यते॥
मूढैः प्रकल्पितं दैवं तत्परास्ते क्षयं गताः।
प्राज्ञास्तु पौरुषार्थेन पदमुत्तमतां गताः॥
ये शूरा ये च विक्रान्ता ये प्राज्ञा ये च पण्डिताः।
तैस्तैः किमिव लोकेऽस्मिन् वद दैवं प्रतीक्ष्यते॥
(योगवासिष्ठात्)

वस्तुतस्तु मनुष्यस्य कर्मण्येवाधिकारः। कर्मफलं तु परमेश्वराधीनम्। अतस्तस्य चिन्तनमनधिकारचेष्टितमेव। अत एव श्रुतिवचोऽमृतम्—

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥

तच्चानूदितं भगवद्गीतासु—

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि॥

ततश्च कर्मणोऽनन्तरमेव न तु पूर्वं यत्फलमुपतिष्ठते तदेव दैवमिति मन्तव्यम्।

न केवलं श्रुतिस्मृतिप्रतिपादितत्वेनैवोद्योगस्य परमं माहात्म्यम्। किन्तु सूक्ष्मेक्षिकया समीक्षणे सर्वमेव चराचरात्मकं जगदुद्योगस्य परमोपयोगितां, सृष्टिकर्तुर्भगवतः परमेश्वरस्य सङ्कल्पानुकूल्यं च तस्य द्योतयति। तथा हि यत्रापि दृष्टिर्निःक्षिप्यते तत्रैव सर्वमप्याध्यात्मिकाधिदैविकाधिभौतिकं वस्त्वेकान्ततः स्वस्वनियतकर्मपालनपरं

संदृश्यते। तथा च निशाकरदिवाकरयोः पर्यायेणोदयोऽस्तमयनं च, सूर्यकरैरनवरतं रसादानं, सरितां सातत्येन सलिलप्रवाहः, पशुपक्षिणां सनियमं कर्मपरायणता, अस्मच्छरीरान्तर्गतानां हृदय-यकृत्प्रभृतीनां सर्वेषामप्यवयवानां सर्वदैव स्वस्वकर्मपरता च सर्वमेतदुद्योगपरतैव जीवनस्य प्रथमो नियमः, सृष्टिकर्तुर्भगवतश्च परमोऽभिप्राय इति ख्यापयति। कस्याविदितं यच्छरीरपरिश्रमेणै-वास्माकं तानि तानीन्द्रियाणि सुस्थानि सबलानि च भवन्ति। एवमेव समुचितपरिश्रमेणैव मानस्यस्तास्ताः शक्तयः सुपुष्टाः संवर्धिताश्च जायन्ते।

ततश्च मधुरमधुराक्षरो बीजमन्त्रोऽयमखिलसिद्धीनां य एष समुद्योगो नाम॥

---

( १३ )

## प्रायः शुभं च विदधात्यशुभं च जन्तोः सर्वङ्कषा भगवती भवितव्यतैव॥

दैवपुरुषकारयोः कस्याधिकं प्राबल्यमित्येष चिरन्तनो विवादः। केचित्खलु

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवं हि दैवमिति कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः।

किञ्च—

पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते।
तस्मात्पुरुषकारेण विना दैवं न सिध्यति ॥
न दैवमिति संचिन्त्य त्यजेदुद्योगमात्मनः।
अनुद्यमेन कस्तैलं तिलेभ्यः प्राप्तुमर्हति ॥

इत्यादिपक्षमवलम्बमाना दैवमुपेक्ष्य पुरुषकारस्यैव माहात्म्यमुद्घोषयन्ति।

अपरे पुनरैहिकपुरुषकारकारणं विनैव जन्मत एव कश्चित्सुखी कश्चिद् दुःखीत्यादिप्रकारं नानाविधभेदभावं पश्यन्तः, स्वल्पेनैव परिश्रमेण कश्चिन्महत्फलमासादयति कश्चित्पुनरतिपरिश्रमं कृत्वापि विफलमनोरथः केनचिदंशेनैव वा सफलमनोरथो भवतीत्यादि वैषम्यं चानुभवन्तो दैवस्यैव प्राधान्यमिति सिद्धान्तयन्ति। तन्मतमनुसृत्यैव गीयते—

गजभुजङ्गमयोरपि बन्धनं शशिदिवाकरयोर्ग्रहपीडनम्।
मतिमतां च विलोक्य दरिद्रतां विधिरहो बलवानिति मे मतिः ॥

अपि च—

भग्नाशस्य करण्डपीडिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
लोकाः पश्यत दैवमेव हि नृणां वृद्धौ क्षये कारणम् ॥

तमेतमुत्तरपक्षमाश्रित्यैव कस्यचिद्विपश्चितः सुभाषितमिदम्—

प्रायः शुभं च विदधात्यशुभं च जन्तोरित्यादि ।

कस्यैतदविदितं यदत्रापातरमणीये क्षणभङ्गुरे संसारेऽस्थिरे सुखिदुःखिनोः सुखदुःखे । क्षणेनैव जनो दुःखसागरे प्रक्षिप्यते, क्षणेन च सुखसम्पत्तिमासाद्य सुखी संजायते । योऽद्य मोदमानस्तिष्ठति अन्येद्युः सहसैव तस्योपरि महद् दुःखमापतति । चिराय महता दुःखेन कथंचित्कालमतिवाहयन्तो बहवोऽकस्मादेव सुखसम्पदमासादयन्ति । वस्तुतो नैवैकान्ततः कस्यचिद् दुःखाधिगतिः सुखसमागमो वाकर्ण्यते । सर्वेषामपि ताभ्यां समागमोऽस्थिरः क्षणभङ्गुरश्च ।

तदेतत् शुभाशुभयोरकस्मादेव समुपस्थानं क्षणभङ्गुरत्वं च न केवलं साधारणमनुष्याणां विषये अद्यत्व एव वा दरीदृश्यते, किन्तु महामहिमशालिनामितिहासपुराणेषु प्रख्यातयशसां महतामपि विषये तयोस्तादृश्येव स्थितिः । तथा हि महाभागो राजराजो नलः प्रथमं पितृपितामहपरम्पराप्राप्तां राज्यसम्पत्तिमासाद्य नितरां शुभमन्वभूत् । तदनन्तरं च सहसैव स्वसम्पत्तिविरहितो महत्या दुःखश्रेण्या सङ्गतोऽरण्यादरण्यानीं भ्राम्यंश्चिराय क्लेशमतिशयमासिषेवे । मुहुरपि च तामासाद्य पूर्ववदेव सुखं भेजे । पाण्डवानां च महानृपतिसूनूनामपि क्रमेण शुभाशुभसमागमोऽतिरोहित एव ।

तदेतादृशं शुभाशुभयोरस्थैर्यं सहसैव च पुरुषकारादिसाक्षात्कारणमन्तरेणैव तयोरुपस्थितिः किंकृते इति विचारे काचिल्लोकोत्तरा

शक्तिरेव पृष्ठत इवागत्य कार्यं निर्वाहिकेति सपदि मनसि समायाति। सैव लोकोत्तरा शक्तिर्भवितव्यता भाग्यं विधिर्नियतिर्दैवमित्यादिशब्दैरभिधीयते। दृष्टप्रभावापि सा स्वयं प्रत्यक्षतो न दृश्यत इत्यत एव कैश्चिददृष्टनाम्नापि स्मर्यते।

सा चेयं भगवती भवितव्यता देवी महाशक्तिसंपन्ना। एतया हि समाक्रान्तं समस्तं विश्वम्। भुवनत्रयेऽप्यनवरुद्धमकण्टकमस्याः शासनम्। गिरिगुरुगर्तदुर्गमे कान्तारे वा, विविधव्यालकुलसमाकुले पाताले वा, अगाधजलसंचारे सागरेऽपि वा स्थितो जनो न खलु नास्या दृष्टिगोचरः। न केवलमल्पशक्तियुक्ता मानवा अन्येऽवराः प्राणिन एव वास्याः शासनमनुवर्तन्ते, किन्तु सर्वमेव जडचेतनात्मकमाब्रह्माण्डं जगदस्या वशे वर्तते।

तामेनामघटितघटनापटीयसीं भगवतीं भवितव्यतामेवोद्दिश्योक्तं केनापि—

कांश्चित्तुच्छयति प्रपूरयति वा कांश्चिन्नयत्युन्नतिं
कांश्चित्पातविधौ करोति च पुनः कांश्चिन्नयत्याकुलान्।
अन्योन्यं प्रतिपक्षसंहतिमिमां लोकस्थितिं बोधय-
न्नेष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधिः॥

अपि च—

अवश्यंभाविनो भावा भवन्ति महतामपि।
नग्नत्वं नीलकण्ठस्य महाहिशयनं हरेः॥

किञ्च—

पुरुषः पौरुषं तावद्यावद्दैवं तु सम्मुखम्।
विपरीतगते दैवे पुरुषो न च पौरुषम्॥

तदत्र स्मर्यतामखिलमेतद्विधिविलसितमिति पश्यतः कस्यापि कवेरिदं सुभाषितम्—

प्रायः शुभं च विदधात्यशुभं च जन्तोरित्यादि॥

---

( १४ )

## धैर्यम्

इह खल्वव्याहतपरिवृत्तिशालिनि जगति कस्यापि सर्वदैकावस्थायामेवावस्थितिर्नितरामसम्भवा। रात्रिदिवसयोरिव सुखदुःखयोः पर्यायेण समुपस्थितिः कस्याविदिता। महाशक्तिसम्पन्ना लोकोत्तरप्रभावसंयुता अपि सुखदुःखपर्यायनियममतिक्रमितुमशक्ताः। तथा चोच्यते—

चक्रवत्परिवर्तन्ते दुःखानि च सुखानि च।

किञ्च। कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण। इति।

ततश्चैतन्नियमानुसारेण सङ्कटेषु समुपस्थितेपु मनुजो धैर्यमवलम्ब्य—

कदर्थितस्यापि हि धैर्यवृत्ते-
र्न शक्यते धैर्यगुणः प्रमार्ष्टुम्।

अधोमुखस्यापि कृतस्य वह्ने-
नाधः शिखा यान्ति कदाचिदेव ॥
छिन्नोऽपि रोहति तरुः क्षीणोऽप्युपचीयते पुनश्चन्द्रः ।
इति विमृशन्तः सन्तः सन्तप्यन्ते न ते विपदा ॥
त्याज्यं न धैर्यं विधुरेऽपि काले
धैर्यात्कदाचित्स्थितिमाप्नुयात्सः ।
जाते समुद्रेऽपि हि पोतभङ्गे
सांयात्रिको वाञ्छति तर्तुमेव ॥

इत्यादिवचोऽनुरूपमहतोत्साहो दुःखोदधेः पारङ्गन्तुं पारयति ।

परं सङ्कटेषु समुपस्थितेष्वेव धैर्यस्यावश्यकतेति न मन्तव्यम् । प्रत्येकाभीप्सितकार्यस्य विशेषतश्च विशेषपरिश्रमापेक्षावतः संपादनाय, तत्सिद्धौ विविधविघ्नबाधाबाधनायापि च धैर्यस्य महत्युपयोगिता । प्रत्येककार्यारम्भात्पूर्वं हि तस्य विचारस्य प्रादुर्भावोऽस्माकं मनःस्वावश्यक एव । विचारस्यैवान्तःसमुद्भूतस्य कालान्तरेण कार्यरूपेण परिणतिर्भवति । कस्यापि विचारस्य कार्यरूपेण परिणत्यै च प्रायोऽनवरतपरिश्रमस्य नानाविधसामग्रीसंयोजनस्य नैकविधप्रत्यूहनिवारणस्य चापेक्षा भवति । सर्वं चैतद्धैर्येणैव साध्यम् । धैर्यधना हि मानवाः

यो यमयर्थं प्रार्थयते यदर्थं घटतेऽपि च ।
अवश्यं तदवाप्नोति न चेच्छ्रान्तो निवर्तते ॥

इत्युक्त्यनुकूलमाचरन्तो बहुलविघ्नस्यापि प्रारब्धस्य सङ्कल्पितस्य वा कार्यस्यान्तं गच्छन्ति । ये पुनर्धैर्येण रहिताः; प्रथमं तु ते

उत्थायोत्थाय लीयन्ते दरिद्राणां मनोरथाः ।

इत्यनुसारं विघ्नभयेन किञ्चित् कार्यमेव नारंभन्ते । आरब्धकार्या वा स्वल्पेऽप्यन्तराये समुपस्थिते तस्माद्विरमन्ति । तथा चोक्तम्—

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारभ्य तूत्तमजना न परित्यजन्ति ।। इति ।

धैर्यमाश्रित्यैव हि एको निर्धनः कृषीवलो दुःसहसहस्रकिरणोष्णातापं, धारासारेण पतन्तीं वृष्टिं, शैत्यमुष्णत्वं चाविगणय्य रात्रिन्दिवं चिराय कृतभूरिपरिश्रमः कृष्युपयोगिसामग्रीसंयोजनाय स्वसर्वस्वमपि विक्रीय बीजानि क्षेत्र उप्त्वा सफलमनोरथो भवितुमर्हति । अनेकवारं च दैवदुर्विपाकेण नष्टेष्वपि शस्यक्षेत्रेषु स्वव्यापारान्नहि निवर्तते ।

एवमेव धैर्यसहाय एवैको विद्यार्थी विसृष्टविषयभोगतृष्णो ब्रह्मचर्यमास्थितः शीतोष्णादिद्वन्द्वतितिक्षुर्भूत्वा चिरकालेनैवाधिगम्यां विद्यामुद्दिश्य अविरतमध्ययनतत्परो भवति । नैकवारमनुत्तीर्णपरीक्षोऽन्यथा वा कथञ्चिदसफलमनोरथो नैव स्वनिश्चितोद्देश्यसम्पादनाद्विरमति ।

एवमेवान्यान्येषु मानवीयव्यापारेषु सिद्धिर्धैर्याधीनैव । अद्यत्वे प्रसिद्धानामितिहासपुराणेषु च वर्णितानां लोकोत्तरचरितानां महा-

पुरुषाणां यन्माहात्म्यं वस्तुतस्तद्रहस्यमेतद् धैर्यमेव। धैर्येणैव ते विघ्नराशीन् समुत्तीर्य दुरधिगममभीष्टमासाद्य लोकेषु लोकोत्तरां कीर्तिमासादितवन्तः।

ततश्च धैर्यमन्तरेण प्रथमं तु कस्मिन्नपि व्यापारे विशेषतश्च परिश्रमापेक्षावति प्रवृत्तिरेव दुर्लभा स्यात्। प्रवृत्तावपि स्वभावतोऽनायासेनैवोपस्थितासु बाधासु तासां वारणप्रयासोऽभीष्टार्थसंपादनादविरतिश्च नहि कथमपि सम्भाव्यते।

किं बहुना। धैर्येणैव मानवः सत्स्वपि महत्सूपरोधकारणेषु निजकर्तव्यपराङ्मुखो न भवति। प्राणैरपि सम्पद्येत वियोगः, परं नैव साहसं परित्यजति। सपदि राजलक्ष्म्यामपि विलेतुमुपस्थितायां सङ्कटाकीर्णमपि स्वकर्तव्यमेव कर्म सर्वश्रेयस्करं मन्यते। तथा चोच्यते—

पतति व्यसने दैवाद्दारुणाद् दारुणात्मनि।
संवर्मयति वज्रेण धैर्येण महतां मनः।

तद्यथा श्रीरामचन्द्रादयो नृपचन्द्रा धैर्येणैव सहस्रश आपत्स्वापतितासु स्वाभिप्रेतानां रावणवधादीनामनन्यकर्तव्यानां कर्मणामन्तमवापुः। अन्यैः सोढुमशक्या अप्युपस्थिता आपदः सोढाः, परं नैव कर्तव्यपराङ्मुखा बभूवुः। तदेतदखिलं धैर्यमाहात्म्यमेव।

तत एतद् धैर्यं सकलश्रेयःसम्पादकम्। ऐहिकामुष्मिकं सर्वविधं सुखं धैर्येण मानवा आसादयितुं शक्नुवन्ति। एतदेव धर्मानुष्ठाने महत्साधनम्। धैर्येणैव मनुजो धर्मपथादविच्युत उत्तमोत्तमां गतिमधिगन्तुमर्हति। सर्वमेतत्समालोच्य जनैः सर्वथैव धैर्यधारणे यत्नो विधेयः।

---

( १५ )

# इन्द्रजालमञ्जूषा

महतीमपि श्रियमवाप्य विस्मयः
सुजनो न विस्मरति जातु किञ्चन!

( १ )

स खल्वासीत् साधारणसमितेर्वासरः। प्रधानामात्यप्रमुखा महत्पदमधिष्ठिता लघुपदभाजस्तथान्ये कार्यकर्तारः सर्वेऽप्यासन्नुपस्थिताः।

आदिष्टमासीद् भूभुजा—"अद्यानिवार्यः प्रवेशः सर्वसाधारणस्य। यः कोऽपि समेत्यास्थानमण्डपम् अभिद्योणिपतिं स्वमनोऽनुरूपमावेदयतु वाञ्छितम्। नहि कश्चन परिचारकोऽधिकरणमण्डपं प्रविशन्तमवरोद्धुं क्षमः। सर्वोऽपि स्वमनस्तापम्-भिदधातु। यतो विशां त्राणाय प्रकल्पेऽहम्" इति।

पराभूतानेकनृपतिमण्डलपरिवृतः, तारागणैरिव भगवान् राकापतिः, गोमेदहीरकादिरत्नकलापगुम्फितमध्यास्ते स्म हैममासनमतुलवीर्यो महामतिर्महीपतिः। दक्षिणपार्श्वे प्रधानामात्यो वामपार्श्वे च चमूपतिरासन्दीमधितष्ठतुः। अन्येऽपि सानुक्रमं स्वं स्वमासनं भेजिरे।

यथावारं सर्वेऽपि प्राथिनो महीभुजः पुरो निजावेदनमुदीरयामासुः। स च सस्मितमनायासञ्च यथार्थं न्यायमनुतिष्ठंस्तांस्तोषयामास। शुभेऽहनि तस्मिन् सुबहूनभिनन्दयन्ननेकेषामाशिषां धन्यवादानाञ्च भाजनं बभूव भूपः।

( २ )

नातिदूरे नृपासनान्मलिनाम्बरः कश्चिदेको मानवो नरपतेराननने दत्तदृष्टिस्तस्थौ। सोऽपि महीपतेरभिमुखं साधारणसमितौ किञ्चिदावेदयितुं समागत आसीत्; परमास्थानमण्डपस्यादृष्टपूर्वामनेकाभरणपरिच्छदैर्भास्वरां सुषमासम्पत्तिमवलोक्य चकितचकितो नैजमावेदनमपि विसस्मार। नहि क्षितिभर्तृसन्निधे स यातः, नापि किमपि स प्राथितवान्।

प्रसङ्गवशाद्धरापतिः प्रधानामात्यं सम्बोध्य ऊचे—"भद्र! जगतो यात्रायां सुगमो निर्वाहाभ्युपायः कस्मादवगन्तव्यः"। इति

प्रधानसचिवः सानुनयं भक्तिपुरस्सरं चाह—"देव! स्त्रियाः" इति।

तत्क्षणमेव सवेशे समासीनस्य तस्यानिर्णिक्त[1]वाससोऽपावृतमास्यम्। सप्रश्रयं शनैश्चासाववादीत्—"सती पतिव्रता चेद्वर्तते स्त्री, यतस्तस्याः सतीत्वाभावे पत्युरापत्परम्परा अवश्यं भवेयुः" इति।

धराधिपतिरप्येतदशृणोत्। मुहुरपि च स सस्मितमन्वयुङ्क्त महामात्यमेव—"आर्य! संसारे किमत्यधिकमुपयुज्यते?" इति।

प्रत्युत्तरितं मन्त्रिणा—"देव! दयापाथोनिधे! धनमेवास्मिन् विषयेऽन्यानि वस्तून्यतिशेते" इति।

भूयोऽपि—"धनं चेत्करगतं भवति, मनुजश्च यदि तदुपयोगरहस्यं वेत्ति। अन्यथा तद्भावाभावौ न विशिष्येते" इति स एव मलिनवासाः शनकैः सान्तस्तोषं प्रौढमुवाच।

महीपतिस्तद्वचोभिरतिशयेन तृप्तस्तदभिमुखं सामोदमैक्षत। अनन्तरं च तमात्मसन्निधौ सादरं समाहूय प्रावोचत्—"को भवान्? किंप्रयोजनश्चात्र मदन्तिके समागमनम्? सर्वोऽपि स्वमनोऽनुरूपमस्मत्पुरो निवेद्य स्ववाञ्छितं लब्धवान्, परं नहि भवता किमपि समुदीरितं साम्प्रतं यावत्। किमत्र निदानम्?" इति।

एवमनुयुक्तो नरपतिपुङ्गवेन—"विदधातु परेशोऽरिष्टतातिं[2] भवताम्। देव! वसुन्धरापते! अहमतिदरिद्रः, परं विद्वान्,

---

१ "निर्णिक्तं शोधितं मृष्टम्" इत्यमरः।

२ अरिष्टस्य शिवस्य (= कल्याणस्य) भावमित्यर्थः।

भवतां राज्याधिवासी ब्राह्मणः, पुस्तकान्येव मे धनम्, निजभार्या-हेतोश्चात्रागतं वेत्तु भवान् माम्। सा हि मे प्राणेभ्योऽपि प्रेयसी धर्माचारवती सती भार्या। सार्द्धं तया सानन्दं जीवनकालकला अतिवाहयतो निजपुस्तकस्वाध्याये दिवानिशं रममाणस्य धर्म्यां साध्वीमवस्थां परिषेवमाणस्य नाद्य यावत् कदाचिदप्यवकाशं लब्धवती मे मानसे वित्तैषणा लौकिकसुखैषणा वा। गतवासरात् सा तीव्रेण कठिनामयेन ग्रस्ता। नहि मदन्तिके पानभोजनाय किञ्चित्, न चाप्यौषधपरिषेवणसामर्थ्यम्। अतो भवतां सविधमुपस्थितोऽस्मि। ततः साहाय्यदानेन देवो मामनु-गृह्णातु, स्थापयतु च परलोकेऽपि साम्राज्यम्। सततं पुनर्निजविद्यया बुद्ध्या च भवतः सेवायै सन्नद्धो भविष्यामि। अग्रे देवः प्रमाणम्।''—इत्येवं स सविनयमावेद्य विरराम।

क्षितिपतिस्तस्य सूनृतां वाचं निशम्य तदानने दृशं पातयामास। प्रख्यापयतः स्म हि तस्य चक्षुषी अनुपमं तद्वैशारद्यम्

अथ महीपतिः प्रधानामात्यमादिदेश—"अद्यप्रभृति इम-महं स्वपरिषदः सभास्तार[१]पदे नियोजयामि। भवद्भिश्चास्य निखिला आवश्यकताः सम्पूरणीयाः" इति।

---

१ "सभासदः सभास्ताराः सभ्याः सामाजिकाश्च ते" इत्यमरः॥

अचिरादेव नृपादेशमन्वतिष्ठत् सचिवः। समुपस्थितो भार्यां चिकित्सितुं तद्गेहेऽगदङ्कारः[1]। सा चाचिरादेव निरामयं भेजे।

स चापि मनीषी विप्रो नियमेन राजपरिषदं सभास्तारपदेनालञ्चकार। ततः प्रभृति न खलु कदाचित् सोऽदृश्यत पूर्वमिव मलिनाम्बरः। परमासीदच्छश्लक्ष्णवासाः। तथापि स पूर्ववदेव स्वाध्यायनिरतोऽभूत्। राजपरिषत्कार्याल्लब्धावकाशः शास्त्रचिन्तन एवासीत् सततं व्यासक्तमनाः।

स हि क्षमायां क्षमया[2], धैर्ये च हिमवता सदृशः, परमभागवतः सर्वेषामचिरादेव समादरभाजनं बभूव। महीपतिश्च सर्वदैव समादरेण तं सुबहु सत्कृतवान्। तस्य गेहिन्यपि पूर्वं यथा दारिद्र्यावस्थायां देवभावनया तं समर्च्चयामास, तथैव तदानीं सम्पत्तिसद्भावेऽपि महात्मभावनया सम्भावयामास। नूनमैश्वर्यसद्भावेऽपि पूर्ववदेव सहजसरलस्यापरिवर्तितहृन्मस्तिष्कस्य तस्य जीवनयात्रायां केवलं शरीरवसनेष्वेव समदृश्यत परिवृत्तिलवः, न पुनराचारे स्वभावे वा।

तथा खल्वेषोऽत्युदारैः स्वगुणैर्नरपतेर्मनो जग्राह यत् क्षोणिपतिरेतस्य निखिलविद्यासु दाक्षिण्यं, सकलकलासु च वैचक्षण्यमालोक्य निरतिशयं प्रसन्न उत्तरोत्तरे पदे स्थापयन् क्रमेणामात्यपदे तं नियोजितवान्। समासाद्य तमधिकारं सततं स्वकर्तव्यस्य

१ अगदङ्कारः चिकित्सकः।

२ क्षमा पृथिवी।

कर्मणः सत्यभावेन तत्प्रवणतया चानुष्ठानेन समधत्त पदमाशु स प्रजाजननचेतःशिलापट्टेषु ।

( ३ )

राज्ञोऽन्येऽधिकारिणः संवीक्ष्य तस्याभ्युन्नतिं दिने दिने चाभिवृद्धिमीर्ष्याकलुषितचेतसोऽचिन्तयन्—अहो, अयं दरिद्र एवं गुरुपदमारूढो यदस्मानपि शास्तीति !

आश्चर्यम्, अपरित्याज्यो हि दुःस्वभावो दुर्मतीनाम् !

ते हि तद्विरुद्धं कर्तुं व्यवसिता मिथो मन्त्रयाञ्चक्रिरे । अन्ततस्तेषामेको रहसि कदाचन लब्धावसरो नरपतिमेवमुदीरयामास "क्षमापते ! देव ! अयमतीव मायिको[१] विप्रः । इन्द्रजालेन ह्यनेन वशीकृतो भवान् । एवं हि जनप्रवादः—यद्भवदभिमुखमागमनात्पूर्वमयं नियतमेव निजगेहप्रकोष्ठे प्रविशति । स च सततमनपावृतद्वारको वर्तते । तत्रास्ते पुनरेका रजतमयी लघ्वी मञ्जूषा । इन्द्रजालमयी च सा । तामुद्घाट्य किञ्चित्तान्त्रिककृत्यमनुष्ठायैवायं भवतामभिमुखमायाति—इति । किञ्च न भवति यद्ययं मायावी, कथङ्कारमन्यथा झटित्येवामात्यपदमारूढः । देव ! सावधानैर्भाव्यं भवद्भिः । नहि जात्वेतादृशो दरिद्रो विशिष्टं कारणमन्तरेण सहसैतामवस्थामाप्तुं

१ मायिको मायावी ।

शक्नोति। नूनमेतस्या मञ्जूषाया एव विलसितं यद्भवानप्येतद्वश्यः समजनि। झटित्येवायममात्यपदमारूढः, न ज्ञायते किमग्रे भावि? अतो मायामञ्जूषां प्रति सततमेव सावधानस्तिष्ठतु भवान्" इति।

एवमाकर्ण्य तस्य वाग्जालं भूपः प्रथमन्तु सर्वमेतज्जाड्य-हेतुकं वा ईर्ष्याकारितं वा इत्येवामन्यत। परं यदानेकैरधिकारिभिः स्ववंशसम्भूतैरपि च बन्धुभिर्बहुवारमेवं भणितस्तदा कश्चित्सन्देहलवस्तस्मिन् विषये तस्य मनसि प्रादुर्भूतः। सत्यमेवोच्यते—

सुजनानामपि हृदयं पिशुनपरिष्वङ्गलिप्तमिह भवति।
पवनः परागवाही रथ्यासु वहन् रजस्वलो भवति॥

एवमेव गच्छति काले कस्मिंश्चिद् वासरे सततमेवं मिथ्यावचोभिः स्वकर्णमापूरयतस्तानखिलान् कर्णेजपान्[१] समाहूय—"नित्यं युष्माकं वचांसि शृण्वन्नहं सञ्जातोऽस्मि खिन्नचेताः। अद्य तद्गृहमेत्य सर्वेषामभिमुखं तामिन्द्रजालमञ्जूषामीक्षिष्ये" इत्येवमब्रवीद् भूपतिः। जाताः सर्वेऽपि सज्जाः। राजा च समादाय तानखिलान् साकमात्मना समुपस्थितस्तस्यामात्यस्य गेहम्। स च बहुमानपुरस्सरं धन्यंमन्यः स्वागतमतिमात्रं महीपतेरन्वतिष्ठत्।

---

१ "कर्णेजपः सूचकः स्यात्" इत्यमरः।

अथ तेन सत्कृते समुपविष्टे च बहुमूल्यासनोपरि राजनि अन्येषु च यथायोग्यमासनमधिष्ठितेषु तयो राजमन्त्रिणोरेवमुक्ति प्रत्युक्तिरूप संवाद संववृते—

**राजा**—आर्य ! साम्प्रतमेव मया सार्द्धमास्थानमण्डपमेतु भवान् । अस्ति कस्मिंश्चिद् विषये मन्त्रणीयम् ।

**मन्त्री**—देव ! प्रसीदति चेद्भवास्तर्हि रहसि किञ्चित् क्षण निर्धार्य भवतां पुरस्तादुपस्थितो भवामि ।

[ सर्वेऽप्येतदाकर्ण्य साभिप्राय परस्परमिङ्गित विदधु । ]

**राजा**—मन्त्रिन् ! कार्यस्य गुरुतया सपदि गन्तव्यमित्येव मदीय आदेश ।

**मन्त्री**—[ सवितर्काशङ्क सविनयञ्च ] महाराज ! क्षण यावद्रहसि गन्तुमनुजानातु ।

**राजा**—[ विविधविकल्पेषु निमज्जन् ] रहसि किंनिमित्त गमनम् ?

**मन्त्री**—देव ! क्षण यावदेव प्रकोष्ठं गत्वा साकमत्रभवद्भि परिषत्प्रासाद यामि ।

[ सर्वेऽप्यधिकारिण पुलकितवदना बभूवु । ]

**राजा**—अस्तु । गच्छतु प्रकोष्ठे, पर मद्द्वितीयो भवान् ।

**मन्त्री**—( सभयम् ) नरपते ! मा वाक्षीद् भवान् कष्टम् । नैष प्रकोष्ठो भवतो गमनाय समुचितः । यत इहास्ते मामकीना मुख्या सम्पद् । सा च भवतो दृष्ट्यातिलध्वी ।

**राजा**—( नूनमयमैन्द्रजालिक इत्यवितथो लोकप्रवाद इति मन्यमानः ) मन्त्रिन् ! नूनं मयापि नियतमेव प्रकोष्ठाभ्यन्तरे गन्तव्यम् ।

**मन्त्री**—भवतु । यथाभिरोचते श्रीमते ।

अथ राजा सहान्यैर्निजाधिकारिभिरन्तः प्रविवेश । तत्र हि प्रकोष्ठे नासीदासनम्, नापि काचिदलङ्करणसामग्री, न चापि बहुमूल्यं किञ्चिदन्यत् । केवलं भित्तिनिखातालयेषु पुस्तकान्यासन् संस्थितानि । एकत्र चत्वारो वेदाः । एकत्र ब्राह्मणानि । अन्यत्र ह्युपनिषन्निबन्धाः । अपरत्र नाटकाख्यानकथादर्शनप्रभृतिप्रबन्धाः । मध्येभागं चैका रजतमयी मञ्जूषा स्थितासीत् । अनुयायिभिः ससङ्केतं बोधितो राजा तदुद्घाटनाय समादिष्टवान् । राजादेशानुसारं च यावदेव सोद्घाट्यते तावदेव स तस्यां मलिनानि छिन्नानि च चीवराणि वीक्ष्य साश्चर्यं सभयं चाह—किमेतत् ?—इति ।

**मन्त्री**—देव ! पुरातनानीमानि मे दारिद्र्यावस्थाया वासांसि; एतदर्थञ्च सुगूढं संरक्षितानि मया यदहमहरहो वीक्ष्यैतानि पुरा-

तनीं मामकीनामवस्थां स्मरेयम्। कदापि च न विस्मरेयं पुरा कीदृशोऽहमासमिति। नित्यमेव सभायामुपस्थानात् प्राक् त्तणमहमेतानि पश्यामि। कदाचित् परिदधाम्यपि। कीदृश आसमहम्? किं भवत्यैश्वर्ये? किं जायते दारिद्र्ये? केवलमेतावत्स्मरणार्थमेव सयत्नमेतानि स्थापितानि।

सत्यमयमेवाभ्युपायो येन "त्तणत्तयिणि सापाये भोगे रज्यन्ति नोत्तमाः"; सम्पत्तिसद्भावेऽपि च "कोऽर्थान् प्राप्य न गर्वितः" इतिसाधारणनियममुल्लङ्घ्यानुत्सेक[1]स्तेषां दृश्यते। एतादृशानेवोद्दिश्य महामतेर्भर्तृहरेः सुभाषितम्—

अनुत्सेको लक्ष्म्यां निरभिभवसाराः परकथाः
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम्॥ इति॥

( ४ )

राजा साश्चर्यं सस्नेहञ्च तद्वचो निशम्य सभायामेत्य सर्वांस्तान् पिशुनांस्तिरश्चक्रे भर्त्सयामास च। अनन्तरं च स्वबान्धवानब्रवीत्। उदतेजयन् हि मां भवन्तः सर्वदा तत्ताडनाय। अद्य दास्याम्यहं तस्मै दण्डम्। तच्चैतद् यदद्यप्रभृति स मे प्रधानामात्यः सञ्जातः। अत ऊर्ध्वञ्च यदपि किञ्चित्स आदिशति तन्मदीय एवादेश इति कृत्वा सर्वैरङ्गीकर्तव्यम्।

---

१ उत्सेको गर्वः।

तदत्रैतद् हृदयम्। उन्नतिपदाभिलाषिभिः स्वीया पूर्वावस्था नहि विस्मर्त्तव्या। अथवा, एतदेव महात्मनां लक्षणं यत्—

धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः।
प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः॥

तादृशानेवाभिलक्ष्य गीयते—

ये दीनेषु दयालवः स्पृशति यानल्पोऽपि न श्रीमदो
व्यग्रा ये च परोपकारकरणे हृष्यन्ति ये याचिताः।
स्वस्थाः सन्ति च यौवनोन्मदमहाव्याधिप्रकोपेऽपि ये
तैः स्तम्भैरिव सुस्थितैः कलिभरक्लान्ता धरा धार्यते॥

इति।

---

( १६ )

## पुरुषार्थचतुष्टम्

इह चत्वारः पुरुषार्था भवन्ति तद्यथा अर्थः कामो धर्मो मोक्षश्चेति। **तत्रार्थ एव प्रधानः पुरुषार्थ इति केचिन्मन्यन्ते।** अर्थनिचयकलितः पुरुषो लोके जराजीर्णशरीरोऽपि उन्मत्तपञ्चविंशतिकतरुणनराकारः प्रतीयते। अतिकातरहृदयोऽपि महासमरसङ्घट्टनिर्व्यूढ[1]साहसोऽतुलबलपराक्रम इति गीयते। सिद्ध-

---

१ निर्व्यूढः प्रवृद्धः।

मातृकापाठमात्रशक्तिविकलबुद्धिरपि समस्तशास्त्रार्थावगाहनचतुरमतिरिति बन्दिभिः पठ्यते। कुरूपतया नितरामदर्शनीयोऽपि चाटुकरणपरायणैः सेवकनरैरवजितमकरकेतु[1]रिति हेतुभिः स्थाप्यते। अविद्यमानप्रभावगन्धोऽपि समस्तवस्तुसाधनप्रवणप्रभावोऽयमिति सर्वत्र तद्धनलुब्धबुद्धिभिः प्रकाश्यते। जघन्यघटदासिकातनयोऽपि प्रख्यातोन्नतमहावंशप्रसूतोऽयमिति प्रणयिजनैः स्तूयते। आसन्नमकुलबन्धुतासम्बन्धविकलोऽपि परमबन्धुबुद्धया समस्तलोकैर्गृह्यते। तदिदं समस्तमर्थस्य भगवतो विलसितम्।

किञ्च—समाने पुरुषत्वे समसंख्यावयवाः पुरुषा यदेते दृश्यन्ते लोके, यदुत एके दायका अन्ये तु याचकाः, तथैके नरपतयोऽन्ये पदातयः, तथैके निरतिशयशब्दाद्युपभोगभाजनम् अन्ये तु दुष्पूरोदरदरीपूरणाकरणेऽप्यशक्ताः, तथैके पोषका अन्ये पोष्या इत्यादयो निःशेषविशेषा निजसद्भावासद्भावाभ्यामर्थेनैव सम्पाद्यन्ते। तस्मादर्थ एव प्रधानः पुरुषार्थः। अत एवोच्यते—

> अर्थाख्यः पुरुषार्थोऽयं प्रधानः प्रतिभासते।
> तृणादपि लघुं लोके धिगर्थरहितं नरम्॥

**काम एव प्रधानः पुरुषार्थ इत्यन्ये मन्यन्ते। तथा हि।**

---

१ मकरकेतुः कामः।

न खलु ललितललनावदनकमलमकरन्दास्वादनचतुरचञ्चरीक-[१] ताचरणमन्तरेण पुरुषः परमार्थतः पुरुषतां स्वीकुरुते। किञ्च, अर्थ-निचयस्य कलाकौशल्यस्य धर्मार्जनस्य जन्मनश्च काम एव वस्तुतः परमं फलम्। कामविकलैः पुनः किमेतैः सुन्दरैरपि क्रियते। अन्यच्च। कामासेवनप्रवणचेतसां पुरुषाणां तत्स-म्पादका धनकनककलत्रादयो योग्यतया स्वत एवोपतिष्ठन्ते। "सम्पद्यन्ते भोगिनां भोगाः" इति गोपालबालाबलादीनां सुप्र-सिद्धमिदम्।

अपि च—

स्मितं न लक्षेण वचो न कोटिभि-
र्न कोटिलक्षैः सविलासमीक्षितम्।
अवाप्यतेऽन्यैरदयोपगूहनं
न कोटिकोट्यापि तदस्ति कामिनाम्॥

अतः किन्न पर्याप्तं तेषाम्। तस्मात्काम एव प्रधानः पुरुषार्थः। अत एवाभिहितम्—

कामाख्यः पुरुषार्थोऽयं प्राधान्येनैव गीयते।
नीरसं काष्ठकल्पं हि धिक्कामविकलं नरम्॥

धर्म एव प्रधानः पुरुषार्थ इत्यन्ये मन्यन्ते। तथा हि।

---

१ चञ्चरीको भ्रमरः।

तुल्ये जीवत्वे किमिति एके पुरुषाः कुलक्रमागतद्रविणोपचितेषु गुरुतरचित्तानन्दसन्दर्भधामसु निःशेषजगदभ्यर्हितेषु कुलेषूपजायन्ते, किमिति चान्ये पुरुषा एव धनगन्धसम्बन्धविकलेषु समस्तदुःखभरभाजनेषु सर्वजननिन्दनीयेषु कुलेषूत्पद्यन्ते।

तथा किमिति एकजननीजनकतया सहोदरयोर्यमलयोश्च द्वयोः पुरुषयोरेष विशेषो दृश्यते यदुत एकस्तयोर्मध्ये रूपेण मीनकेतनायते, प्रशान्ततया मुनिजनायते, बुद्धिविभवेनाभयकुमारायते, गम्भीरतया क्षीरनीरेश्वरायते, स्थिरतया सुमेरुशिखरायते, शौर्येण धनञ्जयायते, धनेन धनदायते, दानेन कर्णायते, नीरोगतया वज्रशरीरायते, प्रमुदितचित्ततया महर्द्धिविबुधायते। ततश्चैवं निःशेषगुणकलाकलापकलितोऽसौ सकलजननयनमनोनन्दनो भवति। द्वितीयः पुनर्बीभत्सदर्शनतया भुवनमुद्वेजयति, दुष्टचेष्टतया मातापितरावपि सन्तापयति, मूर्खशेखरतया पृथ्वीं विजयते, तुच्छतयार्कशाल्मलीतूलमतिशेते, चपलतया वानरलीलां विडम्बयति, कातरतया मूषककदम्बकमधरयति, निर्धनतया रौरवाकारमाबिभर्त्ति, कृपणतया ढक्कजातीयानतिलङ्घयति, महारोगभराक्रान्ततया विक्लवं क्रन्दमानो जगतोऽप्यात्मनि कारुण्यमुत्पादयति, दैन्योद्वेगशोकाद्युपहतचित्ततया घोरमहानरकाकारं सन्तापं स्वीकुरुते। ततश्चैवं समस्तदोषभाजनतया लोकैः पापिष्ठो दुष्टोऽयमिति निन्द्यते।

अन्यच्च—द्वयोः पुरुषयोरनुपहतसत्त्वबुद्धिपौरुषपराक्रमयोर्निःशेषविशेषैस्तुल्यकक्षयोरर्थोपार्जनार्थं प्रवर्तमानयोः किमित्येको यद्यदा-

रभते कृषिं पाशुपाल्यं वाणिज्यं राजोपसेवामन्यद्वा तदर्थं कर्म तत्तत्सफलतामुपगच्छति। इतरस्य पुनस्तदेव कर्म न केवलं विफलं सम्पद्यते, किन्तर्हि पूर्वपुरुषोपार्जितमपि धनलवं वैपरीत्यापत्त्या प्रत्युत निःशेषयति।

अन्यच्चेदमपि चिन्तनीयं यदुत द्वयोरेव पुरुषयोर्निरुपचरिताः पञ्चप्रकाराः शब्दादिविषयाः क्वचिदुपनमन्ते। तत्र तयोरेकः प्रबलशक्तिः प्रवर्द्धमानप्रीतिस्ताननवरतमनुभवति। द्वितीयस्य पुनरकाण्ड एव किमिति कार्पण्यरोगादिकं कारणमुत्पद्यते येन वाञ्छन्नपि तानेव भोक्तुं न शक्नोतीति।

न ह्येवंविधानां विशेषाणां जीवेषु जायमानानां परिदृष्टं किञ्चित्कारणमुपलक्ष्यते। न चाकारणं किञ्चिद्भवितुमर्हति। यदि पुनरकारणा एवंविधा विशेषा भवेयुस्ततः सर्वदा भवेयुर्यथाकाशम्, न वा कदाचिद् भवेयुर्यथा शशविषाणादयः। यतश्चैते क्वचिद् भवन्ति क्वचिन्न भवन्ति, तस्मान्नैते निष्कारणा इति गम्यते।

किं पुनरेतेषामुत्पादकं कारणम् (इति चेदुच्यते)। समस्तानामपि जीवगतानां सुन्दरविशेषाणां धर्म एवान्तरङ्गं कारणं भवति। स एव हि भगवानेनं जीवं सुकुलेषूत्पादयति, निःशेषगुणमन्दिरतां नयति, समस्तानुष्ठानान्यस्य सफलयति, उपनतभोगाननवरतं भोजयति, अन्यांश्च समस्तशुभविशेषान् सम्पादयति।

तथा सर्वेषामपि जीवगतानामशोभनविशेषाणामधर्म एवान्तरङ्गं कारणम्। स एव हि दुरन्तोऽमुं जीवं दुष्कुलेषूत्पादयति,

निःशेषदोषनिवासतां प्रापयति, सर्वव्यवसायानस्य विफलयति, उपनतभोगोपभोगविघ्नभूतं शक्तिवैकल्यं जनयति, अपरांश्चामनोज्ञाननन्तान् विशेषानस्य जीवस्याधत्ते।

तस्माद्यद्बलेनैताः समस्तसम्पदः स एव धर्मः प्रधानः पुरुषार्थः। अर्थकामौ हि वाञ्छतामपि पुरुषाणां न धर्मव्यतिरेकेण सम्पद्येते। धर्मवतां पुनरतर्कितौ स्वत एवोपनमेते। अतोऽर्थकामार्थिभिः पुरुषैः परमार्थतो धर्म एवोपादातुं युक्तस्तस्मात्स एव प्रधान इति।

यद्यप्यनन्तज्ञानदर्शनवीर्यानन्दात्मकजीवस्वरूपावस्थानलक्षणश्चतुर्थोऽपि **मोक्षरूपः पुरुषार्थो** निःशेषक्लेशराशिविच्छेदरूपतया स्वाभाविकस्वाधीनानन्दात्मकतया च प्रधान एव, तथापि तस्य धर्मकार्यत्वात् तत्प्राधान्यवर्णनेनापि परमार्थभूतस्तत्सम्पादको धर्म एव प्रधानपुरुषार्थ इति दर्शितं भवति। तथा चाभ्यधायि भगवता—"**धनदो धनार्थिनां धर्मः कामार्थिनां सर्वकामदः, धर्म एवापवर्गस्य पारम्पर्येण साधकः**" इति। नातः प्रधानतरं किञ्चिदस्तीत्युच्यते—

धर्माख्यः पुरुषार्थोऽयं प्रधान इति गम्यते।
पापग्रस्तं पशोस्तुल्यं धिग् धर्मरहितं नरम्॥

[ उपमितिभवप्रपञ्चाख्यकथायाः

( १७ )

# परोपकारः

इह भुवने नानाविधा मानवा समायान्ति दृष्टिगोचरताम्। तत्र "स्वभावो दुरतिक्रम", 'स्वभावो मूर्ध्नि वर्तते" इति नियमानुकूल यस्य यादृश स्वभाव स तादृशमेवाचारमाचरति। केचिन्नरपुङ्गवा अपर्यालोच्यैव नैजहानिलाभौ स्वकर्तव्यमेतदिति मन्यमाना परहितानुष्ठानरता अविरत समासते। अन्ये पुनर्नोद्दिश्य परारम्भप्रत्यूह स्वीयमारम्भमारभन्ते, तथापि "सर्वं स्वार्थं समीहते" इति सामान्यनियममनुसृत्य स्वार्थाविरोधेनैव परकार्यं सम्पादयन्ति, यद्वा स्वीयव्यापारविधाने व्यग्रा परसम्बन्धिनी हानिमपि स्वकार्यवशादेव जायमाना नहि गणयन्ति। अपरे तु "अमर्षेण शोणितकाङ्क्षया किं पदा स्पृशन्त दशति द्विजिह्व" इति वचनानुसारं निष्कारणवैरिणो दुर्जनस्वभावाः स्वकार्यसिद्ध्यसिद्ध्योर्विचारमुपेक्ष्य कारण विनैव परारम्भप्रत्यूह-[१] साधनान्येव चिन्तयन्तस्तिष्ठन्ति, परेषामनर्थाचरणेन च परम सन्तोषमनुभवन्ति।

तेष्वेतेषु भेदेषु प्रथममुक्ता समारोहन्ति परामुत्कर्षपदवीम्। द्वितीयविधास्तु मध्यमकक्षामवगाहन्ते। चरमकथितास्तु चरमा

---

१ "विघ्नोऽन्तराय प्रत्यूह" इत्यमर.।

मेव पदवीं भजन्ते। तदत्र स्मृतिपथमायाति नीतिज्ञधुरन्धरस्य तत्रभवतो भर्तृहरेर्भणितिरियम्—

एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये।
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये
ये निघ्नन्ति निरर्थकं परहितं ते के न जानीमहे॥

तत्र ये परोपकारं स्वकर्तव्यत्वेनानुतिष्ठन्ति तेषु खलु कारुण्यं वस्तुतः समालोक्यते। करुणागारत्वेनैव तेऽपारयन्तोऽन्यदीय-दुःखसन्ततिं दृग्गोचरतामानेतुं परोपकारपराः संजायन्ते। उक्तं च "करुणार्द्रा हि सर्वस्य सन्तोऽकारणबान्धवाः" इति। सुस्वभावसम्पन्ना हि ते "आत्मनः प्रतिकूलानि परेषां न समाचरेत्" इति लक्ष्यमनुवर्तमानाः "अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णां शमयति परितापं छायया संश्रितानाम्" इत्युक्तेरादर्शीभूता नानाविधयातना आत्मनानुभूयापि सततं परशुभाशंसिनः करुणापराः परहितानुष्ठानतत्पराश्च भवन्ति। अपराधिनमपि क्षमन्ते। स्वदशायाः समुत्कृष्टतरदशायामपरमवेक्ष्य तमतिशयितुं तत्साम्यमासादयितुं वा कामं भवतु तेषां प्रयासः। न पुनर्जातु ते परस्मा ईर्ष्यन्ति द्रुह्यन्ति वा। नापि तस्य हानिमनिष्टं वा प्रति हेतवो भवन्ति। स्वार्थसम्पादनाय नहि कर्हिचित् कञ्चन प्रतारयन्ति। नहि छद्मना प्रवर्तन्ते। नापि मिथ्याभाषिणो भवन्ति। एतादृश एव मानव-

कुलतिलकाः सत्पुरुषाभिख्यां भजन्ते। सर्वत्रैव तादृशाः सत्कृतिभाजनानि सकललोकस्य स्तुतिसमाधारास्त्रिलोकीं धन्यतां नयन्ति। तानेवाभिलक्ष्य गीयते—

मनसि वचसि काये पुण्यपीयूषपूर्णा-
त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः।
परगुणपरमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः॥

स्वभावेनैव हि सन्तः परहितप्रारब्धवीरव्रता अनभिसन्धिप्रणयिनश्च। स्वार्थलवेनापि हि तेऽस्पृष्टाः परकार्यं साधयन्ति। तथा चाभियुक्तोक्तयः—

उपकर्तुं प्रियं कर्तुं कर्तुं स्नेहमकृत्रिमम्।
सज्जनानां स्वभावोऽयं केनेन्दुः शिशिरीकृतः॥
पिबन्ति नद्यः स्वयमेव नाम्भः
स्वयं न खादन्ति फलानि वृक्षाः।
नादन्ति शस्यं खलु वारिवाहाः
परोपकाराय सतां विभूतयः॥

अपि च।

ते साधवो भुवनमण्डलमौलिभूता
ये साधुतां निरुपकारिषु दर्शयन्ति।
आत्मप्रयोजनवशीकृतखिन्नदेहः
पूर्वोपकारिषु खलोऽपि हि सानुकम्पः॥

जयन्ति जितमत्सराः परहितार्थमभ्युद्यताः
परा‍भ्युदयहर्षिताः परविपत्तिखेदाकुलाः।
महापुरुषसंकथाश्रवणजातकौतूहलाः
समस्तदुरितार्णवप्रकटसेतवः साधवः॥

परस्परापेक्षायुक्ता हि सर्वेषां व्यवहारा अस्मिन् जगति। तत्र ये "जात्यैवैते परहितविधौ साधवो बद्धकक्षाः" इत्येवं स्वभावेनैव परहितसाधनबद्धपरिकरास्तानेवाश्रित्य जगदिदं सत्यपथानुगं वर्तते। सर्वे धर्माः, अखिलाश्च विद्याः, अन्यानि च सर्वहितकराणि कार्याण्येतादृशैरेव सत्पुरुषैः प्रवर्तितानि। अत एव सर्वधर्माणां मूलं यदेष परोपकारः।

न केवलं श्रुतिस्मृतिप्रतिपादितत्वेनैव सदाचारत्वेनैव वा परोपकारस्य धर्मत्वं, किन्तु प्राणिमात्रस्य प्रियकारणत्वेनापि। तथा हि, यदा नु कश्चित्कस्याप्युपकुरुते कथमिवामन्दमानन्दमनुभवन् स उपकृत उपकर्तुर्गुणान् गायति। आत्मानुभवेनैव परेषां वृत्तान्यवगन्तुमीहन्ते सन्तः। यदा खलु दुःखसागरमग्नान् कष्टसन्ततिविषण्णचेतसोऽस्मान् कश्चिद् दयार्द्रचेताः समुद्धरति, कमप्यनिर्वचनीयमनवधिमानन्दमनुभवत्प्रमोदतेऽस्मदीयं चेतः। तथैव खल्वस्माभिरपि समुद्ध्रियमाणा दुःखोदधेरपरेऽपि प्राणिनोऽवश्यमेव कामपि परमानन्दसीमासम्पत्तिमासादयन्तीत्यनुमीयते।

वस्तुतः परोपकारेण न केवलं परेषामेव लाभ आनन्दातिशयश्च जायते, किन्तु परोपकारमाचरतोऽप्यन्तःकरणे कश्चिदवर्णनीयः

सन्तोषः समुत्पद्यते। अत एव "परोक्षप्रिया हि देवाः प्रत्यक्षद्विषः" इतिश्रुत्यनुरूपं दूरदर्शिनः सन्तो वास्तवं स्वार्थमात्मकल्याणरूपं निःश्रेयसापरपर्यायं समीहमाना लोकपरलोकसहायं परोपकारमेवाश्रयन्ते। अत एव च

अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।
परोपकारः पुण्याय पापाय परपीडनम्॥

इति समुज्जृम्भतेऽमृतमयी वागियं परोपकारस्य सर्वधर्मापेक्षया श्रैष्ठ्यं प्रतिपादयन्ती।

तस्मात्सर्वैः समाश्रयणीयोऽयं धर्मो य एष परोपकारो नाम।

( १८ )

## का हि पुङ्गणना तेषां येऽन्यशिक्षाविचक्षणाः।
## ये स्वं शिक्षयितुं दक्षास्तेषां पुङ्गणना नृणाम्॥

इह खलु विचित्रचरित्रचित्रिते जगति केचिदेव विरला एतादृशा नरपुङ्गवा ये यदपि किञ्चित्परस्योपदिशन्ति स्वयममि तत्सम्यगाचरन्ति। परम् असंख्या एव ते समालोच्यन्ते ये संसत्स्वन्यत्र वा वावदूका नितरामेव सत्पुरुषान्गर्हयन्तो नानाविधशब्दाडम्बरैः परेभ्यो धर्मोपदेशं वितरन्ति। तथापि स्वकीया तेषामवस्थातीव गर्हणीया भवति। तेषां स्वकीयाचरणेषु स उपदेशोंऽशमात्रमपि

न दृश्यते। एतादृशानेवालोचयतो मनसि नितरां कदर्थनामनुभवतः कस्यापि कवेर्भणितिरियम्—

का हि पुङ्गणना तेषामित्यादि।

तद्यथानुश्रूयते। कस्मिंश्चिद् ग्रामे ब्राह्मण एकः प्रतिवसति स्म। तस्य भवदत्तभवदेवनामानौ द्वौ सूनू अभूताम्। कालेन तयोर्ज्यायान् भवदत्तो बौद्धसंन्यासिनामुपदेशेन गृहीतक्षपणकवेशस्तैरेव सार्द्धं गतः, नितरां विरक्तश्चाभूत्।

एकदा तेषां क्षपणकानामेकः स्वमठाधीशादेशेन ग्रामान्तरं गतः। तत्रैव तस्य भ्रातापि निवसति स्म। स्वभ्रातुरन्तिकं तस्य क्षपणकत्वापादनार्थमुपस्थितः स भ्रात्रात्यन्तं न्यक्कृतः खलीकृतश्च। एवं विफलमनोरथः स स्वमठं प्रत्यागतोऽखिलं तत्स्वभ्रातृवृत्तं कुलाधीशाय निवेदितवान्। उपहसितश्चासावतिशयेन तद्भ्रातृगर्हणापरैः सर्वैः क्षपणकैः।

अथ गोष्ठीप्रसङ्गेन भवदत्तस्तैरभिहितः। किं भवानपि स्वभ्रातुः क्षपणकत्वापादन एवमेवासमर्थ इति। तेनोक्तम्। नाहमशक्तः। प्रतिजाने च यदवश्यमेव स्वभ्रातरं क्षपणकतामानेष्यामीति।

तत एकदा कुलाधीशेन सह पर्यटन् भवदत्तो यात्राप्रसङ्गेन स्वाभिजनग्रामसमीपमेवाध्युषितः। तदादेशेन च प्रतिज्ञातार्थसम्पादने दृढमतिर्निजभ्रातृभवनं तस्य साक्षात्करणाय गतवान्। तत्र

च तस्य विवाहस्तस्मिन्नेव वासरे निर्वृत्त आसीत्। अथास्यानुजो भवदेव स्वभ्रातर समागतमालोच्य यथोचितोत्थानादिशिष्टाचारै सत्कृतवान्। प्रस्थित च तमनुसरन् बहुदूर यावन्मठाधीशान्तिकमुपस्थित । प्रत्यक्षत सफलमनोरथो भवदत्त कुलाधीशेन पृष्ट । किमथमानीत क्षपणकताग्रहणार्थमिति। भवदत्तेन च बाढमित्यभिहितम्। भवदेवोऽप्येतमर्थं पृष्टोऽब्रवीत्। अस्तु एवमेव, मा पुनर्मे भ्राता मृषावादी भूदिति।

एव भवदत्तेन स्वानुजो भवदेव क्षपणकतामानीतो गृहीतक्षपणकवेशस्तैरेव सार्द्ध निवसन्नस्मरन्नेव चाबला स्वभार्या चिरकाल निनाय। कालेन तस्य ज्यायान् भ्राता भवदत्त स्वर्गपथमारूढ । भवदेवस्तु तदनन्तर यस्य सत्यवादित्वरक्षणाय मया क्षपणकताङ्गीकृता सोऽधुना पञ्चत्व गत इति विचार्य, हन्त! सा वराकी, या मयातिनिष्ठुरेण विवाहदिवस एव परित्यक्ता, साम्प्रत तुहिनाविलेव पद्मिनी मरुमध्यगतेव च मराली ननु का महती कष्टा दशामनुभवन्ती स्यादिति जिज्ञासयैकदा केनचिदपदेशेन स्वग्राम गत । प्रतीक्षमाणश्च ता स्वभवनद्वारि स्थित । क्षणेन च तस्माद् गेहाद् बहिर्निर्गच्छन्त्यौ द्वे स्त्रियौ तेन पृष्टे। किं परिचिता भवत्योर्नागिला (इदमेव तस्य पत्न्या नामासीत्)। परिचिता चेत्का दशामनुभवति सेति।

तयोरेका नागिलैवासीत्। सा च कृताधोमुखी सविनयमब्रवीत्। सा हि वियोगवासरादेव देवदेव भगवन्तमुमापति निध्यायन्ती कालमतिवाहयति। अहमेव च सा नागिलास्मीति।

एतस्मिन्नेवान्तरे कश्चिद् बाल आक्रन्दन् गृहान्निर्ययौ। साग्रहं चाब्रवीद् यदहं स्ववान्तं भक्षयिष्यामि। तं सान्त्वयन्भवदेव आह। सौम्य! नहि वान्तं पुनरादत्ते कश्चित्। महद् गर्हणीयं हि तदिति।

एवमुक्तवत्येव भवदेवे नागिला एतद्व्याजेनैवोपदेशावसरं मन्यमानावोचत्। "देव! किं तथ्यमेवमेव मन्यसे। आहोस्वित्ते परोपदेश एव पाण्डित्यम्। किं पर्वते ज्वलन्तमग्निं पश्यसि, न पुनरक्ष्णोः पुरस्तात्स्थितम्। यस्माद् बालन्तूपदिशति भवान् यदेकवारं त्यक्तं नैवादत्ते विद्वान्। परं पूर्वं वर्जितां मां पुनर्ग्रहीतुकामोऽस्ति! सत्यं सुखमुपदिश्यते परस्य! अथवा किं नात्रैतत्सुभाषितं चरितार्थं भवति—

> का हि पुङ्गणना तेषां येऽन्यशिक्षाविचक्षणाः।
> ये स्वं शिक्षयितुं दक्षास्तेषां पुङ्गणना नृणाम्॥" इति॥

## अयं भावः।

स्वभावेन परोपदेशकुशला एव बहुशो मानवाः समालोच्यन्ते संसारे। नाममात्रेणैव ते मानवाः। उपदेशानुगुणं स्वयमाचारमनाचरतां तेषामेतादृशं परोपदेशपाण्डित्यं केवलं वाचालत्वमेव ख्यापयति। स्वयमाचारविहीनानां तेषामुपदेशोऽपि नहि परान् सदाचारमार्गावलम्बिनः सम्पादयितुं प्रभवति। ये पुनः प्रथममात्मानं शिक्षयन्ति, पश्चात्तु निजानुभवेन सत्यानृते विविच्य करुणाप्लावितचेतसः परानप्युपदिशन्ति

धर्मे त एव धन्याः सर्वजगत्पूजास्पदीभूता मानवजन्म सार्थकतां नयन्ति। अत एवोच्यते—

परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम्।
धर्मे स्वयमनुष्ठानं कस्यचित्तु महात्मनः॥

—

( १९ )

# सत्सङ्गतिः

## सत्सङ्गतिः कथय किं न करोति पुंसाम्।

( १ )

श्रेयः समाधत्ते यथा तथाप्युपनतः सत्सङ्गम इति सज्जनापाश्रयेण श्रेयोऽर्थिना भवितव्यम्।

तद्यथानुश्रूयते। बोधिसत्त्वभूतः किलायं भगवान्यशःप्रकाशवंशे गुणपरिग्रहप्रसङ्गात्[1] सात्मीभूतप्रजानुरागे प्रतापानतदृप्तसामन्ते श्रीमति कौरव्यराजकुले जन्म प्रतिलेभे। तस्य गुणशतकिरणमालिनः सोमप्रियदर्शनस्य सुतस्य सुतसोम इत्येवं पिता नाम चक्रे। स शुक्लपक्षचन्द्रमा इव प्रतिदिनमभिवर्धमानकान्तिलावण्यः,

---

१ प्रसङ्गः प्रसक्तिरनुरागः।

कालक्रमादवाप्य साङ्गेषु सोपवेदेषु च वेदेषु वैचक्षण्यं, दृष्टक्रमः सोत्तरकलानां[१] कलानां लोक्यानां[२], लोकप्रेमबहुमाननिकेतभूतः सम्यगभ्युपपत्ति[३]सौमुख्यादभिवर्धमानादरात् परिपालननियमाच्च बन्धुरिव गुणानां बभूव ।

अतश्चैनं स राजा लोकपरिपालनसामर्थ्यादक्षुद्रभद्रप्रकृतित्वाच्च यौवराज्यविभूत्या संयोजयामास ।

विद्वत्तया त्वासु[४]रतीव तस्य प्रियाणि धर्म्याणि सुभाषितानि ।
आनर्च पूजातिशयैरतस्तं सुभाषितैरेनमुपागमद्यः ॥

अथ कदाचित्स महात्मा कुसुममासप्रभावविरचितकिसलयलक्ष्मीमाधुर्याणि प्रविकसत्कुसुममनोज्ञप्रहसितानि प्रविततनवशाद्वल[५]कुथास्तरणसनाथधरणीतलानि कमलोत्पलदलास्तीर्णनिर्मलनीलसलिलानि भ्रमद्भ्रमरमधुकरीगणोपगीतानि अनिभृतपरभृतबर्हिगणानि मृदुसुरभिशिशिरसुखपवनानि मनःप्रसादोद्भावनानि नगरोपवनान्यनुविचरन्नन्यतममुद्यानवनं नातिमहता बलकायेन परिवृतः क्रीडार्थमुपनिर्जगाम ।

---

१ उत्तरकला असाधारण्यो विशिष्टा वा कलाः । २ लोक्यानां लौकिकानाम् । ३ अभ्युपपत्तिरनुग्रहः ।

४ आसुरिति बभूवुरित्यर्थे तिङन्तप्रतिरूपकमव्ययम् । ५ "शाद्वलः शादहरिते" इत्यमरः ।

स तत्र पुंस्कोकिलनादिते वने मनोहरोद्यानविमान[१]भूषिते।
चचार पुष्पानतचित्रपादपे प्रियासहायः सुकृतीव नन्दने॥

( २ )

तत्रस्थं चैनमन्यतमः सुभाषिताख्यायी ब्राह्मणः समभिजगाम, कृतोपचारसत्कारश्च तद्रूपशोभापहृतमनास्तत्रोपविवेश। इति स महासत्त्वो यौवनानुवृत्त्या पुण्यसमृद्धिप्रभावोपनतं क्रीडाविधिमनुभवंस्तदागमनादुत्पन्नबहुमान एव, तस्मिन् ब्राह्मणे सुभाषितश्रावणादनवाप्तागमनफले, सहसैवोत्पतितं क्रीडाप्रसङ्गजनितप्रहर्षोपहन्तृ प्रमदाजनभयविषादजननं कोलाहलमुपश्रुत्य ज्ञायतां किमेतदिति सादरमन्तःपुरावचरान्[२]समादिदेश। अथास्य दौवारिका भयविषाददीनवदनाः ससम्भ्रमं द्रुततरमुपेत्य न्यवेदयन्त। एष स देव! पुरुषादः कल्माषपादः सौदासः साक्षादिवान्तको नरशतकदन[३]करणपरिचयाद्राक्षसाधिकक्रूरतरमतिरतिमानुषबलवीर्यदर्पो रक्षःप्रतिभय[४]रौद्रमूर्तिर्मूर्तिमानिव जगत्संत्रास इत एवाभिवर्तते। विद्रुतं च नस्तत्संत्रासग्रस्तधैर्यमुद्भ्रान्तरथतुरगद्विरदव्याकुलयोध-

---

१ विमानं विमानो वा सप्तभूमिकभवनम्। अथवा विमानशब्दस्य मण्डप इत्यर्थः। तथा च रघुवंशे (१७।६) "विमानं... चतुःस्तम्भप्रतिष्ठितम्।" "विमानं मण्डपम्" इति तत्र मल्लिनाथः। २ अवचरा रक्षका अनुचरा वा। ३ कदनं हननम्। ४ प्रतिभयं भयङ्करम्

बलम्। यतः प्रतियत्नो[१] भवतु देवः, प्राप्तकालं वा सम्प्रधार्यतामिति।

अथ सुतसोमो जानानोऽपि तानुवाच। भोः क एव सौदासो नाम। ते तं प्रोचुः। किमेतद् देवस्य न विदितं यथा सुदासो नाम राजा बभूव। स मृगयानिर्गतोऽश्वेनापहृतो वनगहनमनुप्रविष्टः सिंह्या सार्धं योगमगमत्। आपन्नसत्त्वा च सा सिंही संवृत्ता, कालान्तरेण च कुमारं प्रसुषुवे। स वनचरैर्गृहीत सुदासायोपनीतः। अपुत्रोऽहमिति च कृत्वा सुदासेन संवर्धितः पितरि च सुरपुरमुपगते स्वं राज्यं प्रतिलेभे। स मातृदोषादामिषेष्वभिषक्तः[२]। इदमिदं रसवरं मांसमिति स मानुषं मांसमास्वाद स्वपौरानेव च हत्वा हत्वा भक्षयितुमुपचक्रमे। अथ पौरास्तद्वधायोद्योगं चक्रुः। यतोऽसौ भीतः सौदासो नररुधिरपिशितबलिभुग्भ्यो भूतेभ्य उपशुश्राव[३]। अस्मात्सङ्कटान्मुक्तोऽहं राज्ञां कुमारशतेन भूतयज्ञं करिष्यामीति। सोऽयं तस्मात्सङ्कटान्मुक्तः। प्रसह्य प्रसह्य चानेन राजकुमारापहरणं कृतम्। सोऽयं देवमप्यपहर्तुमायातः। श्रुत्वा देवः प्रमाणमिति।

अथ स बोधिसत्त्वः पूर्वमेव विदितशीलदोषविभ्रमः सौदासस्य कारुण्यात् तच्चिकित्सावहितमतिराशंसमानश्चात्मनि तच्छीलविकृत-

---

१ प्रतिकूलयत्नवान्। शत्रोः प्रतीकारार्थं यत्नवानित्यर्थः। २ अभिषक्तोऽनुरक्तः। ३ उपशुश्राव प्रतिज्ञातवान्।

प्रशमनसामर्थ्यं प्रियाख्यान इव च सौदासाभियाननिवेदने प्रीतिं प्रतिसंवेदयन्नियतमित्युवाच—

राज्याच्च्युतेऽस्मिन्नरमांसलोभादुन्मादवक्तव्य इवास्वतन्त्रे।
त्यक्तस्वधर्मे हतपुण्यकीर्तौ शोच्यां दशामित्यनुवर्तमाने॥
को विक्रमस्यात्र ममावकाश एवंगताद्वा भयसम्भ्रमस्य।
अयत्नसंरम्भपराक्रमेण पाप्मानमस्य प्रसभं निहन्मि॥
गत्वापि यो नाम मयानुकम्प्यो मद्गोचरं स स्वयमभ्युपेतः।
युक्तं मयातिथ्यमतोऽस्य कर्तुमेवं हि सन्तोऽतिथिषु प्रवृत्ताः॥

तद् यथाधिकारमत्रावहिता भवन्तु भवन्त इति स तानन्तःपुरावचराननुशिष्य, आश्वासनपूर्वकं विनिवर्त्य युवतिजनं, यतस्तत्कोलाहलं ततः प्रससार। दृष्ट्वैव च व्यायता[१]बद्धमलिनवसनपरिकरं वल्कलपट्टविनियतं रेणुपरुषप्रलम्बव्याकुलशिरोरुहं प्ररूढश्मश्रुजालावनद्धान्धकारवदनं रोषसंरम्भव्यावृत्तरौद्रनयनम् उद्यतासिचर्माणं सौदासं विद्रवदनुपतन्तं राजबलं[२] विगतभयसाध्वसः[३] समाजुहाव। अयमहमरे सुतसोमः। इत एव निवर्तस्व। किमनेन कृपणजनकदनकरणप्रसङ्गेनेति।

तत्समाह्वानशब्दाकलितदर्पस्तु सौदासः सिंह इव ततो न्यव-

---

१ व्यायतं विस्तीर्णं यथा स्यात्तथा। २ विद्रवद्राजबलमनुपतन्तं सौदासं दृष्ट्वैवेति संबन्धः। ३ साध्वसमावेगः।

तेत। निरावरणप्रहरणम्[1] एकाकिनं प्रकृतिसौम्यदर्शनमभिवीक्ष्य च बोधिसत्त्वमहमपि त्वामेव मृगयामीत्युक्त्वा निर्विशङ्कः सहसा संरम्भद्रुततरमभिसृत्यैनं स्कन्धमारोप्य प्रदुद्राव। बोधिसत्त्वोऽपि चैनं संरम्भदर्पोद्धतमानसं ससम्भ्रमाकुलितमतिं राजबलविद्रावणादुपरूढप्रहर्षावलेपमवेत्य नायमस्यानुशिष्टि[2]काल इत्युपेक्षां चक्रे। सौदासोऽप्यभिमतार्थप्रसिद्ध्या परमिव लाभमधिगम्य प्रमुदितमनाः स्वमावासदुर्गं प्रविवेश।

हतपुरुषकलेवराकुलं रुधिरसमुक्षितरौद्रभूतलम्।
परुषमिव रुषावभर्त्सयत्स्फुटदहनै[3]रशिवैः शिवारुतैः[4]॥

समवतार्य च तत्र बोधिसत्त्वं तद्रूपसम्पदा विनिबध्यमाननयनः प्रततं[5] वीक्षमाणो विशश्राम।

( ३ )

अथ बोधिसत्त्वस्य सुभाषितोपायनाभिगतं ब्राह्मणमकृतसत्कारं तदुद्यानविनिवर्तनप्रतीक्षिणम् आशावबद्धहृदयमनुस्मृत्य चिन्ता प्रादुरभूत्। कष्टं भोः!

सुभाषितोपायनवानाशया दूरमागतः।
स मां हृतमुपश्रुत्य विप्रः किं नु करिष्यति॥

---

१ निरावरणप्रहरणम्। आवरणेन कवचादिना प्रहरणेन च रहितम्।
२ अनुशिष्टिरनुशासनम्। ३ दहनैश्चिताग्निभिः।
४ शिवारुतैश्चेति संबन्धः। ५ प्रततं निर्निमेषमित्यर्थः।

इति विचिन्तयतस्तस्य महासत्त्वस्य तदीयदुःखाभितप्तमनसः कारुण्यपरिचयादश्रूणि प्रावर्तन्त ।

अथ सौदासः साश्रुनयनमभिवीक्ष्य बोधिसत्त्वं समभिप्रहसन्नुवाच । मा तावद् भो : !

धीर इत्यसि विख्यातस्तैस्तैश्च बहुभिर्गुणैः ।
अथ चास्मद्वशं प्राप्य त्वमप्यश्रूणि मुञ्चसि ॥

सुष्ठु खल्विदमुच्यते—

**आपत्सु विफलं धैर्यं शोके श्रुतमपार्थकम् ।**
**नहि तद्विद्यते भूतमाहतं यन्न कम्पते ॥**

इति । तत्सत्यं तावद् ब्रूहि—

प्राणान्प्रियानथ धनं सुखसाधनं वा
बन्धून्नराधिपतितामथवानुशोचन् ।
पुत्रप्रियं पितरमश्रुमुखान् सुतान्वा
स्मृत्वेति साश्रुनयनत्वमुपागतोऽसि ॥

बोधिसत्त्व उवाच—

न प्राणान्पितरौ न चैव तनयान्बन्धून्न दारान्न च
नैवैश्वर्यसुखानि संस्मृतवतो बाष्पोद्गमोऽयं मम ।
आशावांस्तु सुभाषितैरभिगतः श्रुत्वा हृतं मां द्विजो
नैराश्येन स दह्यते ध्रुवमिति स्मृत्वास्मि सास्रेक्षणः ॥

तस्माद्विसर्जयितुमर्हसि तस्य याव-
दाशाविघातमथितं हृदयं द्विजस्य ।
संमाननाम्बुपरिषेकनवीकरोमि
तस्मात्सुभाषितमधूनि च सम्बिभर्मि ॥

प्राप्यैवमानृण्यमहं द्विजस्य गन्तास्मि भूयोऽनृणतां तवापि ।
इहागमात् प्रीतिकृतक्षणा[1]भ्यां निरीक्ष्यमाणो भवदीक्षणाभ्याम् ॥

सौदास उवाच—

इदं त्वया ह्याहृतमुच्यमानं श्रद्धेयतां नैव कथंचिदेति ।
को नाम मृत्योर्वदनाद्विमुक्तः स्वस्थः स्थितस्तत्पुनरभ्युपेयात् ॥
दुरुत्तरं मृत्युभयं व्यतीत्य सुखे स्थितः श्रीमति वेश्मनि स्वे ।
किं नाम तत्कारणमस्ति येन त्वं मत्समीपं पुनरभ्युपेयाः ॥

बोधिसत्त्व उवाच । कथमेवं महदपि ममागमनकारणमत्रभवान्नावबुध्यते । ननु मया प्रतिपन्नम्[2] आगमिष्यामीति । तदलं मां खलजनसमतयैवं परिशङ्कितुम् । सुतसोमः खल्वहम् ।

**लोभेन मृत्योश्च भयेन सत्यं सत्यं यदेके तृणवत्त्यजन्ति ।[3]**
**सतां तु सत्यं वसु जीवितं च कृच्छ्रेऽप्यतस्तन्न परित्यजन्ति**

---

१ क्षण उत्सवः । २ प्रतिपन्नमङ्गीकृतम् । ३ एके लोभेन मृत्योर्भयेन च सत्यं तृणवत् त्यजन्ति (इति) यत् (तत्) सत्यम्—इत्यन्वयः ।

त्वत्तो भयं यदि च नाम ममाभविष्यत्
सङ्गः सुखेषु करुणाविकलं मनो वा ।
विख्यातरौद्रचरितं ननु वीरमानी
त्वामुद्यतप्रहरणावरणोऽभ्युपैष्यम् ॥
त्वत्संस्तवस्[१] त्वयमभीप्सित एव मे स्यात्
तस्य द्विजस्य सफलश्रमतां विधाय ।
एष्याम्यहं पुनरपि स्वयमन्तिकं ते
नास्मद्विधा हि वितथां गिरमुद्गिरन्ति ॥

अथ सौदासस्तद् बोधिसत्त्ववचनं विकल्पितमिवामृष्यमाणश्चिन्ताम्[२] आपेदे । सुष्ठु खल्वयं सत्यवादितया च धार्मिकतया च विकत्थते । तत्पश्यामि तावदस्य सत्यानुरागं धर्मप्रियतां च । किं च तावन्ममानेन नष्टेनापि स्यात् । अस्ति हि मे स्वभुजवीर्यप्रतापाद्वशीकृतं शतमात्रं क्षत्रियकुमाराणाम् । तैर्यथोपयाचितं भूतयज्ञं करिष्यामीति विचिन्त्य बोधिसत्त्वमुवाच । तेन हि गच्छ । द्रक्ष्यामस्ते सत्यप्रतिज्ञतां धार्मिकतां च ।

गत्वा कृत्वा च तस्य त्वं द्विजस्य यदभीप्सितम् ।
शीघ्रमायाहि यावत्ते चितां सज्जीकरोम्यहम् ॥

---

१ संस्तवः परिचयः ।

२ विकल्पितं संदेहसंयुक्तम्, अमृष्यमाणोऽसहमानः, चिन्तां चिन्तनम् ।

( ४ )

अथ बोधिसत्त्वस्तथेत्यस्मै प्रतिश्रुत्य स्वभवनमभिगतः प्रतिनन्द्यमानः स्वेन जनेन तमाहूय ब्राह्मणं तस्माद् गाथाचतुष्टयं शुश्राव। तच्छ्रुत्वा सुभाषिताभिप्रसादितमनाः स महासत्त्वः संराधयन्[१] प्रियवचनसत्कारपुरःसरं साहस्रिकीं गाथां कृत्वा समभिलषितेनार्थेन तं ब्राह्मणं प्रतिपूजयामास।

अथैनं तस्य पिताऽस्थानातिव्ययनिवारणोद्यतमतिः प्रस्तावक्रमागतं सानुनयमित्युवाच। तात ! सुभाषितप्रतिपूजने साधु मात्रां ज्ञातुमर्हसि। महाजनः[२] खलु ते भर्तव्यः, कोशसम्पदपेक्षिणी च राजश्रीरतश्च त्वां ब्रवीमि।

शतेन सम्पूजयितुं सुभाषितं परं प्रमाणं, न ततः परं क्षमम्।
अतिप्रदातुर्हि कियच्चिरं भवेद्धनेश्वरस्यापि धनेश्वरद्युतिः॥

बोधिसत्त्व उवाच—

अर्घप्रमाणं यदि नाम कर्तुं शक्यं भवेद्देव ! सुभाषितानाम्।
व्यक्तं न ते वाक्यपथं व्रजेयं तन्निष्क्रयं राज्यमपि प्रयच्छन्॥
श्रुत्वैव यन्नाम मनः प्रसादं, श्रेयोऽनुरागः स्थिरतां च याति।
प्रज्ञा विवृद्ध्या वितमस्कतां[३] च, क्रय्यं ननु स्यादपि तत्स्वमांसैः॥

---

१ संराधयन् अभिनन्दयन्निति भावः। २ महाजनो बहवो जना इत्यर्थः। ३ वितमस्कतां तमोराहित्यं वैशद्यमिति यावत्।

**दीपः श्रुतं[1] मोहतमःप्रमाथी, चौराद्यहार्यं परमं धनं च ।**
**संमोहशत्रुव्यथनाय शस्त्रं, नयोपदेष्टा परमश्च मन्त्री ॥**
**आपद्गतस्याप्यविकारि मित्रमपीडनी शोकरुजश्चिकित्सा ।**
**बलं महद् दोषबलावमर्दि, परं निधानं यशसः श्रियश्च ॥**

गुणैरनेकैरिति[2] विश्रुतानि प्राप्तान्यहं प्राभृत[3]वच्छ्रुतानि ।
शक्तः कथं नाम न पूजयेयमाज्ञां कथं वा तव लङ्घयेयम् ॥
यास्यामि सौदाससमीपमस्मादर्थो न मे राज्यपरिश्रमेण ।
निवृत्तसङ्केतगुणोपमर्दे लभ्यश्च यो दोषपथानुवृत्त्या[4] ॥

अथैनं पिता स्नेहात्समुत्पतितसम्भ्रमः सादरमुवाच । तवैव खलु तात! हितावेक्षिणा मयैवमभिहितम् । तदलमत्र ते मन्युवशमनुभवितुम् । द्विषन्तस्ते सौदासवशं गमिष्यन्ति । अथापि प्रतिज्ञातं त्वया तत्समीपोपगमनमतः सत्यानुरक्षी तत्सम्पादयितुमिच्छसि; तदपि ते नाहमनुज्ञास्यामि । अपातकं हि स्वप्राणपरिरक्षानिमित्तं गुरुजनार्थं चानृतमार्गो वेदविहित इति । तत्परिहार-

---

१ श्रुतमिति कर्तृ । २ इति पूर्वोक्तरीत्येत्यर्थः । ३ "प्राभृतं तु प्रदेशनम्" इत्यमरः । ४ यश्च (परिश्रमः) निवृत्तसंकेतगुणोपमर्दे (सौदासेन सह कृतो यो निवर्त्तनस्य संकेतस्तस्य परिपालनरूपो यो गुणस्तस्योपमर्दे दोषपथानुवृत्त्या लभ्यस्तेन मे नार्थ इत्यर्थः । इममेवार्थम् 'तत्परिहारश्रमेण तव कोऽर्थः' इत्यनुपदमेवानुवदति तस्य पिता । अथवा 'निर्वृत्त' इति पाठः कदाचिदत्र भवेत् ।

श्रमेण तव कोऽर्थः । अर्थकामाभ्यां च विरोधिदृष्टं धर्मसंश्रयमनयमिति व्यसनमिति च राज्ञां प्रचक्षते नीतिकुशला । तदलमनेनास्मन्मनस्तापिना स्वार्थनिरपेक्षेण ते निर्बन्धेन । अथाप्ययशस्यं धर्मविरोधि चेति प्रतिज्ञाविसंवादनमनुचितत्वान्न व्यवस्यति ते मतिः, एवमपीदं त्वद्विमोक्षणार्थं समुद्युक्तं सज्जमेव नो हस्त्यश्वरथपत्तिकाय[1] सम्पन्नमनुरक्तं महद् बलम् । तदनेन परिवृत्तः समभिगम्यैनं वशमानयान्तकवशं वा प्रापय । एवमन्यथ॑प्रतिज्ञता सम्पादिता स्यादात्मरक्षा चेति ।

बोधिसत्त्व उवाच । नोत्सहे देव ! अन्यथा प्रतिज्ञातुमन्यथा कर्तुम्, शोच्येषु वा व्यसनपङ्कनिमग्नेषु नरकाभिमुखेषु सुहृत्सु स्वजनपरित्यक्तेष्वनाथेषु च तद्विधेषु प्रहर्तुम् । अपि च

दुष्करं पुरुषादोऽसावुदारं चाकरोन्मयि ।
मद्वच प्रत्ययाद्यो मां व्यसृजद्वशमागतम् ॥
लब्धं तत्कारणाच्चेदं मया तात ! सुभाषितम् ।
उपकारी विशेषेण सोऽनुकम्प्यो मया यतः ॥

अलं चात्र देवस्य मदत्ययाशङ्कया[2] । का हि तस्य शक्तिरस्ति मामेवमभिगतं विहिंसितुमिति ।

---

१ हस्त्यश्वरथपत्तिकायं हस्त्यश्वरथपदातिरूपम् ।

२ मदत्ययाशङ्कया ममाहितशङ्कया ।

एवमनुनीय स महात्मा पितरं विनिवारणासोद्यमं च विनिवर्त्य प्रणयिजनमनुरक्तं च बलकायमेकाकी विगतभयदैन्यः सत्यानुरक्षी लोकहितार्थी सौदासमभिविनेष्यंस्तन्निकेतमभिजगाम ।

( ५ )

दूरादेवावलोक्य सौदासस्तं महासत्त्वमतिविस्मयादभिवृद्धबहुमानप्रसादश्चिराभ्यासविरूढक्रूरतामलिनमतिरपि व्यक्तमिति चिन्तामापेदे । अहहह !

आश्चर्याणां बताश्चर्यमद्भुतानां तथाद्भुतम् ।
सत्यौदार्यं नृपस्येदमतिमानुषदैवतम् ॥
मृत्युरौद्रस्वभावं मां विनीतभयसंभ्रमः ।
इति स्वयमुपेतोऽयं, ही ! धैर्यं, साधु सत्यता ॥

अथ बोधिसत्त्वः समभिगम्यैनं विस्मयबहुमानावर्जित[१]मानसमुवाच—

प्राप्तं सुभाषितधनं प्रतिपूजितोऽर्थी
प्रीतिं मनश्च गमितं भवतः प्रभावात् ।
प्राप्तस्तदस्म्ययमशान यथेप्सितं मां
यज्ञाय वा मम पशुव्रतमादिश त्वम् ॥

सौदास उवाच—

नात्येति कालो मम खादितुं त्वां धूमाकुला तावदियं चितापि ।

---

१ आवर्जितमानमितं वशीकृतं वा ।

विधूमपक्वं पिशितं च हृद्यं श्रृणमस्तदेतानि सुभाषितानि ॥

बोधिसत्त्व उवाच। कस्तवार्थ इत्थंगतस्य सुभाषितश्रवणेन।

रक्षोविकृतवृत्तस्य संत्यक्तार्यपथस्य ते।
नास्ति सत्यं कुतो धर्मः किं श्रुतेन करिष्यसि ॥

अथ सौदासस्तामवसादनाम्[१] अमृष्यमाणः प्रत्युवाच। मा तावद् भोः!

कोऽसौ नृपः कथय यो न समुद्यतास्त्रः
क्रीडावने वनमृगीदयितान्निहन्ति ?
तद्वन्निहन्मि मनुजान् यदि वृत्तिहेतो-
राधर्मिकः[२] किल ततोऽस्मि, न ते मृगघ्नाः ॥

बोधिसत्त्व उवाच—

धर्मे स्थिता न खलु तेऽपि नमन्ति येषां
भीतद्रुतेष्वपि मृगेषु शरासनानि।
तेभ्योऽपि निन्द्यतम एव नराशनस्तु
जात्युच्छ्रिता हि पुरुषा न च भक्षणीयाः ॥

अथ सौदासः परिकर्कशाक्षरमप्यभिधीयमानो बोधिसत्त्वेन तन्मैत्रीगुणप्रभावादभिभूतरौद्रस्वभावः सुखायमान एव तद्वचनमभिप्रहसन्नुवाच। भोः सुतसोम!

---

१ अवसादनाम् अवसादकारिणीमवमाननाम्।

२ अधर्मं चरतीत्याधर्मिकः। "अधर्माच्चेति वक्तव्यम्" इति ठक्।

मुक्तो मया नाम समेत्य गेहं समन्ततो राज्यविभूतिरम्यम् ।
यन्मत्समीपं पुनरागतस्त्वं न नीतिमार्गे कुशलोऽसि तस्मात् ॥

बोधिसत्त्व उवाच । नैतदस्ति । अहमेव तु कुशलो नीतिमार्गे, यदेनं[1] न प्रतिपत्तुमिच्छामि ।

अतश्च नीतौ कुशलोऽहमेव त्यक्त्वानृतं योऽभिरतोऽस्मि सत्ये ।
न तत्सुनीतं[2] हि वदन्ति तज्ज्ञा यन्नानुबध्नन्ति यशःसुखार्थाः ॥

सौदास उवाच—

प्राणान्प्रियान्स्वजनमश्रुमुखं च हित्वा
राज्याश्रयाणि च सुखानि मनोहराणि ।
कामर्थसिद्धिमनुपश्यसि सत्यवाक्ये
तद्रक्षणार्थमपि मां यदुपागतोऽसि ॥

बोधिसत्त्व उवाच । बहवः सत्यवचनाश्रया गुणातिशयाः । संक्षेपतस्तु श्रूयताम्—

**माल्यश्रियं हृद्यतयातिशेते सर्वान् रसान्स्वादुतया च सत्यम्**
**श्रमाद्दते पुण्यगुणप्रसिद्ध्या तपांसि तीर्थाभिगमश्रमांश्च ॥**
**कीर्तेर्जगद्व्याप्तिकृतक्षणाया[3] मार्गस्त्रिलोकाक्रमणाय सत्यम् ।**
**द्वारं प्रवेशाय सुरालयस्य संसारदुर्गोत्तरणाय सेतुः ॥**

---

१ एनं नीतिमार्गम् । यत उक्तम्—"ये नीतिमार्गप्रतिपत्तिधीराः प्रायेण ते प्रेत्य पतन्त्यपायान्" । २ सुनीतं नीत्या युक्तम् । ३ क्षणोऽवसरः ।

अथ सौदासः साधु युक्तमित्यभिप्रणम्यैनं सविस्मयमभिवीक्ष-माणः पुनरुवाच—

अन्ये नरा मद्वशगा भवन्ति दैन्यार्पणात् त्रासविलुप्तधैर्याः ।
सन्त्यज्यसे त्वं तु न धैर्यलक्ष्म्या मन्ये न ते मृत्युभयं नरेन्द्र ! ॥

बोधिसत्त्व उवाच—

**महतापि प्रयत्नेन यच्छक्यं नातिवर्तितुम् ।**
**प्रतीकारासमर्थेन भयवैक्लव्येन तत्र किम् ।**

इति परिगणितलोकस्थितयोऽपि तु कापुरुषाः

पापप्रसङ्गादनुतप्यमानाः शुभेषु कर्मस्वकृतश्रमाश्च ।
आशङ्कमानाः परलोकदुःखं मर्तव्यसंत्रासजडा भवन्ति ॥
चिरं विचिन्त्यापि च नैव पापे मनःपदन्यासमपि स्मरामि ।
विशोधितस्वर्गपथोऽहमेवं मृत्योः किमर्थं भयमभ्युपेयाम् ॥

तदुपश्रुत्य सौदासः प्रसादाश्रुव्याप्तनयनः समुद्भिद्यमानरोमाञ्च-पिटको विस्मृतपापस्वभावतामिस्रः सबहुमानमवेक्ष्य बोधिसत्त्वमु-वाच । शान्तं पापम् !

अद्याद्विषं स खलु हालहलं प्रजान-
न्नाशीविषं प्रकुपितं ज्वलदायसं वा ।
मूर्धापि तस्य शतधा हृदयं च यायाद्
यस्त्वद्विधस्य नृपपुङ्गव ! पापमिच्छेत् ॥

तदर्हति भवांस्तान्यपि मे सुभाषितानि वक्तुम्। अनेन हि ते वचनकुसुमवर्षेणाभिप्रसादितमनसः सुष्ठुतरमभिवृद्धं च तेषु मे कौतूहलम्। अपि च भोः

दृष्ट्वा मे चरितच्छायावैरूप्यं धर्मदर्पणे।
अपि नामागतावेगं स्यान्मे धर्मोत्सुकं मनः॥

अथैनं बोधिसत्त्वः पात्रीकृताशयं धर्मश्रवणप्रवणमानसमवेत्योवाच। तेन हि धर्मार्थिना तदनुरूपसमुदाचारसौष्ठवेन धर्मः श्रोतुं युक्तः। पश्य—

नीचैस्तरासनस्थानाद् विबोध्य विनयश्रियम्।
प्रीत्यर्पिताभ्यां चक्षुर्भ्यां वाङ्मध्वास्वादयन्निव॥
गौरवावर्जितैकाग्रप्रसन्नामलमानसः।
सत्कृत्य धर्मं शृणुयाद् भिषग्वाक्यमिवातुरः॥

अथ सौदासः स्वेनोत्तरीयेण समास्तीर्योच्चैस्तरं शिलातलं तत्र चाधिरोप्य बोधिसत्त्वं स्वयमनास्तरितायामुपविश्य भूमौ बोधिसत्त्वस्य पुरस्तादाननोद्वीक्षणव्यापृतनिरीक्षणस्तं महासत्त्वमुवाच। ब्रूहीदानीं मार्षे[1]ति।

अथ बोधिसत्त्वो नवाम्भोधरनिनदमधुरेण गम्भीरेणापूरयन्निव तद्वनं व्यापिना स्वरेणोवाच—

---

१ मार्ष मारिष। "आर्यस्तु मारिषः" इत्यमरः।

अथ सौदासः साधु युक्तमित्यभिप्रणम्यैनं सविस्मयमभिवीक्षमाणः पुनरुवाच—

अन्ये नरा मद्वशगा भवन्ति दैन्यार्पणात् त्रासविलुप्तधैर्याः ।
सन्त्यज्यसे त्वं तु न धैर्यलक्ष्म्या मन्ये न ते मृत्युभयं नरेन्द्र ! ॥

बोधिसत्त्व उवाच—

**महतापि प्रयत्नेन यच्छक्यं नातिवर्तितुम् ।**
**प्रतीकारासमर्थेन भयवैक्लव्येन तत्र किम् ।**

इति परिगणितलोकस्थितयोऽपि तु कापुरुषाः

पापप्रसङ्गादनुतप्यमानाः शुभेषु कर्मस्त्वकृतश्रमाश्च ।
आशङ्कमानाः परलोकदुःखं मर्तव्यसंत्रासजडा भवन्ति ॥
चिरं विचिन्त्यापि च नैव पापे मनःपदन्यासमपि स्मरामि ।
विशोधितस्वर्गपथोऽहमेवं मृत्योः किमर्थं भयमभ्युपेयाम् ॥

तदुपश्रुत्य सौदासः प्रसादाश्रुव्याप्तनयनः समुद्भिद्यमानरोमाञ्चपिटको विस्मृतपापस्वभावतामिस्रः सबहुमानमवेक्ष्य बोधिसत्त्वमुवाच । शान्तं पापम् !

अद्याद्विषं स खलु हालहलं प्रजान-
न्नाशीविषं प्रकुपितं ज्वलदायसं वा ।
मूर्धापि तस्य शतधा हृदयं च यायाद्
यस्त्वद्विधस्य नृपपुङ्गव ! पापमिच्छेत् ॥

तदर्हति भवांस्तान्यपि मे सुभाषितानि वक्तुम्। अनेन हि ते वचनकुसुमवर्षेणाभिप्रसादितमनसः सुष्ठुतरमभिवृद्धं च तेषु मे कौतूहलम्। अपि च भोः

दृष्ट्वा मे चरितच्छायावैरूप्यं धर्मदर्पणे।
अपि नामागतावेगं स्यान्मे धर्मोत्सुकं मनः॥

अथैनं बोधिसत्त्वः पात्रीकृताशयं धर्मश्रवणप्रवणमानसमवेत्योवाच। तेन हि धर्मार्थिना तदनुरूपसमुदाचारसौष्ठवेन धर्मः श्रोतुं युक्तः। पश्य—

नीचैस्तरासनस्थानाद् विबोध्य विनयश्रियम्।
प्रीत्यर्पिताभ्यां चक्षुर्भ्यां वाङ्मध्वास्वादयन्निव॥
गौरवावर्जितैकाग्रप्रसन्नामलमानसः।
सत्कृत्य धर्मं शृणुयाद् भिषग्वाक्यमिवातुरः॥

अथ सौदासः स्वेनोत्तरीयेण समास्तीर्योच्चैस्तरं शिलातलं तत्र चाधिरोप्य बोधिसत्त्वं स्वयमनास्तरितायामुपविश्य भूमौ बोधिसत्त्वस्य पुरस्तादाननोद्वीक्षणव्यापृतनिरीक्षणस्तं महासत्त्वमुवाच। ब्रूहीदानीं मार्ष[1] इति।

अथ बोधिसत्त्वो नवाम्भोधरनिनदमधुरेण गम्भीरेणापूरयन्निव तद्वनं व्यापिना स्वरेणोवाच—

---

१ मार्ष मारिष। "आर्यस्तु मारिषः" इत्यमरः।

**यदृच्छयाप्युपानीतं सकृत्सज्जनसंगतम् ।**
**भवत्यचलमत्यन्तं नाभ्यासक्रममीक्षते ॥ १ ॥**

तदुपश्रुत्य सौदासः साधु साध्विति स्वशिरः प्रकम्प्य साङ्गुली-विक्षेपं बोधिसत्त्वमुवाच । ततस्ततः

अथ बोधिसत्त्वो द्वितीयां गाथामुदाजहार—

**न सज्जनाद् दूरचरः क्वचिद्भवेद्**
**भजेत साधून्विनयक्रमानुगः ।**
**स्पृशन्त्ययत्नेन हि तत्समीपगं**
**विसर्पिणस्[1]तद्गुणपुष्परेणवः ॥ २ ॥**

सौदास उवाच—

सुभाषितान्यर्चयता साधो! सर्वात्मना त्वया ।
स्थाने खलु नियुक्तोऽर्थः स्थाने नावेक्षितः श्रमः ॥

ततस्ततः

बोधिसत्त्व उवाच—

---

१ विसर्पणशीलाः ।

रथा नृपाणां मणिहेमभूषणा
व्रजन्ति देहाश्च जराविरूपताम् ।
सतां तु धर्मं न जराभिवर्तते
स्थिरानुरागा हि गुणेषु साधवः ॥ ३ ॥[1]

सौदास उवाच । अमृतवर्षं खल्विदम् । अहो सन्तर्पिताः स्मः । ततस्ततः

बोधिसत्त्व उवाच—

नभश्च दूरे वसुधातलाच्च
पारादवारं च महार्णवस्य ।
अस्ताचलेन्द्रादुदयस्ततोऽपि
धर्मः सतां दूरतरेऽसतां च ॥ ४ ॥

( ६ )

अथ सौदासः प्रसादविस्मयाभ्यामावर्जितप्रेमबहुमानो बोधिसत्त्वमुवाच—

चित्राभिधानातिशयोज्ज्वलार्था गाथास्त्वदेता मधुरा निशम्य ।
आनन्दितस्तत्प्रतिपूजनार्थं वरानहं ते चतुरो ददामि ॥

तद् वृणीष्व यद्यन्मत्तोऽभिकाङ्क्षसीति ।

अथैनं बोधिसत्त्वः सविस्मयबहुमान उवाच। कस्त्वं वरप्रदानस्य ।

१ दृश्यताम्—धम्मपदे जरावग्गो ६

यस्यास्ति नात्मन्यपि ते प्रभुत्वमकार्यसंरागपराजितस्य।
स त्वं वरं दास्यसि कं परस्मै शुभप्रवृत्तेरपवृत्तभावः[१] ॥

अथ सौदासः किञ्चिद्व्रीडावनतवदनो बोधिसत्त्वमुवाच। अलमत्रभवतो मामेवं विशङ्कितुम्।

प्राणानपि परित्यज्य दास्यामि तानहं वरान्।
विस्रब्धं तद् वृणीष्व त्वं यद्यदिच्छसि भूमिप !॥

बोधिसत्त्व उवाच। तेन हि

सत्यव्रतो भव विसर्जय सत्त्वहिंसां
बन्दीकृतं जनमशेषमिमं विमुञ्च।
अद्या न चैव नरवीर ! मनुष्यमांस-
मेतान्वराननवरांश्चतुरः प्रयच्छ ॥

सौदास उवाच—

ददामि पूर्वान्भवते वरांस्त्रीनन्यं चतुर्थं तु वरं वृणीष्व।
अवैषि किं न त्वमिदं यथाहमीशो[२] विरन्तुं न मनुष्यमांसात् ॥

बोधिसत्त्व उवाच। हन्त ! तवैतत्संवृत्तम्। ननूक्तं मया कस्त्वं वरप्रदानस्येति। अपि च भोः

---

१ अपवृत्तः परिवृत्तः पराङ् मुख इति यावद् भावो यस्य सः। २ ईशः समर्थः।

सत्यव्रतत्वं च कथं स्यादहिंसकता च ते ।
अपरित्यजतो राजन्मनुष्यपिशिताशिताम् ॥

आह[1] । ननूक्तं भवता पूर्वं दास्याम्येतानहं वरान् ।
प्राणानपि परित्यज्य तदिदं जायतेऽन्यथा ॥

सौदास उवाच—

त्यक्त्वा राज्यं वने क्लेशो यस्य हेतोर्धृतो मया ।
हतो धर्मः क्षता कीर्तिस्त्यक्ष्यामि तदहं कथम् ॥

बोधिसत्व उवाच । अत एव तद्भवांस्त्यक्तुमर्हति ।

धर्मादर्थात्सुखात्कीर्तेर्भ्रष्टो यस्य कृते भवान् ।
अनर्थायतनं तादृक् कथं न त्यक्तुमर्हसि ॥

तदलं ते पाप्मानमेवानुभ्रमितुम् । अवबोद्धुमर्हस्यात्मानम् । सौदासः खल्वत्र भवान् ।

चित्तस्य नार्हसि नरेन्द्र वशेन गन्तुं
धर्मार्थयोरनुपरोधपथं भजस्व ।
एको नृपान्युधि विजित्य समस्तसैन्यान्[2]
मा चित्तविग्रहविधौ परिकातरो भूः ॥
लोकः परोऽपि मनुजाधिप नन्ववेद्यस्
तस्मात्प्रियं यदहितं च न तन्निषेव्यम् ।

---

१ आहेति आक्षेपेऽव्ययम् । २ समस्तानि परिक्षितानि पराजितानीति यावत् सैन्यानि येषां ते समस्तसैन्या नृपास्तान् ।

यत्स्यात्तु कीर्त्यनुपरोधि मनोज्ञमार्गं
तद्विप्रियं सदपि भेषजवद्भजस्व ॥

अथ सौदासः प्रसादाश्रुव्याप्तनयनो गद्गदायमानकण्ठः समभिसृत्यैव बोधिसत्त्वं पादयोः सम्परिष्वज्योवाच—

गुणकुसुमरजोभिः पुण्यगन्धैः समन्ता-
ज्जगदिदमवकीर्णं कारणे[1] त्वद्यशोभिः ।
इति विचरति पापे मृत्युदूतोग्रवृत्तौ
त्वमिव हि क इवान्यः सानुकम्पो मयि स्यात् ॥

शास्ता गुरुश्च मम दैवतमेव च त्वं
मूर्ध्ना वचांस्यहममूनि तवार्चयामि ।
भोक्ष्ये न चैव सुतसोम मनुष्यमांसं
यन्मां यथा वदसि तच्च तथा करिष्ये ॥

नृपात्मजा यज्ञनिमित्तमाहृता
मया च ये बन्धनखेदपीडिताः ।
हतत्विषः शोकपरीतमानसास्
तदेहि मुञ्चाव सहैव तानपि ॥

( ७ )

अथ बोधिसत्त्वस्तथेत्यस्मै प्रतिश्रुत्य यत्र ते नृपसुतास्तेनावरुद्धास्तत्रैवाभिजगाम। दृष्ट्वैव च ते नृपसुताः सुतसोमं हन्त ! मुक्ता

---

१ कारणे स्थाने ।

वयमिति परं हर्षमुपजग्मुः। अथैनानभिगम्य बोधिसत्त्वः समाश्वासयन्प्रियवचनपुरःसरं च प्रतिसम्मोद्य सौदासस्याद्रोहाय शपथं कारयित्वा बन्धनाद्विमुच्य सार्धं सौदासेन तैश्च नृपतिपुत्रैरनुगम्यमानः स्वं राज्यमुपेत्य यथार्हकृतसंस्कारांस्तान् राजपुत्रान्सौदासं च स्वेषु स्वेषु राज्येषु प्रतिष्ठापयामास।

तदेवं श्रेयः समाधत्ते यथातथाप्युपनतः सत्सङ्गम इति श्रेयोर्थिना सज्जनसमाश्रयेण भवितव्यम्॥

[ आर्यशूरविरचितजातकमालायाः

---

( २० )

**इयमुदरदरी दुरन्तपूरा**
**यदि न भवेदभिमानभङ्गभूमिः।**
**कथमपि न सहे भवादृशानां**
**कुटिलकटाक्षनिरीक्षणं नृपाणाम्॥**

"माने भग्ने कुतः सुखम्" इत्यादर्शमनुसरतः,

अपहरति महत्त्वं प्रार्थना किं न जाने
जनयति गुरुलज्जामित्यहं किं न वेद्मि।
तदपि वद वदान्यं तं सदा प्रत्यहं मां
जठरपिठरवर्ती वह्निरर्थीकरोति॥

इत्युक्त्यनुसारं दुर्भरोदरपूरणार्थमभिमानिनां प्रभूणां सेवया जीवन-वृत्तेरुपार्जने कदर्थनामनुभवतः, सर्वमेतदुदरहेतुकमिति चावगच्छतः, कस्यचिन्मानधनस्य मनस्विनः सोपालम्भमुदरमहिमवर्णनपरोक्तिरियम्—

इयमुदरदरी दुरन्तपूरेत्यादि ।

तदत्रास्योदरस्य कीदृशं महत्त्वम्, कियांश्च प्रभावः, कथं च तत्पूरणार्थं मनुजाः कर्तव्याकर्तव्यचिन्तामुत्सृज्य परवशा इव जगति नानाविधव्यापारेषु प्रवृत्ता भवन्तीत्येवाधस्तात्सविशदं प्रतिपाद्यते । तथा हि—

एतत्खलु त्रिभुवनप्रभवेणानन्तलीलानिलयेन भगवता परमेष्ठिना सृष्टं विविधकुतूहलाकुलमद्भुतं विशालं जगद् वीक्षमाणानां मनसि महान्तं विस्मयमावहति । अत्र खलु ये गिरिसरिद्वनादयो नैकविधाः प्राकृतिकसौन्दर्यावहा मनोरमा लोकोपकारिणश्च पदार्थास्तेषामेकस्यापि याथार्थ्येन स्वरूपमवगन्तुं को ब्रह्मर्षिकल्पोऽपि कल्पते । अहो ! क्षणमेव तावद्विचारबुद्ध्यावधार्यतां यद्ब्रह्मादेरेकस्यापि पदार्थस्य तत्त्वबुभुत्सयाऽऽजीवनं तपांसि तपन्तो ब्रह्मचर्यमाचरन्तो विसृज्य भोगसम्पदोऽरण्येषु विश्राम्यन्तोऽपि मनीषिणस्तत्तत्त्वज्ञानेऽवसीदन्ति ।

तत्रैवं तेन भगवतातिविस्मयास्पदीभूतेषु सृष्टेषु वस्तुषु विशेषतो नितरामतिप्रभाववदेतदुदरम् । व्याप्तं ह्यनेन जगदखिलम् । सर्वत्रैवानवरुद्धमकण्टकमेतच्छासनम् । न केवलमाबालवृद्धमाराज-

रङ्कमापामरप्राज्ञं, किन्तु आकृमिकीटमपि, सर्व एव हि प्राणिन एतद्वश्याः ।

एष खलु निजमहिम्ना स्वप्रभावेण च महामहिम्नो देवानप्यतिशेते। सन्तु देवानामङ्गुलिनिर्देश्याः केचित्समुपासकाः, तेऽपि मानवा एव। मानवेष्वपि केचिदेव नानाविधविपज्जालज्वालावलीसुदुःसहं मोहसलिलप्रचलदूर्मिमालाकुलं क्रोधादिमहाग्राहसङ्कुलमिमं संसृतिपाथोनिधिं दृष्ट्वा, तथा

वाताभ्रविभ्रममिदं वसुधाधिपत्य-
मापातमात्रमधुरो विषयोपभोगः ।
प्राणास्तृणाग्रजलबिन्दुसमा नराणां
धर्मः सखा परमहो परलोकयाने ॥

इति विमृशन्तो देवानुपासते। परं कस्तादृशो यो जन्मासाद्य जठरवश्यो न भवेत् ।

जन्मारभ्य मरणपर्यन्तं न केवलं प्रतिदिनं किन्तु प्रतिक्षणमस्य प्रभावः केन नानुभूयते; महिमा वा, यदि न शब्दद्वारा, तर्हि व्यवहारद्वारा केन न गीयते। वस्तुत एतदभावे संसारस्थितिरेव सुदुर्लभा।

ततश्च विचित्रा हि वाङ्मनसयोरगोचरीभूता मायैतस्य, जिह्वासाहस्र्यपि यां वर्णयितुमशक्ता। एवं च सति सिन्धुरानना[1]दीनां

---

१ सिन्धुराननो गजाननो गणेशः ।

देवानां माहात्म्यवर्णनपरेषु परःशतेषु स्तोत्रकदम्बकेषु विद्यमानेष्वपि, महामहिम्नो लोकानखिलानवाप्तवतो जठरस्य स्तोत्राणामभावो नूनमेतस्य गुणगौरवपरम्परामपारयतो वर्णयितुं कविमण्डलस्यैव धीमान्द्यप्रख्यापक इति मन्यामहे !

एवं चातिप्रभाववदतिमहत्त्वयुक्तं चैतदुदरम्। एतद्धेतुका एव हि सर्वे लौकिका व्यवहाराः। तथा च लौकिकानामाभाणकः— "सर्वारम्भास्तण्डुलप्रस्थमूलाः" इति। किं बहुना, सम्पत्तिशास्त्रस्य मूलभित्तिरुदरपूरणचिन्तैव। धर्मादिपुरुषार्थचतुष्टयावाप्तेर्मुख्य-साधनस्य शरीरस्य च धारणकारणमुदरमेव।

परमेष महान्प्रभावो महिमा चोदरस्य न केवलं गुणपक्ष एव किन्तु तदितरपक्षेऽपि दृश्यते। स्वभाव एवैष परमेश्वरसृष्टौ प्रायः सर्वेषां पदार्थानां, विशेषतश्चातिमहत्त्वयुक्तानां, यत्तेषां प्रभावो न केवलं प्राणिनामभिमतानां प्रियाणां चार्थानां साधनत्वेनैव दृश्यते, किन्तु नैककारणवशात्प्रायस्तत्प्रतिकूल-रूपत्वेनाप्यनुभूयते। एतन्नियमानुसारेणैव संसारस्थितेः प्रधान-कारणस्यैतस्योदरस्य रौद्रमप्रियं च रूपमपि सर्वत्र दृष्टिगोचरतां यात्येव।

तथा च। हा हन्त! कस्यैतदविदितं यद् दुर्भिक्षकाले प्राणे-भ्योऽपि वल्लभतरं निजनयनचकोरचन्द्रम् "आत्मा वै पुत्रनामासि" इत्यादिश्रुतिशिरोवाग्भिरसकृद् गीयमानमात्मस्वरूपमात्मजं पितरावे-तस्यैव पापीयसो दग्धजठरस्य कृते विक्रीणाते! ऐहिकामुष्मिकसुखदं

सखायं धर्मं च परित्यज्य विधर्मिणां शरणं यान्ति मानवाः! निखिलमेतदेतस्यैव विलसितम्।

उदरव्याधिना खिन्नो हि मर्त्यः किं किन्नानुतिष्ठति? गिरिगुरु-गर्त्तदुर्गमे कान्तारे वा, विविधव्यालकुलसमाकुले पाताले वा, अगाध-जलसञ्चारे सागरेऽपि वा नहि गम्यागम्यं विमृशति। नेयम-त्युक्तिः। ट्रांसवाल, फ़ीजी इत्यादिषु सुदूरेषु प्रदेशेषूपनि-वेशेषु च जीविकाया उपार्जनार्थमेव गतवतां नानाविधप्रतिकूल-परिस्थितिषु च कालमतियापयतां या खल्वस्मद्देशीयानामवस्था दुरवस्था वा सा कस्याविदिता। आः! निखिलमेतज्जठरहतक-स्यैव क्रीडितम्।

क्षुद्व्याधिना हि खिन्नस्य नहि धर्माधर्मविमर्शोऽपि किञ्चित्का-र्यावरोधहेतुः। तथा चाहुरभियुक्ताः "बुभुक्षितः किं न करोति पापम्" इति। यत्खलु प्रायशः सर्वेष्वेव देशेषु

जननी जन्मभूमिश्च स्वर्गादपि गरीयसी।

इत्यनुसारं जननीसमानाया मातृभूमेरनिष्टं मानवापसदैर्देश-द्रोहिभिराचर्यते तदेतत्कारणादेव। केन हि न श्रुतानि यूरोपीय-महायुद्धावसरे फ्रांसादिदेशेष्वनेकेषां देशद्रोहिणामेतादृशा-न्युदाहरणानि।

अहो क्षुधातुराणां मानावमानविचारोऽपि दूरत एव धावति। यं खलु मानं "सतां माने म्लाने मरणमथवा दूरगम-नम्"—तथा हि

न्यक्कारमुदरभरणे लब्ध्वा राहुर्जहावुदरमेव ।
इच्छति मानी मरणं न च गच्छति वैरिणः शरणम् ॥

—इत्येवं बहुधाभिष्टुवन्ति सन्तः, तमपि मानं विसृज्य क्षुत्क्षामकण्ठो मानमहतामग्रेसरोऽपि मानधन इमामुदरदरीं

कष्टात्कष्टतरं किं परगृहवासः परान्नं च ।

इत्याद्युक्त्यनुसारं नितरामवज्ञाहेतुपरान्नयाचनरूपभिक्षाकारणत्वेन मानभङ्गभूमिं पूरयितुं क्षुद्राणामविवेकमूढमनसामीश्वराणां वित्तव्याध्यविवेकसंकुलगिरः श्रृण्वन् द्वारं द्वारमटन्

परसदननिविष्टः को लघुत्वं न याति ।

इत्यादिवचोऽनुरूपमवज्ञाभाजनं भवति । सर्वमेतदेतस्य पापीयसो जठरस्य लीलायितम् । तथा च महामतेर्भर्तृहरेः किञ्चित्परिवर्तितं पद्यम्—

दीनादीनमुखैः सदैव शिशुकैराकृष्टजीर्णाम्बरां
क्रोशद्भिः क्षुधितैर्निरन्नविधुरां दृष्ट्वा निजां गेहिनीम् ।
याच्ञाभङ्गभयेन गद्गदगलत्त्रुट्यद्विलीनाक्षरं
को देहीति वदेन्न दग्धजठरस्यार्थे प्रभूणां पुरः ॥

ततश्च महाप्रभावोऽयं रौद्रमूर्त्तिर्दग्धो जठरहतकः । नास्त्यस्माकं वाग्विभवस्तं वर्णयितुम् । एनेन तथा ग्रस्तं समस्तं भूतलं यदेतद्वश्यो मनुजः प्रियात् प्रियतरमपि पुत्रकलत्रादिकं परित्यजति, अनन्यसहायं धर्ममपि परिहरति, अधर्मं देशद्रोहमथाचरति ।

किमधिकम्, यो हि मानः प्राणेभ्योऽपि प्रेयान्, येन विना मनुष्य-स्तृणकल्पः—तथा हि

पादाहतं यदुत्थाय मूर्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥

—तमपि मानं विसृज्य परान् याचमानो भिक्षां तेषामवज्ञां लभते । तत्रैतौ श्लोकौ भवतः—

अस्य दग्धोदरस्यार्थे किं न कुर्वन्ति पण्डिताः ।
वानरीमिव वाग्देवीं नर्तयन्ति गृहे गृहे ॥
किमकारि न कार्पण्यं कस्यालङ्घि न देहली ।
अस्य पापोदरस्यार्थे किमनाटि न नाटकम् ॥

अत एव च "सकललघिमकारणमुदरम्", "दुर्भरमुदरम्",

विपुलविलसल्लज्जावल्लीवितानकुठारिका ।
जठरपिठरी दुष्पूरेयं करोति विडम्बनम् ॥

इत्यादयः कवीनां सोपालम्भं हृदयोद्गारास्तद्विषये ।

तस्मादवितथमेवेदं स्वर्णाक्षरलेख्यं सुभाषितं वचोऽभिभाषितं केनापि विपश्चितामपाश्चात्येन—

इयमुदरदरी दुरन्तपूरेत्यादि ॥

---

( २१ )

# धर्मः

इह संसारे समस्तदेहिवर्गाणामेवेयं नैसर्गिकी लालसावलोक्यते यत्कथमपि सुखाधिगतिर्भवेत्। तथा हि तेषां सर्वेऽपि यत्नाः साक्षादसाक्षाद्वा तस्यैव लाभाय भवन्ति। सुखाभिलाषेणैव केचिन्मानवा धनोपार्जनमेव तत्साधनं मन्यमानास्तदासादनार्थं प्रयतन्ते। सर्वप्रकारकैर्न्याय्यैरन्याय्यैर्वा साधनैः सुखमासिसादयिषवो हि ते परधनहरणाद्यपि नानुचितं मन्यन्ते। अन्ये पुनरपत्यमेव सुखसाधनं मन्यमानाः सर्वथा धनैरापूर्णेऽपि गृहे तदभावाद् दुःखं दुःखमित्येवाक्रन्दन्ति सुबहुशो दिवानिशम्। अपरे पुनः सत्यामपि पुत्रादिसन्ततौ प्रतिष्ठाकामुका धनिनो धनधान्यं तदधिगत्यै तृणाय मन्यन्ते। एवं नानाविधप्रयत्नपरा मनुजाः प्राप्तेष्वपि तत्तद्वस्तुषु शान्तिमप्राप्य "अशान्तस्य कुतः सुखम्" इति न्यायेन स्थिरं सुखमनधिगत्यैव तिष्ठन्ति। तत्र किं परमार्थतः सुखसाधनमिति विचिकित्सायामेवमेव समाहितं मनीषिभिर्यद्धर्म एव तत्साधनमिति।

धर्मो हि नाम तत्तदिन्द्रियविषयप्राप्तिजन्यां क्षणिकां सन्तुष्टिमनपेक्ष्य वस्तुत आत्मकल्याणसाधनस्याचरणमिति।

एष एव पशुमनुष्ययोर्भेदो यत्पशवस्तत्तदिन्द्रियवशानुगा हि प्रतिक्षणं व्यवहरन्ति। मनुष्यः पुनस्तात्कालिकसुखाभि-

लाषमनादृत्य आत्मकल्याणरूपं स्थायि सुखमपेक्ष्यापि कर्मपरो भवितुं शक्नोति। सत्यप्येवं साधारणाः पामरा मानवाः पशुनिर्विशिष्टा एव निजव्यवहारेषु। केचिदेव बुद्धिमन्तः

वाताभ्रविभ्रममिदं वसुधाधिपत्य-
मापातमात्रमधुरो विषयोपभोगः।
प्राणास्तृणाग्रजलबिन्दुसमा नराणां
धर्मः सखा परमहो परलोकयाने॥

इत्यादि स्मरन्तोऽस्थिरं तत्तदिन्द्रियतृप्तिजन्यं सुखमनपेक्ष्य स्थिरमात्मकल्याणरूपं सुखमपेक्षन्ते। तादृशमेव सुखं शान्तिरानन्दः श्रेय इत्यादिशब्दैर्व्यवह्रियते।

स खलु धर्मो द्विविधः—वास्तविकस्तत्साधनरूपश्च। तत्र वास्तविकः सर्वकालेषु सर्वदेशेषु च समानः। द्वितीयः पुनस्तत्तद्देशकालाद्युपाधिभेदेन भिद्यते। तत्र धृतिः क्षमा शमो दानमहिंसा सत्यमित्यादिरूपो धर्मः प्रथमकक्षामवगाहते। द्वितीयस्तु तत्तत्सम्प्रदायगतः परम्परागतः कर्मकाण्डरूपः। यथा तत्तत्प्रकारैः सन्ध्याविधिः, तत्तत्तीर्थयात्रा इत्यादि।

प्रायशः सांसारिकक्षणिकसुखानुरक्तानामेवं प्रतीयते यद्धर्माचरणमतीव क्लेशसाध्यं भवति। "यत्तदग्रे विषमिव परिणामेऽमृतोपमम्" इति न्यायेन धर्माचरणे ह्यादावतीव कष्टमनुभूयते। अधर्माचरणे त्वेतत्प्रतिकूलैव वार्ता। स्वाभाविकं चैतत्। उच्चप्रदेशाधि-

रोहणमिव नानाजन्मागतनीचप्रवृत्तीरुत्सृज्य स्वाराज्यरूपोच्चप्रदेशाधिरोहणं दुःखकरमेव प्रतीयते ।

तत्र दूरदर्शिनः सन्तः क्षणिकं तात्कालिकं तत्तदिन्द्रियतृप्तिजन्यं सुखं तिरस्कृत्य पारमार्थिकं सुखमेवेप्सन्तस्तदधिगत्यै एव प्रयत्नपरा भवन्ति । "परोक्षप्रिया हि देवाः प्रत्यक्षद्विषः" इत्यादर्शमनुसरन्तस्ते परोक्षं सुखमेव स्वलक्ष्यं मन्यन्ते । मन्दाः पुनः प्रत्यक्षमेव क्षणिकं सुखमाद्रियन्ते । तदत्रैषा श्रुतिर्भवति—

अन्यच्छ्रेयोऽन्यदुतैव प्रेय-
स्ते उभे नानार्थे पुरुषँ सिनीतः[१] ।
तयोः श्रेय आददानस्य साधु भवति
हीयतेऽर्थाद्[२] य उ प्रेयो वृणीते ॥
श्रेयश्च प्रेयश्च मनुष्यमेत-
स्तौ सम्परीत्य[३] विविनक्ति धीरः ।
श्रेयो हि धीरोऽभि प्रेयसो वृणीते
प्रेयो मन्दो योगक्षेमाद्[४] वृणीते ॥

( कठोपनिषद् २।१-२ )

विदुषां हि दृष्टौ नहि सांसारिकवस्तुषु वास्तविकं महत्त्वम् ।

---

१ नानार्थे भिन्नप्रयोजने । सिनीतो बध्नीतः । २ अर्थात् पारमार्थिकपुरुषार्थात् । ३ संपरीत्य सम्यक् परिगम्य । ४ योगक्षेमाद् योगक्षेमनिमित्तम् ।

किन्तु आत्मकल्याणसाधने धर्माचरण एव। तथा च एवं हि दृश्यते। लोके ये धनसम्पन्नास्ते सन्तत्यभावेन दुःखिनः, ये सन्ततिमन्तो धनविरहेण ते दुःखिताः। सतोरप्येनयोः प्रतिष्ठाविहीनाः केचित्संतप्ताः। सद्भावेऽप्येतेषां यदि नास्त्यारोग्यं तदापि दुःखमेव। एवमेव लोके जना भ्रान्त्या अन्यान्यपि सुखसाधनानि मन्यन्ते। वास्तविकं तु सुखसाधनं धर्म एव।

धर्मेणैव सुखमेधते। धर्म एवेहामुत्र चाभ्युदयनिःश्रेयससिद्ध्यै प्रभवति। तथा च काणादं सूत्रम्—"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" इति। नैवास्त्यन्यत्किञ्चिज् जीवलोके यदेतादृशं सुखसाधनं भवेत्। उक्तप्रमाणादेवैतदर्थादापद्यते यद्धर्माचरणं नावश्यं सांसारिकैश्वर्यविरोधि एव। आपाततः समीक्षण एवाधर्माचरणं तत्साधनं प्रतीयते। वस्तुतस्तु "नाधर्मश्चिरमृद्धये"

नाधर्मश्चरितो लोके सद्यः फलति गौरिव।
शनैरावर्तमानस्तु कर्तुर्मूलानि कृन्तति॥
अधर्मेणैधते तावत्ततो भद्राणि पश्यति।
ततः सपत्नाञ्जयति समूलस्तु विनश्यति॥

(मनुस्मृतिः ४।१७२, १७४)

इत्यादिप्रमाणानुरूपं किञ्चित्कालपर्यन्तं सुखसाधनत्वेन प्रतीयमानमपि तदन्ततो महते दुःखाय कल्पते। ततश्चैहलौकिकपारलौकिकसुखस्य निःश्रेयसस्य च वास्तविकं कारणं धर्म एव।

नहि धार्मिका अवश्यमेव सांसारिकैश्वर्यविमुखा भवन्ति। किन्तु ते सांसारिकैश्वर्यं केवलं धर्माचरणस्यैव साधनमिति मन्यमानाः सततं धर्माविरुद्धाचरणेनैव तदधिगत्यै प्रयतन्ते। अत एव धर्मार्थ-काममोक्षाख्येषु चतुर्विधपुरुषार्थेषु धर्मस्य प्राथम्यमभ्युपगम्यते।

ततश्चैहिकामुष्मिकसुखसाधनं मनुष्यस्य च परमः सखा यत्खलु धर्मानुष्ठानम्॥

---

( २२ )

# क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत्॥

इह खलु विविधचरित्रविचित्रिते जगति दृष्टिपथमायान्ति द्विविधा मानवाः—संशयात्मानो निश्चयात्मानश्च। आद्यास्तावद-खिलेष्वासाद्यस्त्रीयमनोरथेष्वनिश्चितान्तःकरणा भवन्ति। ततश्च "संशयात्मा विनश्यति" इत्याद्यभियुक्तोक्त्यनुसारं नैव ते स्ववाञ्छितमर्थमधिगन्तुं शक्ताः। प्रथमं तु तेषामप्रवृत्तिरेव स्व-मनोरथसाधनाय। कथञ्चित्प्रवर्तमाना वा स्वल्पेनैवावरोधेन निरुद्धाः स्वाभीप्सितसाधनव्यापारान्निवर्तन्ते। ततश्च तेषां मनोरथाः "उत्पद्यन्ते विलीयन्ते दरिद्राणां मनोरथाः" इति न्यायेन केवलं मनोमोदकसदृशा एव भवन्ति।

द्वितीयास्तु स्वाभीष्टेष्वर्थेषु स्थिरनिश्चयाः साहसोत्साहमूर्त्तयो यदपि वाञ्छन्ति बद्धपरिकरास्तदर्थं प्रयतमाना भवन्ति। नैवेह त्रिलोक्यां महान्ति कष्टानि, कृच्छ्राणि तपांसि, अन्यानि वा कारागारपातनप्रभृतीनि दुःखानि स्वीयव्यापारान्निवर्तयितुं तान् प्रभवन्ति। तानेनान् द्वितीयविधानेव मानवोत्तमानभिलक्ष्य कविकुलगुरोः कालिदासस्य सुभाषितमिदम्—

क ईप्सितार्थस्थिरनिश्चयमित्यादि।

अस्यार्थः। वाञ्छितार्थसम्पादने दृढनिश्चयं मनः, निम्नस्थलप्रवृत्तं च सलिलं कः प्रतीपयेदिति। अयं भावः। यथाधःप्रदेशगमनोन्मुखं निम्नगादीनां पयो महान्ति कान्ताराणि स्थलानि वा प्रतीपयितुं नहि पारयन्ति। अन्यद् वा किञ्चिन्नैव जातु तत्सर्वथा निरोद्धुं क्षमम्। तद्धि समुत्खाय समूलमभ्रङ्कषानपि तरून् कान्तारपरम्परा अपि नाशयति। गुरुग्रावपरम्परादुर्गमेषु गिरिगर्भेषु च स्वमार्गं सम्पादयति। एवमेव ये निश्चयात्मानः सत्यसन्धाः साधवो महीयांसोऽतिमानमहिमानो धीरास्तेऽपि स्वाभीप्सितार्थमासादयितुं प्रवृत्ता विघ्नैरतिमात्रं ताड्यमाना अपि नहि स्वनिश्चितव्यापाराद्विरमन्ति।

कस्यैतदविदितं यत् "मनोरथानामगतिर्न विद्यते" इत्यनुसारं नानाविधमनोरथरतमानवकुलसंकुलेऽस्मिन् भुवने नैजवाञ्छितानुरूपं तत्तत्कार्यसम्पादनपरा विविधव्यापारव्यापृताः समायान्ति दृष्टिपथमशेषा मानुषाः। परं स्वस्वव्यापारपराणां तेषां

नियतिवशान्नियतमेत्र प्रायशो जायते प्रचुरविघ्नसन्ततिसमुद्भूतिः। तत्र ये लघीयांसोऽधीरभीरवस्तेऽसहमाना विपत्परम्परास्त्यजन्त्येव स्वाभीष्टाधिगतेः प्रत्याशाम्। ये तु सत्यसन्धा अप्रतिहतप्रतापा महानुभावाः प्राणोपहारेणापि प्रतिश्रुतादर्थादविरमणशीला धैर्यकञ्चुका मानवास्त एव स्वाभीप्सितार्थेषु साफल्यं लभन्ते। सोत्साहघने हि वीरहृदये न जातु खेदोऽधैर्यं वावकाशं लभते। तादृशानेव दृढसङ्कल्पान् मानवकुलतिलकानुद्दिश्य गीयते—

उदयति यदि भानुः पश्चिमे दिग्विभागे
प्रचलति यदि मेरुः शीततां याति वह्निः।
विकसति यदि पद्मं पर्वताग्रे शिलायां
न भवति पुनरुक्तं भाषितं सज्जनानाम्॥

कञ्च। अङ्गनवेदी वसुधा कुल्या जलधिः स्थली च पातालम्।
वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य वीरस्य॥

सत्यमेवंविधा एव महासत्त्वा विपत्परम्पराः समापतन्तु, सपदि राज्यलक्ष्मीर्विलयमेतु, शिरस उपरि कृपाणधाराः पतन्तु, किं बहुना, प्राणात्ययेऽप्यभीप्सितमर्थमसाधयित्वा न निवर्तन्ते। ते हि विपत्समागमं स्वपरीक्षणार्थमेवोदितं मन्यन्ते। कनकस्य निकषोपल इव तेषां परीक्षणार्थमेव व्यसननिकषोपलोदयः। तदत्र स्मृतिपथमायाति तत्रभवतो भर्तृहरेः पद्यमेतत्—

आरभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः सहस्रगुणितैरपि हन्यमानाः
प्रारभ्य चोत्तमजना न परित्यजन्ति ॥

सार्वकालिकं सार्वत्रिकं चैतद् वृत्तं मानवकुलावतंसानाम् । इतिहासपुराणेषु तावत् शतशो गाथा एतदर्थनिदर्शनीभूताः श्रूयमाणा आह्लादयन्ति नश्चेतांसि ।

यथा हि भगवति कैलासाधिपतौ तपस्यति, समाधिभङ्गार्थमतिमात्रं मन्मथेन प्रयत्ने कृतेऽपि, नहि समाधिभेदाय कोऽप्यन्तरायः प्रभुर्बभूव । तथा चाकर्ण्यते—

श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्हरः प्रसंख्यानपरो बभूव ।
आत्मेश्वराणां नहि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति ॥

यथा वा भगवत्युमा सर्वेश्वरेण हरेण साकं विवाहार्थं कृताध्यवसाया, तदर्थं कृच्छ्रं तपश्चरन्ती, त्वग्वासांसि धारयन्ती, मात्रा मेनया च बहुविधं स्वाभीप्सितादर्थान्निवार्यमाणा पि, व्रतभङ्गमकुर्वती तत्परैवासीत् ।

एवमेव पृथ्वीराजप्रभृतिभिः साकं तद्गुणोत्कर्षाकर्णनजनितप्रेमातिशयगृहीतपाणिग्रहणव्रतानां संयोगिताप्रभृतीनां महिलावतंसानाम्, क्लिष्टातिक्लिष्टप्रतिज्ञापालनपराणां भीष्महरिश्चन्द्ररामचन्द्रादीनां च राजर्षीणां बह्वयो गाथाः ।

अद्यत्वेऽपि बाष्पयानविद्युद्यन्त्रव्योमयानप्रभृतिविषयिका यापि चेतोविस्मापन्यवर्णनीया समन्ततः समुन्नतिः समालोक्यते सापि चारुचरित्रचर्चितानां स्वाभीष्टार्थादविरमणशीलानां मानवकुलतिलकानामेव कृतिः। अहरहो वा स्वाभीप्सितार्थस्थिरनिश्चयानामनेकेषां व्योमयानादिविद्यासमुन्नत्यै कृतप्राणपरित्यागानां संवादाः कस्य सहृदयस्य हृदये विस्मयादिभावान् नोद्भावयन्ति।

तस्मादवितथमेवेदमुच्यते—

क ईप्सितार्थस्थिरनिश्चयमित्यादि ॥

---

(२३)

## भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥

कथं नु खलु नानाविधविपज्जालज्वालावलीसुदुःसहस्य संसारसागरस्यैतस्य पारं गन्तुं सान्द्रानन्दसदनं परमेश्वरं च प्राप्तुं प्रभवति मनुष्य इति मीमांसायां श्रुतिशिरोवाणीयं समुल्लसति—

भिद्यते हृदयग्रन्थिरित्यादि।

एष एवार्थोऽधोवर्णितया हृदयङ्गमया कल्पिताख्यायिकया विशदीक्रियते।

कदाचिदेको महीपतिर्मृगयाप्रसङ्गेन सुदूरमटन् सर्वानुचरगणैर्वियुक्त एकाकी शुभभाग्यवशात्कस्यचिन्महर्षेराश्रमपदं प्राप। तत्र तेन मुनिना दत्तैः फलजलैर्हृतक्लमः पर्यटन्नाश्रमादनतिदूरे बृहतीमेकां गुहामद्राक्षीत्। गुहां प्रविश्य तस्यामेकमुत्तमं मन्दिरं दृष्ट्वा संजातकौतुको यावज्जालगवाक्षैस्तदभ्यन्तरमवलोकयितुं प्रवृत्तस्तावत्पश्यति यत्तत्र कापि योषित् सभृङ्गकं चक्रमेकं भ्रामयन्ती तिष्ठति। तदनन्तरं ते भृङ्गास्तत्र स्थितौ वृषमेकं गर्दभञ्च समाश्रिताः। ताभ्यां च वृषगर्दभाभ्यां मुक्तौ क्षीरासृक्फेनौ पीत्वा ते भृङ्गाः सिता असिताश्च भूत्वा स्वविष्ठाभिर्जालकारका जाताः। ततस्तैर्द्विविधैर्विविधाः सुपुष्पैर्विषपुष्पैश्च संयुता जालपाशाः कृताः। ते च जालकारकास्तेषु पुष्पेषु यथासुखं संस्थिताः।

अथ ते श्वेतकृष्णोभयमुखेन सर्पेणैकेन समेत्य दष्टाः पुनस्तथैव तान् पाशांश्छित्त्वा यथायथं स्थिताः। अथ विषज्वालया तत्पुष्पजालस्थेष्वारटत्सु अन्येऽप्यजालस्थाः क्रन्दितुं प्रवृत्ताः। तेन तेषां रोदनध्वनिना भग्नसमाधिस्तत्रस्थः कोऽपि दयालुस्तापसस्तान् जालादमोचयत्। ततो निर्दग्धपाशास्ते कस्यापि द्रुमस्य विवरं प्रविष्टाः सूर्यतेजसि विलीना अभवन्। तावच्च सा योषित्सचक्रवृषगर्दभा क्वापि गता।

एतदालोक्य स महीपतिराश्रमपदं गत्वा तन्महदाश्चर्यं तस्मै महर्षयेऽवर्णयत्। स च तद्रहस्यमेवमुदघाटयत्।

सौम्य! या त्वया तत्र स्त्री दृष्टा सा माया। तद्भ्रामितं

च यच्चक्रं तत्संसारचक्रम्। ये भृङ्गास्ते तत्र जन्तवः। यौ च वृषगर्दभौ दृष्टौ तौ धर्माधर्मौ विद्धि। ताभ्यां वान्तं च यद् दुग्धमसृक् च ते उभे सुकृतदुष्कृते। ये च जालपाशा निर्मितास्ते सुतादयः। सुपुष्पाणि विषपुष्पाणि च यानि तानि सुखदुःखानि। कालेन यथास्वं तेषु तेषु ते संसक्ताः। वत्स! इत्थं शुभाशुभफलमुखेनाहिरूपेण कालेन हताः प्राणिनस्तया स्त्रीरूपया मायया नानायोनिषु क्षिप्ताः। ते च तुल्यासु पतिताः श्वेताः, अतुल्यासु कृष्णाः। इत्थं द्विविधाः पुत्रादिजालपाशेषु सुखदुःखानुबन्धिषु संसक्ता जायन्ते। ततो निर्जैर्जालैः कृष्टा बद्धाश्च दुःखविषार्दिता नितरामुद्विग्नाः क्रन्दितुं प्रवृत्ताः शरण्यं परमेश्वरमाह्वयन्ति। ततः प्रबुध्य तेन तापसरूपिणा देवेन ज्ञानाग्निज्वालया सर्वे दग्धपाशाः कृताः। ततश्च ते द्रुमरूपादित्यमण्डलं प्रविष्टाः परमं धाम ययुः। सा च माया चक्राकारेण संसारेण वृषगर्दभाकारधर्माधर्माभ्यां च सहिता क्वापि प्रणष्टा। एवमेव वत्स! स्वकर्मभिः शुक्लाः कृष्णाश्च जन्तवोऽस्मिन् संसारे भ्रमन्ति। ईश्वराराधनसंजातज्ञानाग्निना च दग्धपाशा मुच्यन्ते संसारसङ्कटात्। तद् गीयते—"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" इति। अयमेवार्थस्तव मोहनिवृत्तये परमेश्वरेण सन्दर्शितस्योक्तेन्द्रजालस्य। तथा च श्रुतिः—

भिद्यते हृदयग्रन्थिरित्यादि ॥

( २४ )

**ध्यानमयदृष्टिपातप्रमुषितकालाध्वविप्रकर्षेषु ।**
**विषयेषु नैष्ठिकानां सर्वपथीना मतिः क्रमते ॥**

इह खलु मोहसलिलप्रचलदूर्मिमालाकुले विषयवासनामहाग्राह-समाकुले संसृतिपयोनिधौ केचिदेव विषयवासनाग्राहान् वशमानीय ब्रह्मज्योतिःप्रभासितान्तःकरणास्तपोनिष्ठाः पारेगन्तारः समालोच्यन्ते। अन्यथा प्रायः सर्वेऽपि ग्रस्ता विषयवासनाग्राहैरज्ञानविमोहित-धियोऽन्धा इव सत्यासत्यमनवेक्षमाणा इहैव निमज्जन्ति। नैव ते कस्यापि वस्तुनस्तत्त्वमवगन्तुं पारयन्ति। ये तु वशिनो ब्रह्मनिष्ठास्त-पोधनास्त एव सर्वमतीतमनागतं वर्तमानं चावगन्तुं समर्थाः। इममेवार्थमभिप्रेत्य कस्यापि कविशिखामणेर्भणितिरियम्—

ध्यानमयदृष्टिपातेत्यादि ।

स्थिरप्रज्ञानां निष्ठावतां मुनीनां सर्वमार्गप्रवर्तिनी बुद्धिर्ध्यानमय-दृष्टिपातेन कालाध्वनोर्विप्रकर्षं दूरीकृत्य विषयमात्रे स्फुरतीत्यर्थः।

अयं भावः ।

इह भुवने "पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात् पराङ् पश्यति नान्तरात्मन्[1]" ( कठोपनिषद् ४।१ ) इति श्रुत्यनुसारं

---

१ पराञ्चि। परागञ्चन्ति गच्छन्तीति बहिर्मुखानि। खानि इन्द्रियाणि। व्यतृणत्। हिंसितवान्। पराङ्। पराग्रूपान् अनात्मभूतान् शब्दादीन्। अन्तरात्मन्। अन्तरात्मानम्। अयं भावः—परमेश्वरेण इन्द्रियाणि स्वभावेन बहिर्मुखान्येव निर्मितानि। अत एव प्रायेण सर्वोऽपि बाह्यविषयानेव पश्यति, न त्वन्तरात्मानम्।

विषयविमोहितधिय सामान्या इन्द्रियवश गता प्रायश इहैव मोहपूरवाहिनि ससारसागरे निमज्जन्तोऽन्धा इव किमपि वस्तु-तत्त्वमवगन्तुमसमर्था । तेषा विषये कालाध्वविप्रकृष्टवस्तुनस्तु का वार्ता, सन्निहितानां प्रत्यक्षाणामप्यर्थाना याथार्थ्यतो ज्ञाने तेषा बुद्धि स्खलति । तादृशानामेव विषये भगवदुक्तिरिय समुल्लसति—

भोगैश्वर्यप्रसक्ताना तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धि समाधौ न विधीयते ॥
( भ० गी० २।४४ ) ।

ये पुनः "कश्चिद्धीर' प्रत्यगात्मानमैक्षदा[१]वृत्तचक्षुरमृतत्वमिच्छन् ( कठोपनि० ४।१ ) इति श्रुतेरनुशासनमनुसरन्त ,

यदा सहरते चाय कूर्मोऽङ्गानीव सर्वश ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥
( भ० गी० २।५८ ) ।

एषा ब्राह्मी स्थिति पार्थ नैनां प्राप्य विमुह्यति ।
( भ० गी० २।७२ ) ।

इति भगवदादेश च मनसि कृत्वा निश्चला या स्थितिस्तत्रासक्ता ब्रह्मज्योतिर्भासितान्त करणा विषयवासनाग्राहान्वशमानीय ससृति-सागरस्य पारंगन्तारो ब्रह्मनिष्ठा नैष्ठिकास्त एव कालतो देशतश्च

---

१ प्रत्यगात्मानम् । अन्तरात्मानम् । ऐक्षत् । अपश्यत् । पश्यतीत्यर्थ., छन्दसि कालानियमात् ।

व्यवहिताव्यवहितविषयाणामशेषतोऽवगन्तारो भवन्ति। बाह्य-विषयेभ्यः प्रत्यावर्त्य चेतो ये परब्रह्मणि तत्परा भवन्ति नैव तेषामविदितं किमपि त्रिलोक्यां भवितुमर्हति।

तदाह कविशिखामणिर्भवभूतिरुत्तररामचरिते—"साक्षात्कृत-ब्रह्मणो महर्षयस्तेषामृतम्भराणि भगवतां परोरजांसि प्रज्ञानानि न क्वचिद्व्याहन्यन्त इत्यनभिशङ्कनीयानि" इति।

युक्तियुक्तं चैतत्। यतस्तस्य ज्योतिषां परमज्योतिषः परब्रह्मणो भासा भासितेऽन्तःकरणे कुतस्तत्त्वज्ञानविरोधिमोहावकाशो ब्रह्म-निष्ठस्य, येन किमपि वस्तु तस्याविदितमवशिष्येत। तद्धि खलु परमं ज्योतिः। तथा च श्रुतिशिरोवाणियं समुज्जृम्भते—

न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति॥
(कठोपनि० ५।१५)।

किञ्च तस्मिन् परब्रह्मणि ब्रह्माण्डव्यापिनि साक्षात्कृते तद्व्याप्यमिदं जगत्कथङ्कारमशेषतो विदितं न स्यात्? तद्धि धाम तेजसां सकलमिदं विश्वं सर्वत आविश्य वर्तते। तथा चेदं श्रुतिवाक्यम्—

ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण।
अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्॥
(मुण्डकोपनिषद् २।२।११)।

ततश्च ब्रह्मनिष्ठस्य ज्ञानस्य सर्वत्र सर्वदाऽप्रतिहता गतिः। तस्मिन् ब्रह्मणि साक्षात्कृते तस्य भासा सर्वमिदं भूतजातं दृष्टिगोचरं भवति। तथा चाह महामुनिः पतञ्जलिर्योगसूत्रेषु "बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः (३।४३)। सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च (३। ४९)। प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् (३।२५)।" इति।

स्मर्यतां चात्र कविवरस्य मुरारेर्भणितिरियम्—

अविद्याबीजविध्वंसादयमार्षेण चक्षुषा।
कालौ भूतभविष्यन्तौ वर्त्तमानमवीविशत्॥

अन्यच्च।

आविर्भूतप्रकाशानामनुपप्लुतचेतसाम्।
अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते॥

(वाक्यपदीये ब्रह्मकाण्डे ३७)

तस्मात्सत्यमेतद् यत् स्थिरप्रज्ञानां ब्रह्मनिष्ठानां नैष्ठिकानामतीतानागतवर्तमानेषु कालेषु व्यवहिताव्यवहितेषु च प्रदेशेषु ज्ञानमनिरुद्धमेव। सर्वष्वेव विषयेषु चाप्रतिहता तेषां बुद्धिः स्फुरति। तस्मात्सर्वथा शोभनमुक्तम्—

ध्यानमयदृष्टिपातेत्यादि॥

---

( २५ )

# व्रतपालनम्

वङ्गेषु नवद्वीपमण्डलान्तर्गते सुप्रथितनामधेये कृष्णनगरे वर्षमेकमतीतं प्रमथनाथो नाम कश्चिद् ब्राह्मणः स्वयमनिच्छन्नपि केवलं बहुतनयवियोगविधुरायाः सहधर्मिण्याः प्रियंवदाया निर्बन्धातिशयेन विवाहोचिते वयस्यवर्त्तमानेनापि निजात्मजेन चन्द्रनाथेन इन्दुमतीत्याभिधानायाः कस्याश्चिदष्टवर्षीयायाः कन्यकायाः पाणिग्रहणमकारयन्। लब्धं यल्लब्धव्यम्, दृष्टं च यद् द्रष्टव्यमिति नववधूं विलोकयन्ती प्रियंवदा प्रकामं प्रमोदस्रोतस्विन्यां प्लवमानेव सानन्दं वर्षमेकमतिवाहितवती।

निदाघसमये दिधक्षन्निव भुवनमण्डलं दहनशलाकिकासमूहैरिव दुर्विषहैस्तीक्ष्णतरैः किरणकलापैः समुद्भासमानो मध्यमम्बरमधिरोहन् सहस्रकिरणः काञ्चिदभिनवामेव मूर्त्तिं दधाति। समग्रमपि भुवनं निष्प्राणमिव स्तिमितगम्भीरं कथं कथमिव प्रतिभाति। कानिचिद्दिनानि कृष्णनगरं सुविषमेण विसूचिकामयेनाक्रान्तमिति सर्वोऽपि नागरिकजनो भीतभीतो गृहमध्य एवावतिष्ठते। ते खलु नियतं पौरजनसङ्घातसम्मर्दसंकुलाः कृष्णनगरस्य पन्थानो जनशून्या निरुद्वेगं निद्राणा इव विद्यन्ते। अन्तरान्तरा भीतिविधुरहृदयानां शववाहकानां गद्गदकण्ठास्फुटो "हरिः हरिः" इति कातरो ध्वनिरुद्भवति। काकनिकराश्च शुष्कपादपशिरःसु कर्णकटु

रटन्तो भीतानपि पौरान् पुनरुक्तं भीषयन्ति। मारुतोऽपि च कथं कथमिव कठोरस्पर्शो जनानां शुष्कं हृदयं पुनरपि शोषयति।

अस्मिन्नेव समये प्रमथनाथगेहाद् हाहाध्वनिरुदतिष्ठत्। चन्द्रनाथो विसूचिकयाक्रान्तः। प्रतिहता शक्तिश्चिकित्सकानाम्। प्रतिबद्धः प्रभावो मणिमन्त्रौषधीनाम्। पश्यत एव चन्द्रनाथो विषमामवस्थामापन्नः। भस्मीभूतः सुखभोगः प्रियंवदायाः। गतश्चन्द्रनाथः स्वस्थानं सफलयितुमिव स्वं दैवलेखम्। पूर्णश्च कामः कुलिशकठोरस्य विधातृहतकस्य।

अहो इन्दुमति! अनाथासि, मुषितासि हताशे! शून्यं जीर्णारण्यं खल्वयं ते जीवलोकः। चिराय हन्तास्तमितस्ते सुखादित्यः। साम्प्रतमन्धतमसाच्छन्नं ते जीवनम्। इयं दुःखवेदनैव तेऽद्यप्रभृति प्रियसहचरी। फलितमिदानीं दैवेन। अहो प्रसादवैमुख्यं देवानाम्। कष्टमतिदारुणो ग्रहकोपः। मृतश्चन्द्रनाथः। मूढे इन्दुमति, त्वमपि किं न मृतासि। अनात्मज्ञे, कथमिदानीं कठोरमतिकठोरं दुःखं सहेथाः?

अहो सुखमयं शैशवम्। सर्वथैवालौकिकीयं सृष्टिर्भगवतो विश्वसृजः। यत्र न दशाविपर्य्यासो लेशतो जनान् पीडयति। यत्र च न द्वेषादयो हृदयमाक्रम्य जनान् पशूकर्तुं क्षमन्ते।

न जानातीन्दुमती स्मर्तुमपि शोच्यमात्मनोऽवस्थान्तरम्। न सा क्षणमप्यचिन्तयद् यद् दैवचौरो जीवनमपि तस्या हृदयादचोरय-

दिति। न वा सावबोद्धुमचेष्टतापि यत् किं नु खल्वेते हाहाकारेण सेोरस्ताडं रुदन्तीति। कथमिमे 'हा चन्द्रनाथ, हा इन्दुमति' इत्यसकृदाक्रुश्यानुशोचन्तीति ज्ञातुमसमर्थापीयं केवलं तेषां तादृशीमवस्थामवलोक्य तद्वदेव रोदितुमारभत।

क्षणेनैवेन्दुमत्याः सह भागधेयेन वेशोऽपि पर्यवर्तत। मृष्टः सीमन्तमूलादचिरारोपितो विन्दुः सिन्दूरस्य। उन्मुक्तानि सह शङ्खायसवलयास्यां* सर्वाण्यपि समुल्लसन्ति अचिरार्पितान्याभरणानि। दूरीकृतो रक्तपटः। परिधापितन्तु नयनविषादावहमरक्तं वासः।

सा त्वनात्मज्ञा अनेनापि चिरवहनीयेन दौर्भाग्यपिशुनेन सुदुर्दर्शेन वेशविपर्यासेन नाबिभेत्, न व्यषीदत्, न वा लेशतोऽप्यकम्पत।

प्रियंवदा तु 'हा चन्द्रनाथ, हा स्नेहसर्वस्व, हा मातृवत्सल, हा पुत्र' इति रात्रिन्दिवमाक्रन्दन्ती मूर्तिरिव करुणस्य दीनाद् दीनतरामवस्थां प्रतिपद्यमाना मुहुर्मुहुर्विलपन्ती प्रतिपदिन्दुलेखेवातिक्षीणा कथञ्चिदुच्छ्वसिति।

नगर्यां विसूचिकायाः प्रकोप उत्तरोत्तरं प्रवर्द्धते। प्रतिगृहमेव स्वजनवियोगव्याकुलानां मर्मच्छेदोचितो हाहाध्वनिराकर्ण्यते।

---

* वङ्गेषु एतत् सर्वं सभर्तृकात्वलक्षणम्।

सर्वथा अवितथमिदं यद् विपद् विपदमनुसरतीति। यद् हन्त ईदृशमपि दशाभोगं भुञ्जानेषु प्रमथनाथपरिवारेष्वपरापि विपत्तिरुदपद्यत। कष्टम्, इन्दुमत्यपि विसूचिकयाक्रान्ता।

ज्ञात्वैवेदं सर्वे परं व्यषीदन्। व्याधिर्वर्द्धितुमारभत। निमेषादिव द्वित्रा अगदङ्काराः समायाताः। व्यवस्थापितं तैर्भेषजम्। परन्त्वहो कष्टम्, किं नाम तेन क्रियताम्? का खलु भेषजं पिबेत्? अभितो ध्वनिरुदतिष्ठत्—"अद्य हि तिथिरेकादशी नाम। इन्दुमती च विधवा। न साद्य भेषजं पातुमर्हतीति"। विषमावस्था। परिपृष्टैः पण्डितैस्तदेव प्रत्युक्तम्—"न खलु धर्म्मशास्त्रमीदृशेष्वपि समयेषु विधवानां जलबिन्दुमात्रस्यापि पानं विदधातीति"। "ननु विषमोऽयमामयः। दुर्लभा ह्यनेनाक्रान्तानां प्राणाः। तन्न तदर्थं भेषजं पिबन्ती विधवाप्येषा दूष्येदिति" बहुशः प्रत्युक्तोऽपि कैश्चित् सहृदयैः, कस्तच्छृणुयात्? नहि नश्वराणां प्राणानां कृतेऽविनश्वरो धर्मः परित्यक्तुं शक्यते। रोगो द्विगुणमवर्द्धत। पिपासा च तां बलवदबाधत। जलम्, जलम्, जलम्, इत्यसकृत् सकरुणं सविनयं च जलं याचमानस्तस्याः क्षीणः शुष्कश्च कण्ठः शृण्वत्स्वपि पश्यत्स्वपि च बहुषु न केनाप्यन्वकम्प्यत। न बिन्दुरपि सलिलस्य पातितः केनापि तस्या ओष्ठाधरयोरुपरि। को नु जनस्तया तदर्थं नाभ्यर्थितः? न कः करुणार्थिना तरलतरलेन लोचनयुगलेन निरीक्षितः? कोऽथवा उत्थितपतितेनातिदुर्बलेन करपल्लवेन नाहूतः? अहो न तथापि

व्यचलत् कस्यचिद् हृदयम्! नालभतेन्दुमती बिन्दुमपि जलस्य। न वा पायिता सा भेषजम्।

"वत्से, सहस्व कथञ्चित् कांश्चित् क्षणान्। किं कुर्याः? निरीक्षस्व भगवन्तं धर्म्मम्। समाह्वय देवं मधुसूदनम्। स ते सर्वां बाधां निराकरिष्यति। वत्से, विधवासि। कथमेकादश्यां जलं प्रार्थयसे? तन्मैवं विक्लवा भूः। अचिरादेव गच्छति रात्रिः, तूर्णमेवोदयति देवो विभावसुः। प्रभूतं ते जलं दास्यामि। तन्नयने निमील्य तूष्णीमास्स्व। धर्मस्त्वां रक्षिष्यति" इत्यादि विविधं प्रबोधवचनमन्तरा नान्यत् किञ्चित् तदानीमिन्दुमतीभाग्यं तस्या उपहर्तुं प्राभवत्।

अहो प्रशस्यो धर्म्मरक्षणप्रकारः! नूनं तथापतितां तामालोक्य ग्रावाप्यभेत्स्यत्, लौहमपि व्यद्रोष्यत्, वज्रमपि च शतधा व्यदरीष्यत्। न तु तत्रत्यैमनागपि विचलितम्! न विभाता विभावरी, न वा समुदितो भगवान् सहस्रकिरणः। इन्दुमती सुष्ठु खलु बान्धवानामुपदेशवचनमनुसृतवती। निरीक्षितस्तया भगवान् धर्म्मः, आहूतो देवो मधुसूदनः। निमीलितं चिराय लोचनयुगलम्। अवलम्बितं च सुमहन्मौनम्। किञ्च जलं जलमिति न पुनस्तया बान्धवो जन उद्वेजितः॥

कश्चिद्वङ्गीयः

**प्रकाशानन्दशर्मा** *

— —

*मित्रगोष्ठीपत्रिका, द्वितीयवर्षे (शक० १८२७) पृ० १३-१६।

( २६ )

# कन्यापितृत्वं खलु नाम कष्टम् !

## श्रीप्रभावतीदेव्या लेखः ।

भद्र सम्पादक, अहमस्मि काचिदन्तःपुरिका। नगरतो दूरवर्तिन्यां कस्याञ्चित् पल्ल्यां मे निवासः—यत्र नाद्यापि नागरिकप्रभावो जनानां चेतःसु सम्यक् स्फुरणावकाशमलभत। अतो मादृश्याः कुलीनाङ्गनाया वृत्तान्तपत्रिकासु किञ्चिल्लेखनं नामातितमां साहसमिति न खलु नाहमपि विजानामि। तथाप्यद्य कारणगौरवादिह प्रवृत्तास्मि। मन्ये नेदं जातु भवत उद्वेगाय भवेत्। अस्ति खलु तपस्विनीषु स्त्रीषु तत्रभवतां कश्चित् पक्षपात इति भवत्सम्पादितां पत्रिकां गृहकोणावस्थानेन पठन्त्या मया नाविदितम्। अन्यच्च कन्यकानां विषये किञ्चिदद्य मया कथनीयम्। तत्र च पाषाणकर्कशहृदयानां वः पुरुषाणामेकान्तेनैवानुत्साहमालोक्य श्रीमतां करुणाकणां कामयमानैः स्त्रीजनैरस्माभिरगतिकगतित्वेन यावच्छक्यं स्वयमेव किञ्चिदनुक्त्वा किं नामापरं क्रियतामिति भवन्त एव विचारयन्तु।

भद्र सम्पादक, यूयं खलु पुरुषा अस्माकमाश्रयाः, स्त्रियो वयमाश्रिताः। यूयमुपजीव्याः, वयमुपजीविन्यः। किं बहुना, सर्वथा युष्माकमेव करतलायत्तमस्माकं जीवनमपि। तथा सति यदेते यूयमस्मास्वनुचितमाचरथ, अवज्ञानदृष्ट्यास्मान् पश्यथ,

अकथनीयमपि च कथयथ, तत् किमेतद् धर्मस्य वा, शिक्षाया वा, विद्याया वा, ज्ञानस्य वा, सभ्यत्वस्य वा विलसितमिति न ज्ञायते।

किमस्माभिः स्त्रीभिः पुरुषाणां वो वदनविवरादोदनकवल-माच्छिद्य गृह्यते, आहोस्वित् पाकोन्मुखानां शालिकलमानां क्षेत्रेषु पुनरप्यकाण्डे हलसञ्चारः क्रियते यद् हन्त आश्रिता अपि वयं युष्माकं दहनदृष्टौ निपतिताः। जीवानां पुरुषत्वेन स्त्रीत्वेन वा जन्मग्रहणं नाम न जातु तदायत्तम्, कर्म वा ईश्वरो वात्र प्रभवति। एवञ्च कोऽयमस्माकमपराधो येनापत्यत्वे समानेऽपि तनय एव पितुः स्नेहसर्वस्वमधिकरोति, न तु कन्यका। पुत्रजन्मनि पितुर्हर्षातिशयः शरीरेऽपि न मीयते, कन्योत्पत्तौ तु वज्रेणेव तस्य मस्तकं पीड्यते, दिशः शून्याः प्रतिभान्ति, जगच्च सर्वं विषादपरिपूरितमिव दृश्यते। पृथिव्यपि कन्यकाया भारेण सार्द्धत्रिहस्तमधोगच्छतीति वदन्ति। किमुच्यते, कन्यकाया मृत्यु-रपि पितुर्हर्षायैव सम्पद्यत इत्यपि पश्यामः। अहो कष्टम्, गृह-पालितस्य कस्यचिद् विहङ्गस्यापि कुक्कुरस्यापि च मरणे गृहाधिपतेः कातर्य्यं दृश्यते, न तु कन्यकानां मरणे! तिर्यग्भ्योऽपि कन्यकानां जीवितं हेयतरम्!

सम्पादक महाशय, अस्मान् प्रति पुरुषाणां यदतितमां विद्वेषो न तत्र प्रमाणाभावः। शास्त्रमिदं सर्वं तेषामेव वशंवदम्। तस्य कस्याप्येकस्य ग्रन्थस्य यत् किमप्येकं पत्रमुद्घाट्य दृश्यताम्,

तत्रैवास्माकं हृदयमर्मभेदिनो निन्दावादा उपलभ्येरन्। आवेदमासाहित्यं च सर्वत्रैवास्माकं विगानम्।

क्षणं नेत्रमुन्मील्य दृश्यताम्—ऐतरेयब्राह्मणे महता प्रबन्धेन पुत्राणां गुणराशिमुपवर्ण्य व्यर्थमेवास्माकं कन्यकानां हृदये सपदि निशितं शूलं प्रवेशितम्। तद्यथा, महर्षिर्नारदो हरिश्चन्द्रेण "किंस्वित् पुत्रेण विदन्ते" इत्याद्येकया गाथया पृष्टो दशभिर्गाथाभिः पुत्रगुणान् कथयन् अकाण्डेऽवोचत्—

"अन्नं ह प्राणः, शरणं ह वासो,
रूपं हिरण्यं, पशवो विवाहाः।
सखा ह जाया, कृपणं ह दुहिता,
ज्योतिर्ह पुत्रः परमे व्योमन्॥"✽

दृष्टं महाशय सम्पादक, "कृपणं ह दुहिता" इति। दुहिता हि केवलं दुःखकारित्वाद् दैन्यहेतुर्भवति। इत्थमेव तद्वाक्यस्यार्थ इति श्रीसायणाचार्योऽभिप्रैति। दुहितॄणां दौर्भाग्येऽन्यदपि स्मर्य्यते—

"सम्भवे स्वजनदुःखकारिका,
सम्प्रदानसमयेऽर्थहारिका।
यौवनेऽपि बहुदोषकारिका
दारिका हृदयदारिका पितुः॥" इति॥†

✽ ऐतरेयब्राह्मणे सप्तमपञ्चिकायास्तृतीयेऽध्याये प्रथमं खण्डम्।

† अत्रैव सायणेन धृतोऽयं श्लोकः।

दुहितॄणां पितृधनाधिकारोऽपहृतो युष्माभिः शास्त्रानुशासनव्याजेन। तावतापि श्रीमतां न सन्तोषः। यदस्माभिरन्तरान्तरा पितृसकाशे किञ्चित् प्रार्थ्यते, तत्रापि युष्माकमक्षमा। तदिदमवलम्ब्य उपहासादपि यूयं न विरमथ। तेन हि "दुहितृ" पदस्यापि युष्माभिरभिनवोऽर्थः कल्पितः। उक्तं यास्केन—"दुहिता दुर्हिता, दूरे हिता, दोग्धेर्वेति"[१]। तदिह दोग्धेरिति सूत्रमवलम्ब्य युष्माभिरुच्यते—"सा हि (दुहिता) नित्यमेव पितुः सकाशाद् द्रव्यं दोग्धि, प्रार्थनापरत्वात्"[२] अतो दुहितेति। अहो ये खलु पितुः सर्वं धनमधिकुर्वन्ति, न ते पितुर्दोग्धारः, परन्तु ता एव तपस्विन्यः, या हि सर्वधनवञ्चिता अन्तरान्तरा छिन्नं वसनखण्डादिकं प्रार्थयन्ते!

जन्ममात्र एवास्माकं पिता गुरुणेव भारेण दूयमानो, महाननर्थः प्राप्त इति शङ्कमानो, यथाकथमप्यस्तु, गेहतोऽस्मान् बहिष्कर्तुमिच्छति। तेनैव हि तस्य चेतसः प्रसादः। तथा च जन्मदिनप्रभृत्येव कुत्रैनां नयामीति पिता नः खिद्यते। तेन चास्माकं 'कन्येति' अपरमेकमभिधानमुत्पन्नम्। "कन्या—क्वेयं नेतव्या भवतीति"[३] युष्माभिरेवेदं कृतं निर्वचनम्।

---

१ निरुक्तम् ३ अ० ४ ख०।

२ निरुक्तम् ३ अ० ४ ख०; दुर्गाचार्यव्याख्या।

३ निरुक्तम् ४ अ० १५ ख०—"कन्या कमनीया भवति, क्वेयं नेतव्येति वा, कनतेर्वा स्यात् कान्तिकर्मणः।"

अपरोऽपि कश्चिद् युष्मासु कथयति—

जातेति कन्या महती हि चिन्ता
कस्मै प्रदेयेति महान् वितर्कः।
दत्ता सुखं यास्यति वा न वेति
कन्यापितृत्वं खलु नाम कष्टम्॥

पार्वतीपरिणयकारेणाप्यस्यैव प्रतिध्वनिरुत्थापितः—"कन्यापितृत्वं खलु गृहमेधिनामधिकतरं दुःखमावहतीति"।

भद्र सम्पादक, विवाह एवास्माकं सर्वानर्थमूलम्। कन्यकानां वरलाभार्थमेव पितरो दूयन्ते। तेनैव चैषामस्मासु वैमनस्यं दृश्यते। किन्तु पृच्छामि—किं नु खलु कन्यका ह्येवात्रापराध्यन्ति? जानीषे यत्र क्वापि धनिकाय वा, निर्धनाय वा, विज्ञाय वा, मूढाय वा, सुरूपाय वा, कुरूपाय वा, कुलीनाय वा, अकुलीनाय वा, अनुमताय वा, अननुमताय वा यस्मै कस्मैचिदपि प्रदीयमानापि न जातु युष्माकं कन्यका प्रकाशं किञ्चिदन्यथा ब्रवीति; न सा विवाहसमये इयद्धनं देयमिति निर्बन्धेनापि पितुर्धनमधिकर्त्तुमिच्छति। सा खलु युष्मन्नियोगेन आबाल्यं परिचितानि आत्मीयत्वेनाभिमतानि सर्वाण्यपि वस्तूनि सपदि परिहाय कस्मिंश्चिदचिन्तितपूर्वे प्रदेशे सर्वथापरिचितैरभिनवैर्जनैः चिरं स्थातुमपि गच्छति। किं बहुना, यदेव किञ्चिज्जनक इच्छति, तदेव कन्यका करोति। एवमपि न प्रसीदति वो हृदयमिति सर्वथा दुःखसंवेदनायैवास्माकं जीवनम्। पतिगृहे सुखं भवेन्नवेति दूर-

भास्ताम्, हन्त पितुर्गृहेऽप्यवस्थाने नास्माकं सुखम्। अस्मद्विवाह-सम्पादनभारखिन्नानां विषादकवलितवदनानां पित्रादीनां चित्त-ग्लानिमालोक्य कस्य नाम चेतसि सुखमुदेतु। सम्पादक महाशय, ईदृश एव युष्माकमस्मासु अनुग्रहप्रकारः। अथवा अलं विस्तरेणेति शिवम्॥

[ मित्रगोष्ठीपत्रिका, द्वितीयवर्षे पृ० १००—१०३ ]

---

( २७ )

## *गीर्वाणवाण्या अभ्युदयोपायाः

तापत्रयावलिविमूर्च्छितचेतनाना-
मात्मस्वरूपमवमत्य सदा स्थितानाम्।
अज्ञाननाशनपटूनवबोधहेतून्
वेदान्विकासयति यस्तमहं नतोऽस्मि॥
विनयभाववशेन नतेन तं
त्रिभुवनाधिपतिं शिरसा ततम्।
अमितमोदयुतं करुणानिधि-
मविदितं परितोषयितुं यते॥

---

* २८। ११। १९१३ ईस्वीतिथ्यां "काशीसंस्कृतसमितौ" पठितोऽयं निबन्धो ग्रन्थकर्त्रा।

अयि भो ! अशेषशास्त्रतत्त्वानुशीलनसञ्जातनिर्मलशेमुषीव सामाजिकाः ! श्रीमतां समक्षं देववाण्याः समुन्नतेरुपायानां कृत्योपन्यसितुं प्रवृत्तस्य यत्सत्यं वेपत इव मे हृदयम्। तथा हि-

नानाशास्त्रविचक्षणोऽपि प्रथमं प्राप्तः सभां मानवः
सम्यक्पारयते न भावकथने सङ्कोचवश्यः सदा।
चित्रं नो यदि वेपनं मम हृदः सञ्जायते सम्प्रति
यस्मान्नास्मि विचक्षणः, पुनरियं संसत्सतां नूतना ॥

अथापि श्रीमतामादेशरूपं महान्तमनुग्रहं शिरसा बिभ्राणः

चन्द्रोदये तु सत्यप्युडु[१]वृन्दं किन्न भासते गगने ?
एवं विदुषां मध्येऽप्रौढोऽपि न दोषभाक् कथने ॥

इत्यस्मिन्नर्थे च श्रद्दधानः

नीरसमपि मम वचनं कृत्वा करुणां सुशीलसंभूताम्।
आकर्णयन्तु भव्याः सन्तस्तुष्यन्ति परभणितौ ॥

इत्येवं तत्रभवतामवधानं दीयमानमभ्यर्थये।

सभ्याः !

अद्य खलु कथं नु देववाण्याः समुन्नतिर्भवेदित्यस्मिन्वि किञ्चिदावेदयितुं समादिष्टोऽहं श्रीमद्भिः। महानेष गभीरो विषयः विशेषतो मादृशां विषये—नैकशास्त्रनैकभाषापरिशीलनापेक्षी उन्नत्यवनतिव्यवहारस्य सापेक्षत्वेन कस्या अपि भाषाया उन्न

१ "नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम्" इत्यमरः।

वनत्योरवधारणाय नैकभाषाणां तारतम्यपरीक्षणस्यावश्यकत्वात् तद्विषयकज्ञानस्यास्मिन्विषये नितरामावश्यकत्वम्। कस्या अपि भाषाया वस्तुस्थितेरवगत्यै च तदन्तर्गतनानाशास्त्राणामवस्थितेरपि ज्ञानमपरिहार्यमिति नैकशास्त्रपरिशीलनस्याप्यावश्यकत्वं स्फुटमेव। तथापि यथामति विषयेऽस्मिन् भवतां पुरः किञ्चिद्वक्तुमुपक्रमे।

इह खलु परिवृत्तिशालिनि जगति, तत्रापि जाग्रत्यतिमानमहिम्नि काले, कस्यापि सर्वदैकरसेनैवावस्थितिर्नितरामसम्भवा। सर्वमपि वस्तु परवशं चक्रनेमिक्रमेण नानावस्थाः समुपभुङ्क्ते। यत्र दिनं तत्र रात्रिः, यत्र च रात्रिस्तत्र दिनं पर्यायानुसारमाविर्भवति।

एतन्नियमानुरूपमेव चिराज्जगदिदमुन्नतिपथानुगं सम्प्रति समालोक्यते। उदयाचलमारूढो भगवान् ज्ञानभास्वान् भुवनमाभासयितुं प्रवृत्तः। सर्वोऽप्यविद्यातमिस्रापगमे मोहनिद्रामुन्मुच्य स्वीयस्वीयपदार्थजातपरीक्षणपरो दृष्टिपथमायाति।

अनुसरन्त एवैतन्नियमं चिरादस्मद्देशीया देववाण्याः स्वरूपमालोचयितुमुद्यतास्तदुन्नत्युपायपरिमार्गणपराः सन्ति।

## देववाण्या अद्यत्वेऽवनतिः

न च उन्नतेरुपायचिन्तनमवनतिमादौ स्थापयति। तत्र "सति कुड्ये चित्रम्" इति न्यायेन देववाण्या अवनतेरेवाभावात्तदुन्नत्युपायचिन्तनस्यामूलकत्वं वैयर्थ्यापत्तिश्चेति वाच्यम्। तदवनतेः साम्प्रतं साक्षात्त्वात्, सर्वैः स्वीकृतत्वाच्च। तत्रैते श्लोका भवन्ति—

देववाणी पुरा येयमुन्नतेर्मूर्ध्नि संस्थिता।
दौर्भाग्येणास्य देशस्य दुर्दशामद्य सा गता॥
या प्राचीननिबन्धेषु लोकभाषेति वर्णिता।
अपि बाह्येषु देशेषु कम्बोजादिषु भाषिता॥
सैकस्यापि जनस्याद्य न भाषात्वेन गण्यते।
अथापि मृतभाषेति लोकैर्हा! सावमन्यते॥
विस्तरः क्वान्यभाषाणां प्रभावश्चापि सम्प्रति।
क्व चैषा देववाणी, हा! महान् भेदो हि दृश्यते॥
भोजविक्रमतुल्यास्तु न तस्या रक्षकाः क्वचित्।
प्रष्टारः सन्ति सर्वत्र ह्यन्यासां कोऽत्र संशयः ?॥
कूपोदकसमं तस्या रुद्धं बद्धं च वाङ्मयम्।
शास्त्रतत्त्वावगन्तारो विज्ञास्ते विलयं गताः॥

भव्याः! नेयमत्युक्तिः। यत्रास्मात्कालात् प्रायेण वत्सराणां चतुर्दशशत्याः प्रागपि—

पुरा विद्वत्तासीदुपशमवतां क्लेशहतये
गता कालेनासौ विषयसुखसिद्ध्यै विषयिणाम्।
इदानीं तु प्रेक्ष्य क्षितितलभृतः शास्त्रविमुखान्
अहो कष्टं! सापि प्रतिदिनमधोऽधः प्रविशति॥

इत्येवं राजर्षिणा भर्तृहरिणा तस्या अवनतिः प्रदर्शिता, तत्राद्य सम्यक् प्रवृत्ते सर्वथा प्रतिकूले वर्तमाने काले, सम्प्रतिष्ठिते चान्यभाषाणां साम्राज्ये, तस्या अवनतिं प्रति नहि भवितुमर्हति

संशयलेशावकाशः। तदेवं पूर्वमेवोन्नतिसद्भावात्तदुन्नतेर्नापेक्षितत्वमिति वदन्तः परास्ताः।

ततश्च दृष्ट्वाप्येतां सर्वलोकविदितां देववाण्या अवनतिम्, स्मृत्वापि तस्या नाम्नैव समाख्यातं त्रिलोक्यामसाधारणं पौर्वकालिकं परमं यशः, को नाम भारतबन्धुर्धर्मधुरीणो धीमांस्तदुन्नत्युपायसमालोचने मन्दप्रयत्नो भविष्यति ?

## भाषाणामुन्नतेः स्वरूपम्

तत्र "प्रयोजनमनुदिश्य मन्दोऽपि न प्रवर्तते" इति न्यायानुसारेणैतत्तावद्विचारणीयं यत् किन्नु खल्वस्मिन् प्रसङ्ग उन्नतिशब्देनाभिप्रेयते, कथं च तत्स्वरूपविनिर्णयः कर्तुं शक्यत इति। एतद्विचारानन्तरमेव तस्या उन्नत्युपायचिन्तनमवसरप्राप्तत्वेन समुपयुज्यते। तत्साधनार्थं च प्रयतितुं शक्यते। तदत्र प्रथममेतदेवाधस्ताद्विचार्यते।

अद्यत्वे तावत्कस्याश्चिद्भाषाया उन्नतेर्विकासस्य वा स्वरूपविनिर्णये प्रवृत्तेनानेकविषयेषु दृष्टेरनुधावनमाकाङ्क्ष्यते। शब्दान्तरेष्वयमेवार्थ एवं वक्तुं शक्यते यत्कस्याश्चिद् भाषाया उन्नतिस्वरूपपरीक्षणायैते तावदधोनिर्दिष्टा विषयाः समालोचनीयाः—

( १ ) प्रथमं तावत्तस्या भाषाया भाषिणां संख्या।

( २ ) द्वितीयं, देशापेक्षया तस्या विस्तृतिः। अर्थात् कियान् देशः, को देशः, कति देशा वा तां भाषां भाषन्ते।

तद्यथा 'इंग्लिश'भाषाभाषिणां सङ्ख्या सामान्येन पञ्चविंशति-कोटिपरिमितास्ति। स्थूलदृष्ट्या सप्तसु अष्टसु वा देशेषु, अगणितेषु प्रदेशेषु द्वीपेषु च सा भाष्यते।

परमर्थद्वयमप्येतदद्यत्वे भाष्यमाणानां भाषाणां विचारप्रसङ्ग एव समीक्षितुं शक्यते। प्राचीनभाषाणामथवा तासां भाषाणां विषये तु, या सम्प्रति कुत्रापि न भाष्यन्ते, अपि तु पुराकाल एव या कस्मिन्नपि देशे भाषिता आसन्, नैतद्विचारणीयं भवति। यतो नाद्यत्व एकोऽप्येतादृशो मानवो यस्यैकापि तासां स्वभावतो मातृभाषा भवेत्। दौर्भाग्येणास्माकं देववाण्यप्येतद्द्वितीयकोट्या-मेव पतिता भवति। साप्यद्यत्वे न क्वापि केनापि स्वभावतो मातृभाषात्वेन भाष्यते।

(३) तृतीयं, तदीयसाहित्यस्य विस्तर उपयोगिता (उपादेयता) वर्त्तमानकालप्रवाहस्तदध्ययनाध्यापनसौलभ्यं च।

अस्यार्थस्य हि समीक्षणं प्राचीनोत्कृष्टभाषाणामाधुनिकभाषाणां च उन्नतेर्विकासस्य वा स्वरूपावधारणे समानत्वेनोपयोगि। अत एव च प्रधानम्। युक्तं चैतत्। **साहित्येनैव हि कस्याश्चिद् भाषाया गौरवं महिमा च वस्तुतः प्रतीयते। साहित्यमेव भाषायाः स्थिरा सम्पत्तिरनन्तः शेवधिश्च। सभ्यताया उत्कर्षा-पकर्षौ, दर्पणे रूपमिव, सद्यः साहित्य एव प्रतिबिम्बीभावमा-पद्येते।** साहित्यद्वारैव पूर्वपूर्वैर्ऋषिभिर्महर्षिभिर्मुनिभिराचार्यैः कविभिश्च—

"साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्सम्प्रादुरुपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च" ( निरुक्ते १ । २० ) इति,

"किं पुनराप्तानां प्रामाण्यम् ? साक्षात्कृतधर्मता भूतदया यथाभूतार्थचिख्यापयिषेति । आप्ताः खलु साक्षात्कृतधर्माण इदं हातव्यमिदमस्य हानिहेतुरिदमस्याधिगन्तव्यमिदमस्याधिगमहेतुरिति भूतान्यनुकम्पन्ते । तेषां खलु वै प्राणभृतां स्वयमनवबुध्यमानानां नान्यदुपदेशादवबोधकारणमस्ति । न चानवबोधे समीहा वर्जनं वा । न वाकृत्वा स्वस्तिभावः, नाप्यस्यान्य उपकारकोऽप्यस्ति । हन्त वयमेभ्यो यथादर्शनं यथाभूतमुपदिशामः, त इमे श्रुत्वा प्रतिपद्यमाना हेयं हास्यन्त्यधिगन्तव्यमेवाधिगमिष्यन्तीति । एवमाप्तोपदेशः ।" ( न्यायसूत्रभाष्ये २ । १ । ६८ )

—इत्याद्यनुसारमनुकम्पापरैः प्रज्वालितं ज्ञानज्योतिः स्थूलसूक्ष्माद्यनेकविधपदार्थजातविषयकं तेषामनुभवं विचारं च प्रख्यापयत् सहस्रशो वर्षेष्वतीतेष्वपि उत्तरोत्तरं विवर्धमानमद्यापि समुद्भासमानं संदृश्यते । यद्विषये हि

ब्रह्मादयो विश्वहिताय तप्त्वा परःसहस्राः शरदस्तपांसि ।
एतान्यपश्यन्मुनयः पुराणाः स्वान्येव तेजांसि तपोमयानि ॥

इति किञ्चित्परिवर्तिता महाकविभवभूतेरुक्तिर्वक्तुरभिप्रेतप्रसङ्गभङ्गेऽपि सम्यक् सङ्गच्छते ।

ततश्च कस्या अपि भाषाया उन्नतेर्विकासस्य वा स्वरूपविनिर्णय एतदेव मुख्यतो विचारणीयं भवति यदस्ति किञ्चित्सर्वमनोहारि निखिलपुरुषार्थसाधकमखिलदुरितापहारकं च स्वसर्वस्वभूतं साहित्यं तस्यां भाषायाम्। सत्यपि च तस्मिन्, विषयाणां व्यष्टिसमष्टिदृष्ट्या कियांस्तस्य विस्तरः कियच्च गाम्भीर्यम्? अथवा भिन्नभिन्नदेशकालेषु वर्तमानाभिर्मनुष्यजातिभिः प्रचारितेषु समुन्नतिपदं च नीतेषु नानापुरुषार्थोपयोगिषु दर्शनविज्ञानधर्मशास्त्रकाव्यसङ्गीतादिविषयकेषु शास्त्रेषु तदवस्थायास्तारतम्यदृष्ट्या कस्य कस्य शास्त्रस्य केन केन परिमाणेन प्रचारणं समुन्नतिश्च सम्पादिते तस्यां भाषायाम्? सत्स्वपि च नानाविषयकगूढगम्भीरनिबन्धेषु, कियती तेषामुपयोगिता उपादेयता च? उपादेयतासद्भावेऽपि, एतदपि समीक्षणीयं यदद्यत्वे कीदृशी तस्य साहित्यस्य गतिः—उन्नतिमुखी किं वा अवनतिमुखी? अथवा नानादेशीयशास्त्राणामुन्नतेरपेक्षया तस्य गतिः सन्तोषावहा न वा? अन्तत एतदपि विचारणीयं यत्तत्साहित्यज्योतिःप्रकाशोऽन्तरायमन्तरेण साधारणजनतां यावदधिगन्तुं शक्नोति न वा। शब्दान्तरेषु तदध्ययनाध्यापनसौलभ्यमपि वर्तते न वा।

## देववाण्या महत्त्वमुपयोगिता च

देववाण्याः साहित्यस्य तावदतिविस्तृतत्वे परमोत्कृष्टत्व उपादेयतायां च दिष्ट्या नहि कस्यचिद्विवादः। संसारे नहि काचिदेतादृशी भाषा यस्याः साहित्यं प्राचीनतादृष्ट्यास्याः

साहित्यस्य समतामासादयेत्। विस्तृत्यपेक्षयापि 'ग्रीक' 'लैटिन' इत्यादिपरमप्रसिद्धप्राचीनोत्कृष्टभाषाणां कयोरपि द्वयोः साहित्यमेकत्रीकृतमपि न तावद्विस्तृतं यावद्देववाण्याः। न चापि देववाणीसाहित्यं साकल्येनाद्य यावत् समुपलभ्यते। परःसहस्राणां ग्रन्थानां ग्रन्थकाराणां च केवलं नाममात्रेणैवोल्लेखो नानाग्रन्थेषु दृश्यते। निरन्तरं च प्रकाश्यन्ते नूतननूतनग्रन्थरत्नानि प्राचीनसंस्कृतग्रन्थोद्धारतत्पराभिर्नैकसंस्थाभिः। तदेतत्सर्वं देववाण्याः साहित्यस्य निरुपमां विस्तृतिमेव ख्यापयति। द्योतयति च "कलां नार्हन्ति षोडशीम्" इत्यस्य चरितार्थतां संस्कृतापेक्षया उपर्युक्त 'लैटिन' आदिभाषाव्यतिरिक्तप्राचीनभाषाणां विषये।

अर्थगाम्भीर्यभावसौन्दर्याद्यपेक्षयापि संसारभाषाणां—न केवलं प्राचीनानां किन्तु आधुनिकीनामपि—शिरोमणीभूतैव नो देववाणी। उपनिषदो, भगवद्गीता, दर्शनशास्त्राणि, भागवतम्, शाकुन्तलम्, उत्तररामचरितम् इत्याद्यलौकिकसाहित्यरत्नैरलंकृता सा सहसैवान्या भाषा अतिक्रामति। एकैकमपि हि एतादृशं साहित्यरत्नं कस्या अपि भाषायाः सौभाग्यसम्पादनायालं गौरवास्पदं च। धर्मार्थकाममोक्षाख्यानखिलानेव पुरुषार्थान् पुनर्लक्ष्यीकृत्य प्रवृत्तं तस्याः साहित्यम्। अत एव च सर्वाङ्गसम्पूर्णम्।

न केवलमेतावतैव तस्याः प्राधान्यम्। अतिप्राचीनत्वेनास्या वेदादिरूपसाहित्यभागस्य नानाविषयाणां तुलनात्मकदृष्ट्याध्य-

यनेऽप्यतीवोपयोगिनी देववाणी। अस्याः शब्दरचनायाश्चाति-स्पष्टतया चिरकालादेव च लोकोत्तरप्रतिभानवद्भिराचार्यैर्व्याकृत-त्वेन निरुक्तत्वेन च स्वपरिवारसम्बन्धिनीनां 'इंग्लिश', 'जर्मन', 'ग्रीक', 'लैटिन' प्रभृतीनां भाषाणामध्ययने चास्याः परमो-पयोगित्वं भाषाशास्त्रवेदिनः कस्य न विदितम्। अत एव 'जर्मनी', 'अमरीका' इत्यादिसुदूरनानादेशेषु शतशोऽध्यापकाश्छा-त्राश्च तदध्ययनाध्यापनतत्पराः सांप्रतं श्रूयन्ते।

भारतवर्षीयान् प्रति तु तस्या उपयोगित्वप्रतिपादनं केवलं पुनरुक्तिरेव। न केवलं तेषामतिप्राचीनेतिहासो नितान्तं देव-वाण्या अध्ययनादेवावगम्यते; तेषां सभ्यतायाः संस्कृतेर्धार्मिक-विश्वासानां च प्रासादस्य मूलभित्तिरपि संस्कृतसाहित्य एवावतिष्ठते। आधुनिक 'हिन्दी', 'बङ्गाली' प्रभृतिभाषाणामप्यन्ततः संस्कृत-मेवोत्पत्तिभूमिः। किं बहुना, जन्मप्रभृति मरणपर्यन्तं तेषा-मभ्युदयनिःश्रेयससाधनतत्परा सततं स्वसाहित्यसरोरसामृतेन तानाप्याययन्ती सर्वथा मङ्गलमयी मातृकल्पैव भारतीयानां देववाणी।

## देववाण्याः सांप्रतिकः समाचारः

सत्यपि वास्तविके उपरिष्टादुपवर्णिते देववाण्या वृत्तान्ते, महानेष परितापविषयो यत् तस्याः सांप्रतिकः प्रवाहो न सन्तोषावहः। सत्यं प्राचीनग्रन्थोद्धारः प्रतिदिनं क्रियमाणः श्रुतिपथमायाति। सत्यं

यत्तस्या अध्ययनाध्यापनं सुदूरदेशदेशान्तरेषु क्रियते। तस्या गौरवं यशश्च प्रतिदिनमुत्तरोत्तरं विवर्धमानं सान्त्वयति नो भारतीयानां चेतांसि। तथापि सर्वमेतत्प्राचीनसाहित्यमात्रविषयकम्। अद्यत्वे तस्याः साहित्यस्य गतिरवनतिमुखी एवेत्यत्र नहि कस्यचिद्विवादः। चिरादेव नानाशास्त्रेषु नूतनविचाराणां सृष्टिस्तद्द्वारा तस्याः साहित्यस्य समुन्नतिश्चावरुद्धा दृश्यते। सन्तु केचिदङ्गुलिनिर्देश्याश्चर्वितचर्वणापिष्टपेषणकारिणष्टीकाटिप्पणीकर्तारः, परन्तु वस्तुतः स्वोपज्ञविचारविचारकाणां नूतनग्रन्थनिर्मातॄणां सर्वथाऽभाव एव। ज्यौतिषदर्शनवैद्यकप्रभृतिशास्त्राणां प्रायशः सर्वेषामेव विषये समानेयमवस्था।

न चापि तस्या अध्ययनाध्यापनसौलभ्यं प्रचारबाहुल्यं च यथाभीष्टं विद्यते। पुरा खलु—

"महान् हि शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती त्रयो लोकाः...।",

किञ्च, "शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति। विकार एनमार्या भाषन्ते शव इति।", (महाभाष्ये पस्पशाह्निके),

इत्यादिप्रमाणेभ्यो न केवलं भारतवर्ष एव किन्त्वस्माद् बहिरपि तस्याः प्रचार आसीदित्यवगम्यते।

"तत्रायमप्यर्थः। इदमपि सिद्धं भवति प्राजितेति। किञ्च भो इष्यत एतद्रूपम्? बाढमिष्यते। एवं हि कश्चिद्वैयाकरण आह।

कोऽस्य रथस्य प्रवेतेति। सूत आह। आयुष्मन्नहं प्राजितेति। वैयाकरण आह। अपशब्द इति। सूत आह। प्राप्तिज्ञो देवानांप्रियो न त्विष्टिज्ञः, इष्यत एतद्रूपमिति। वैयाकरण आह। आहो खल्वनेन दुरुतेन बाध्यामह इति। सूत आह। न खलु वेञः सूतः, सुवतेरेव सूतः। यदि सुवतेः कुत्सा प्रयोक्तव्या, दुःसूतेनेति वक्तव्यम्" ( महाभाष्ये २।४।५६ ),

"उदहारि भगिनि या त्वं कुम्भं हरसि शिरसानड्वाहं साचीनमभिधावन्तमद्राक्षीरिति" ( महाभाष्ये १।१।५८ ),

किञ्च।

विप्रोऽपि यो भवेन्मूर्खः स पुराद् बहिरस्तु मे।
कुम्भकारोऽपि यो विद्वान् स तिष्ठतु पुरे मम॥
( भोजप्रबन्धे )

काव्यं करोमि न हि चारुतरं करोमि
यत्नात्करोमि यदि चारुतरं करोमि।
भूपालमौलिमणिमण्डितपादपीठ!
हे साहसाङ्क! कवयामि वयामि यामि॥
( भोजप्रबन्धे भोजं प्रति कुविन्दस्यैकस्य वचनम् )

इत्यादिसाक्ष्यानुसारं न केवलं मनुस्मृत्यादिधर्मशास्त्राणामादेशमनुसृत्य द्विजेष्वेव तस्याः प्रचार आसीत्, किन्तु द्विजातिव्यतिरिक्तैः सूतकुविन्दकुम्भकारादिभिरपि सा अधीयते स्म।

"प्रत्यभिवादेऽशूद्रे" ( पा० सू० ८ । २ । ८३ ) इति पाणिनिसूत्रेऽशूद्रग्रहणेन, निरुक्तेऽष्टाध्याय्यां[१] च तस्या भाषात्वव्यवहारेण च तस्याः प्राचीनकाले सार्वजनीनः प्रचार एव द्योत्यते।

किञ्च

मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात्।
अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः॥

इत्यनेन कुलपतिलक्षणेन, इतिहासप्रसिद्धानां नालन्दातक्षशिलादिविश्वविद्यालयानामद्यतनीयानामपि विदुषां विस्मयोत्पादकेन वृत्तान्तेन च देववाण्याः पुरा प्रचारातिशय एवानुमीयते। भारतवर्षेऽप्यनुपलब्धानामनेकेषां संस्कृतग्रन्थानां चीनतिब्बतप्रभृतिदेशीयभाषासूपलब्धैरनुवादग्रन्थैरपि देववाण्याः सैव गुणगाथा गीयते।

एवं सति, अद्यत्वे विस्तरदृष्ट्या अन्यथा वा सर्वथा संकुचितगात्रा हीना दीना च दृश्यमाना सा कथं न कदर्थयेदस्माकं चेतांसि। न केवलं द्विजातिव्यतिरिक्तैः कुविन्दादिभिर्ब्राह्मणव्यतिरिक्तैः क्षत्रि-

---

१ तथा हि "नेति प्रतिषेधार्थीयो भाषायाम्" ( नि० १ । ४ ) इति निरुक्ते, "भाषायां सदवसश्रुवः" ( अ० ३ । २ । १०२ ) इति चाष्टाध्याय्यां दृश्यते।

यादिभिरेव वा तस्या अध्ययनाध्यापनं परित्यक्तम्, किन्तु ब्राह्मणेष्वपि अत्यल्पा संख्यैव तस्या अध्ययनाध्यापनपरा दृश्यते ।

## देववाण्या अवनतेः कारणानि

तत्रैतस्याः प्रत्यक्षाया देववाण्या अवनतेः कानि कारणानि, कथं च तस्याः पुनरपि प्रचारबाहुल्यं सम्भवतीति विचारणीयम् । प्रथमं तावदवनतिकारणानि संगृह्यन्ते ।

अवनतिकारणनिर्देशप्रसङ्ग एतत्तावदवधारणीयं यदुक्तावनतेः कारणानां द्वैविध्यं वर्तते । प्रथमं खलु तानि कारणानि सन्ति येषां विषये संस्कृतभाषाभ्युन्नतिं चिकीर्षवोऽपि वयं चिरकालादेव निरुपाया विवशाश्च संवृत्ताः स्मः । तद्यथा विदेशीयराजशासनम्, विदेशीयसभ्यताप्रचारः, आधुनिकभारतवर्षे विभिन्नानां नूतनधर्माणामुदयो विभिन्नधर्मिणां सङ्घर्षश्च । नियतमेव सत्स्वेतेषु सर्वथा नूतनकारणेषु संस्कृतभाषायाः पुनरपि प्राक्कालिकी समुन्नतिरसाध्या । परमुक्तकारणभिन्नानि यानि तदवनतिकारणानि तेषां प्रतीकारविषये सर्वथैव स्वाधीनाः परमुखानपेक्षिणश्च वयम् । अत एवात्र प्रसङ्गे तेषामेव निर्देशः समुचितः । तादृशकारणानि चैतानि—

(१) लेखशैल्याः काठिन्यम् । प्राचीनग्रन्थानां विषये सर्वविदितमेवैतद् वृत्तं यत्तेषां लेखशैली स्वाभाविकी अत एव सरला प्रसादगुणबहुला च विद्यते । नूतनग्रन्थानां पुनरन्यथैव गाथा ।

मूलग्रन्थानामपेक्षया टीकाग्रन्थानामधिकतरं काठिन्यं कस्याविदितम्। न चैतादृशं वृत्तमन्यासामुन्नतानामाधुनिकीनां भाषाणां विषये।

( २ ) **अर्थगौरवमन्तरेण शब्दाडम्बरेऽत्यादरः।** गद्यपद्यात्मकेषु काव्यग्रन्थेषु प्रायेण प्रसिद्धमेवैतत्। प्राचीनानां कवीनामर्थालङ्कारेषु यादृशः समादरो न तादृशः शब्दालङ्कारेषु। उत्तरकालवर्त्तिनां कवीनां तु विषय एतद्विपरीतमेव। एतादृश्येव दशान्यविषयकग्रन्थेष्वपि विद्यते।

( ३ ) **विचाराणामनुदारता सङ्कीर्णता च।** प्राचीनदर्शनादिग्रन्थानामनुशीलनेन स्पष्टमेतत्प्रतीयते यत्तेषां कर्तारः स्वविरुद्धमतानामपि सम्यगध्ययनं मननं च कृत्वैव तेषां खण्डनाय प्रवृत्ता आसन्। ज्यौतिषादिविषयेषु यवनाद्याचार्याणामपि सिद्धान्तान् सम्यगधीत्य तद्विषये स्वभाषायां निबन्धान् निबध्य तेषां प्रचारं कृतवन्तः। जैनादिनिर्मितानामप्यमरकोशादिग्रन्थरत्नानां सादरमध्ययनाध्यापनं प्राचीनकाले क्रियते स्म। या च परिपाटी अद्यापि दिष्ट्या न सर्वथा समुच्छिन्ना।

समुचितमेव चैतदाचरणमासीत्। विरुद्धविचाराणां सङ्घर्षत एव, द्वयोर्मल्लयोः परस्परमल्लयुद्धेन तयोर्बलस्येव, ज्ञानस्योन्नतिरुत्कर्षश्च जायते। अन्यथा कूपमण्डूकवदाचरन्तोऽनुदारविचाराः सङ्कीर्णहृदयाश्च मानवा अवनतेर्मुखमवश्यं पश्यन्ति। अद्यत्वे चिरकालादेव सर्वथानु-

दारा एतस्मिन् विषये संस्कृतभाषाध्ययनाध्यापनकर्तारो दृश्यन्ते । न केवलं नूतनपाश्चात्यविचाराणामेव विषये तेषामेतादृशी सङ्कीर्णा संकुचिता च मतिः; किंतु स्वदेशीयविरुद्धमतानामपि विषये ।

( ४ ) तस्याः शिक्षणेऽनुदारता । उपरि निर्दिष्टमेव यत्पुराकाले भारते सर्वसाधारणजनतायां देववाण्याः प्रचार आसीत् । परमद्यत्वे प्रायेण संस्कृताध्यापकानामतीवानुदारा मतिरस्मिन् विषये । आस्तां तावद् द्विजातिव्यतिरिक्तानां शूद्राणामध्यापनम् । द्विजानामपि सर्वेषामध्यापने महान्तं सङ्कोचमनुभवन्त्यद्यतनीयाः संस्कृतविद्वांसः । हिन्दूजात्यन्तर्गतानामपि जैनादीनां त्वध्यापनवार्तैव प्रायस्तेषां शिरःसु पीडां समुत्पादयति ।

( ५ ) असहिष्णुता । प्रायः संदृश्यते यत्संस्कृतविद्वांसोऽतीवासहिष्णवो न हि तथा परस्परं सौहार्देन सांमनस्येन च वर्त्तितुं समर्था भवन्ति यथेंग्लिशादिभाषाणामध्येतारः । एकस्मिन्नेव विद्यालयेऽध्यापनकार्यमाचरत्सु तेषु परस्परमीर्ष्यादिबाहुल्यमालोक्यते ।

## देववाण्या उन्नतेरुपायाः

अथैतस्यां हृदयविदारिकायामवस्थायां समुपस्थितायां कथं पुनरपि तस्याः प्रचारबाहुल्यं सम्भाव्यते किं च तामुन्निनीषुभिस्तदर्थं कर्त्तव्यमित्यधस्तात् संक्षेपेणैव द्योत्यते । यद्यप्यवनतिकारणविचा-

रणायैव सामान्यतोऽर्थादापद्यते के क उपायास्तस्या उन्नतेरिति, तथापि विस्पष्टार्थमन्येऽपि केचिदुपाया निर्दिश्यन्ते। एतेषामुपायानां विचारेण केषाञ्चित्पूर्वमनुक्तानामवनतिकारणानामपि भानमर्थापत्त्या भविष्यति। उन्नतेरुपायाश्चैते—

(१) **पठनपाठनशैल्याः संस्कारः**। अद्यत्वे छात्राणां तत्तद्विषयेषु तत्तद्ग्रन्थेषु चाधिकारित्वानधिकारित्वनिर्णयं योग्यत्वायोग्यत्वविचारं चान्तरेणैव तत्तद्ग्रन्थांस्तानध्यापयितुं प्रवर्त्तन्ते प्रायशः संस्कृताध्यापकाः। उदाहरणार्थम्, अनेके छात्राः संस्कृतवाक्यरचनामप्यजानन्तो लघुकौमुदीं वैयाकरणसिद्धान्तकौमुदीं वा रघुवंशादिकाव्यानि च पठितुं प्रवृत्ता जायन्ते। एवं च तेषां परिश्रमस्य समयस्य च व्यर्थमेव नाशो भवति। ततश्चैतस्य दोषस्य वारणाय सर्वतः प्रथमं संस्कृतस्य पठनपाठनशैल्याः संस्कारोऽपेक्षितः।

(२) **उपयोगिग्रन्थसञ्चारः**। उक्तहेतोरेव संस्कृतभाषायां तत्तद्विषयेषु प्रविविक्षूणां हितदृष्ट्योपयोगिबालपाठावल्यादीनां तत्तद्विषयेषु च बालोचितपाठ्यपुस्तकानां निर्माणमावश्यकम्।

(३) **आकरग्रन्थानामुद्धारः**। प्राचीनग्रन्थानां विशेषत आकरग्रन्थानामुद्धाराय तेषां पठनपाठनप्रचारोऽत्यावश्यकः। नवीनग्रन्थानां वस्तुतोऽर्थावगमाय तत्तच्छास्त्राणामितिहासस्य ज्ञानार्थं चापि उक्तार्थस्यावश्यकता। अन्यथा "मूले शुष्के नैव पत्रं न पुष्पम्" इति न्यायेन आकरग्रन्थानामध्ययनाध्यापनविलोपे नवीनग्रन्थानामपि ह्रासोऽनिवार्यः।

(४) **शिक्षणविधौ दक्षाणामध्यापकानामावश्यकता।** अध्यापनकार्ये विशेषतश्च बालानामध्यापने दक्षाणामध्यापकानामतीवोपयोगिता। एवमेव सुलभोपायेन अल्पसमयेन अनायासेन च बालानां तत्तच्छास्त्रेषु प्रवेशः कारयितुं शक्यते। ततश्च यथाऽवश्यकमध्ययनाध्यापनविधौ परिनिष्ठिता दक्षाश्च अध्यापका यथा सम्पद्येरंस्तथा विधेयम्।

(५) **सौहार्दबुद्धेर्विचारशक्तेश्चाभिवृद्धिः।** संस्कृतज्ञेषु परस्परं सौहार्दबुद्धेर्विचारशक्तेश्चाभिवृद्धयर्थं तत्तद्विद्यालयेषु पाठशालासु च विद्यापरिषदामावश्यकता यत्र विभिन्नविषयानुद्दिश्य प्रेमपुरःसरं लेखद्वारान्यथा वा वादविवादव्यवस्था भवेत्। एवमेव च सभासञ्चालनकुशला वक्तृताशक्तिसम्पन्नाश्च संस्कृतभाषाध्येतारो भवितुं प्रभवन्ति। तदत्र स्मृतिपथमायाति चरकसंहिताया अधोनिर्दिष्टः संदर्भः :—

"तद्विद्यसंभाषा हि ज्ञानाभियोगसंहर्षकरी भवति। वैशारद्यमपि चाभिनिर्वर्तयति। वचनशक्तिमपि चाधत्ते। यशश्चाभिदीपयति। पूर्वश्रुते च संदेहवतः पुनः श्रवणात् श्रुतसंशयमपकर्षति। श्रुते चासंदेहवतो भूयोऽध्यवसायमभिनिर्वर्तयति। अश्रुतमपि च कंचिदर्थं श्रोत्रविषयमापादयति।" इति।

(६) **अन्येषामुपयोगिविषयाणामध्ययनम्।** संस्कृतभाषया सहोपयोगिनामन्येषां विषयाणामप्यध्ययनं विधेयम्। तद्यथा सामान्यविज्ञानस्य गणितस्येतिहासस्य भूगोलविद्यायाश्च।

अनेनैवोपायेन संस्कृताध्येतृषु सामान्यव्यवहारबुद्धेर्विकासः सम्पादयितुं शक्यते । अन्यथा

अपि शास्त्रेषु कुशला लोकाचारविवर्जिताः ।
सर्वे ते हास्यतां यान्ति यथा ते मूर्खपण्डिताः ॥

इत्युक्त्यनुसारं व्यवहारबुद्धिशून्याः संस्कृताध्येतारः प्रायेणोपहास्यतामेव यास्यन्ति ।

(७) **समालोचनाबुद्धेः प्रादुर्भावः परिमार्जनं च ।** नूतनपाश्चात्यविद्यानां स्वदेशीयप्राचीनविद्यानां च समन्वयार्थं याथार्थ्येन तासां गुणदोषविवेचनार्थं च समालोचनाबुद्धेः प्रादुर्भावः परिमार्जनं च संस्कृतज्ञेष्वतीवावश्यके । एवमेव ते प्राचीनाचार्या इव तत्तद्विद्यासु नूतनविचाराणां सृष्टौ समर्था भवितुमर्हन्ति । नान्यथा ।

त एते समासत एव गीर्वाणवाण्या अभ्युदयोपाया निर्दिष्टाः । आशास्यते गुणदोषविवेचका माननीयास्तत्रभवन्तः सामाजिकास्तदेतत्सर्वं विचार्य यदत्रानुपयोगि सदोषं वा तदपहाय यदुपयोगि गुणयुक्तं च तदङ्गीकरिष्यन्ति । यतो हि "गुणगृह्या वचने विपश्चितः" । ततश्चान्ते सविनयं ममैषाभ्यर्थना—

सारं ततो ग्राह्यमपास्य फल्गु
हंसैर्यथा क्षीरमिवाम्बुमध्यात् ॥

॥ इति ॥

---

( २८ )

कोकिल तावद्विरसान्
यापय दिवसान्वनान्तरे निवसन् ।
यावन्मिलदलिमालः
कोऽपि रसालः समुल्लसति ॥

इह खल्वव्याहतपरिवृत्तिशालिनि जगति जाग्रति निखिल-भूतजातजरयितरि समाक्रान्ताखिलभुवने काले नहि खलु कस्यचन सर्वदा एकावस्थायामेवावस्थितिः संभवति। ततश्चानेन नितरामतिनृशंसतमेन कालेन ह्युपस्थापितायामापदि किं नु विधेयम् आपन्निम्नगानिमग्नैरिति मीमांसाव्यतिकरे समाधित्सुः कश्चिद्धीरधुरीणः शेमुषीमद्वरिष्ठः कविकुलमूर्धन्यः कोकिलान्योक्त्या समुपदिशन्नाह—

कोकिल तावद्विरसानित्यादि ।

अयं भावः ।

इह खलु नानाविधविपज्जालज्वालावलीसुदुःसहे भुवनतले कालः खल्वेषोऽतिप्रबलः। विचित्रा ह्येतस्य कृतिः। नहि कश्चिदेतादृशो दृग्गोचरो यो गृहीतजन्मा नैनेन कवलीकृतः स्यात्। एष हि स्वर्भानोरपि[1] क्रूरतरो महीयांश्च येन कोटिशो भूभृदिन्दवो

---

१ स्वर्भानुः = राहुः ।

विकरालदंष्ट्रया चर्विता विलयं गताः। समेषां खल्वेष जरयिता। योऽद्य महत्पदमधितिष्ठति, अतिशयसुखसौभाग्यसम्पदमनुभवति, स एवान्येद्युः कालमहिम्ना तामनुकम्पनीयां दशामापद्यते। एष खलु—य एकदा महांस्तेजस्वी त्रिभुवनभूषणः प्रख्यातकीर्तिरमितबलश्चासीत्, यस्मात्प्रोत्खातारातिकुलकाननाद्वित्रस्ता भीतिचकिता विपक्षा नान्यं स्वमाश्रयं त्राणं वामन्यन्त—तमपि महीयांसं राजराजपदमुपभुञ्जानं सहसारण्यादरण्यानीं[१] भ्रामयति।

तदेतां कालविहितां भीषणामवस्थामवेक्षमाणः को नु प्रज्ञावान् सर्वदा कस्याप्येकैवावस्था स्थास्यतीति वक्तुं शक्नोति? नैव खल्वेवमेनेन समाक्रान्ते भुवने कस्याप्येकरसेनैवावस्थितेश्चिराय संभवः। नूनं योऽद्य मोदमानस्तिष्ठति, अन्येद्युस्तस्योपरि महद् दुःखं समापतति।

ततश्चैकरसेनावस्थितेः सततमसम्भवाद् आपदापगाप्रवाहपतितेन किमवलम्ब्य दुःखोदधेः स्वात्मा परित्रातव्य इति विचारणायामयमेवार्थः प्रमितित्वेन वक्तव्यो यद् धैर्यमवलम्ब्य निजदुःखसन्ततेरनित्यतामवगच्छता भाविन्याः सुखसम्पत्तिसन्ततिसम्भूतेः प्रत्याशयैव तेन निजप्राणत्राणं विधेयमिति। महाजनपरिगृहीतो ह्येष मार्गः। एनमनुसरन्त एव सन्तः संसारयात्रायां सफला भवन्ति।

इह लोके ये निराशावादिनोऽश्रद्दधाना अधीरास्ते हि विपत्पाते

---

१ "महारण्यमरण्यानी" इत्यमरः।

न केवलं स्वाभीप्सितकार्यसाधनादेव भ्रष्टा जायन्ते, किन्तु प्रायो निजजीवनधारणमपि दुर्वहं भारमिव मन्यमानाः स्वप्राणत्यागोन्मुखा अपि भवन्ति। अथवा महता दैन्येनैव तमापत्समयमतिवाहयन्ति।

ये पुनराशावादिनः श्रद्दधाना धैर्यधनास्ते हि कदर्यसेवितमकीर्तिकरमस्वर्ग्यं च पूर्वोक्तं पन्थानमुत्सृज्य।

"आशावतामयं लोकः",
"श्रद्धावान् लभते सिद्धिम्",
संपदो महतामेव महतामेव चापदः।
वर्धते क्षीयते चन्द्रो न तु तारागणः क्वचित्॥
अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम्।
सुखान्यपि तथा मन्ये दैन्यमत्रातिरिच्यते॥

इत्येवं चिन्तयन्तः, इह संसारयात्रायामपरिहार्यः खल्वापदां समागमः, आगमापायिनोऽनित्याश्चैते कष्टापाता इति च विश्वसन्तोऽनायासेनैव तं समयमतिवाह्य स्वाभीष्टमासादयन्ति।

किञ्चात्रैतदपि विचारणीयं यत् कालः खल्वेष चक्रनेमिक्रमेणैव जगदखिलं शास्ति। तथा च, अस्थिरे हि सुखिदुःखिनोः सुखदुःखे। क्षणेनैव जनो दुःखसागरे प्रक्षिप्यते, क्षणेन च सुखसम्पत्तिमासाद्य सुखी सञ्जायते। नितरां मोदमानाः क्षणेनैवानुकम्पनीयदशामासादयन्ति। बहवश्च चिराय महता दुःखेन कालमतिवाहयन्तः सहसैव महतीं सुखसम्पदमधिगच्छन्ति। नैवैकान्ततः कस्यचिद् दुःखाधिगतिः सुखसमागमो वाकर्ण्यते। सर्वेषामपि

तयोरन्यतरेण समागमोऽस्थिरः क्षणभङ्गुरश्च । ततश्चैवं चक्रनेमिक्रमेण जगच्छासति काले नियतमेव सर्वोऽपि कदाचन कष्टमापद्यते, कष्टमधिगत्य च सुखी भवति इति नियमानुरोधेनोपस्थितास्वपि कदाचिदापत्सु—येनेयमवस्थोपस्थापिता नूनं तेन कालेन मुहुरपि प्रथमावस्था प्रापयिष्यते—इति प्रत्याशया

त्याज्यं न धैर्यं विधुरेऽपि काले
धैर्यात्कदाचित्सुखमाप्नुयात्सः ॥

इत्यादेशानुरूपं बुद्धिमता धैर्यं संरक्षणीयम् । यतः सन्तो हि—

अपि स्फुटति विन्ध्याद्रौ वाति वा प्रलयानिले ।
नापदि ग्लानिमायान्ति हेमपद्मं यथा निशि ॥

केन खलु मनीषिणास्य सिद्धान्तस्य सत्यतोपयोगिता च न प्रत्यक्षीकृता स्वानुभवेन । केन वा महात्मचरितामृतपानरसिकेनेतिहासविदा एतत्पोषकाण्यनेकानेकवृत्तानि नाधीतानि ।

तथा हि, कस्य खलु भगवत्याः प्रातःस्मरणीयायाः सीतायाश्चरितं तिरोहितम् । सा हि जनकनन्दिनी दशवदनेन नीता, हन्त! तुहिनाविलेव पद्मिनी, मरुमध्यगतेव मराली, निदाघतप्तेव वल्ली, यूथभ्रष्टेव हरिणी, पाशबद्धेव च सारिका, कष्टां दशामागता भर्तृगतमानसा दुःखोदधौ भर्तृविरहानलेन दह्यमाना

आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां
सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥

इतिवचोऽनुरूपमात्मानं रक्षन्ती, अनेकवारं निजप्राणत्यागार्थं कृताध्यवसायापि

विनाशे बहवो दोषा जीवन् प्राप्नोति भद्रकम् ।
तस्मात्प्राणान् धरिष्यामि ध्रुवो जीवति सङ्गमः ॥

तथा "जीवन्नरो भद्रशतानि भुङ्क्ते" इत्यनुसारं च धारयन्ती प्राणान्, भगवत आञ्जनेयादवगम्य भर्तु रुदन्तं—मुहुरप्यचिरादेव प्राणनाथं सम्प्रेक्ष्य भविताऽहमधन्या धन्या—इत्यवधारयन्ती सहसा कथितवती—

कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥

यथा वा, महाभागो राजराजो नलश्चक्रवर्त्तिराज्यार्द्धिच्यावितः कालपांसनेनारण्यादरण्यानीं भ्रमन्नपि महत्कष्टजातं सहमानोऽपि

विपदि धैर्यमथाभ्युदये क्षमा
........................
........................
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥

न मृतो जयति शत्रून् जीवन् भद्राणि पश्यति ।
मृतस्य भद्राणि कुतः ।
कालः समविषमकरः परिभवसम्मानकारकः कालः ।

इत्यादिवचोऽनुकूलं कालविहितमापत्समयं भाविन्याः सुखसम्भूतेः प्रत्याशया निनाय ।

एवमेवान्येऽपि सहस्रशो दृष्टान्ता आबालप्रसिद्धाः ।

तस्मादवितथमेवेदं यदापदापगाप्रवाहपतितेन धैर्यमवलम्ब्य निज-दुःखसन्ततेरनित्यतामवगच्छता भाविन्याः सुखसम्पत्तिसन्तति-सम्भूतेः प्रत्याशया निजप्राणत्राणं विधेयमिति । तदत्र स्मर्यतामेत-दखिलमालोचयतः कस्यचिद्विपश्चितामपाश्चात्यस्येदं सुभाषितम्—

कोकिल तात्रद्दिरसानित्यादि ।

---

( २९ )

**अयि दलदरविन्द स्यन्दमानं मरन्दं**
**तव किमपि लिहन्तो मञ्जु गुञ्जन्तु भृङ्गाः ।**
**दिशि दिशि निरपेक्षस्तावकीनं विवृण्वन्**
**परिमलमयमन्यो बान्धवो गन्धवाहः ॥**

इमं खलु मोहसलिलप्रचलदूर्मिमालाकुलं बहुविधविपज्जाल-ज्वालावलीसुदुःसहं संसृतिपाथोनिधिम्[१], जाग्रत्यपि निखिलभूत-

१ पाथोनिधिः समुद्रः ।

जातजरयितरि सततमखिलजगद्ग्रसनसमुन्मुखेऽतिदारुणे कराल कालग्राहपांसने, सुधीरधुरन्धरोऽपि बलिनां बलिष्ठोऽपि इतरसाहाय्य निरपेक्षः कोऽन्वेकाकी समुत्तितीर्षुः पारं गन्तुं पारयति। नो जातु कश्चित्सुधीरपरसाहाय्यनिरपेक्षः क्षणमपि तदुत्तितीर्षासङ्कल मनाङ् मनस्याकलयिष्यति। सत्यप्येवं, कोऽपि मेषमुग्धस्तत्सरत विभाव्य तद्व्यापारव्यापृतो वर्त्तते चेत्, नूनं स्वात्मा तस्य न प्रियः यदेवं जानन्नप्यसौ स्वयमेव पादौ कुठारघातं हन्ति। ध्रुवमसावेव मेव वक्तव्यो यदेनेनाबोधान्धान्धौ[1] निमग्नेन "कृपाणेन स्वेन प्रहृत मिदमात्मन्यकरुणाम्" इति। तदेवं को नु प्रेक्षावानवगच्छन्नप्येन मतिदुस्तरं संसारार्णवम्, जगति लघिष्ठान्यपि कार्यजातानि पर साहाय्यमन्तरेण कर्त्तुमपार्यमाणानि चावलोकयन्, एकाकिना परसाहाय्यमन्तरेण तरणीयमभिधातुमुत्सहिष्यते।

ततश्चाभिहितगुणमेनं नितान्तदुस्तरं संसारार्णवं समुत्तितीर्षुणा यात्रिणा किन्नु वस्तु समाश्रयणीयं यदवलम्ब्यासौ समुत्तरन्नमुं संसारसागरं नानाविधविपज्जालज्वालाभ्यः स्वात्मानं त्रायमाणः, करालकालग्राहादात्मानं रक्षन्, मोहसलिलप्रचलदूर्मिमालास्वपि कुशली संसारयात्रामतियापयितुमलं भवेदिति मीमांसायां विचारपथमवतीर्णायामयमेवार्थः प्रमितित्वेन वक्तव्यो यत् **संसारार्णवं समुत्तरीतुं वाञ्छावता निरुपधिसुहृत्सौहार्दपोतमारुह्याकुतोभयेन संसृतियात्रापरेण भवितव्यम्।**

---

१ अन्धुः कूपः।

स्वल्पपरिणाहमप्येतद्वचो रत्नमिवार्थसारवत्, तथ्योपदेशधारि परमोपकारि च। तथा च, यथा हि कश्चिदध्वनीनो महान्तमति-तरलतरङ्गभङ्गसमाकुलम् अध्युषितविकरालनक्रचक्रवालं व्याप्तवाडवानलं पारावारम[1]वेक्षमाणः, एकाकी गन्तुं पारमपारयन्, कश्चित् सततमितरहितार्थवद्धपरिकरं सम्पदापत्सहायं कर्णधारमाश्रितस्तत्पोतमारुह्य निखिलापद्भ्यो निर्विशङ्कः सकुशलं यात्रामतिवाह्य पारंसागरं याति। तादृशो हि कर्णधार उपस्थितायामप्यापदि नहि जातु यात्रिणां सङ्गत्यागं विधाय तत्साहाय्यसम्पादनाद्विरमति, परं परप्राणत्राणाय प्राणानप्युपहारीकरोति। यस्तु अभिसन्धाय स्वार्थं द्रव्यादिलाभरूपं कञ्चित् यात्रिणस्तारयति, नहि तत्पोतमारुह्यापि कश्चिन्निर्विशङ्कः पारं गन्तुं पारयति। यावत्सम्पत्तिकालमसौ भवतु तेषां सहायः। विपदः पुनर्नामापि श्रुत्वा दूरतस्तत्सङ्गं त्यक्त्वा स्वात्मत्राणार्थं व्रजति।

एवमेवेह संसारपारावारे वहलापत्परम्परापरिपूर्णे नैकाकी कश्चिज्जातु पारगमनाय प्रभवति, यावन्नासौ परसाहाय्यमादत्ते। तत्रापि यदि स स्वार्थमभिसंधाय

कार्यापेक्षी जनः प्रायः प्रीतिमाविष्करोत्यलम्।
लाभार्थी शौण्डिकः शष्पैर्मेषं पुष्यति पेशलैः॥

---

१ पारावारः समुद्रः।

इत्याद्यनुरूपं यावन् समृद्धिमनुकूलं प्रियमधुरभाषिणं च कञ्
स्वीयसाहाय्यार्थमाश्रयति, नैव तत् तस्य श्रेयसे प्रभवति। नूनमेताह
सहायो नहि विपत्परम्परापाते सहायः। सम्पत्तावपि यावत् स्व
सिद्धिमेवासौ प्रियं मधुरं च मुहर्मुहुर्भाषमाणोऽपि

सुलभाः पुरुषा राजन् सततं प्रियवादिनः।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः॥

इत्याद्यनुरूपं नैव हितं ब्रवीति।

ततश्च

निरुपधिपरोपकारः कोऽप्युच्चैःस्थायिनां भारः।
जगदमृतैरभिषिञ्चन्नञ्चति केनाभिसन्धिना चन्द्रः॥
सन्तो नहि समीक्षन्ते स्वार्थं परहिते रताः।
उपकर्तुं प्रियं वक्तुं कर्तुं स्नेहमकृत्रिमम्।
सज्जनानां स्वभावोऽयं केनेन्दुः शिशिरीकृतः॥
एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये।

इत्यादिवचोऽनुकूलं निरपेक्षपरहितपालनपरायणमेव सम्पदापत्सह
सखायमकृत्रिमं समाश्रित्य स तत्सौहार्दपोतमारुह्य सक्षेमं संसा
यात्रामतिवाह्य तमुत्तरीतुं प्रभवति। एतादृशनिरुपधिसुहृत्सौहा
पोतमारूढो नूनं सम्पत्ताविव विपत्स्वपि निर्विशङ्कः स्थातुमुत्सहते
यत एतादृशो हि सखा

पापान्निवारयति योजयते हिताय
गुह्यं च गूहति गुणान् प्रकटीकरोति।

आपद्गतं न च जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥
सम्पत्तौ च विपत्तौ च यस्तिष्ठति स बान्धवः ।
तन्मित्रमापदि सुखे च समक्रियं यत् ।

इत्यादिवचसामनुरूपं सम्पत्ताविव विपत्स्वपि सहायः प्राणपणैरपि परप्राणत्राणं विदधाति। नासौ मुधैव स्वीयमनोरथसंसाधनायाहितमपि हितमिव वर्णयन् सततं मधुरैर्वचोभिरेव स्वमित्रं रञ्जयितुं चेष्टते; प्रत्युत—"अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः" इत्यनुसारमप्रियमपि हितं ब्रवीति। न पुनर्जातु प्रियमहितम्। एतादृशमेव सुहृदमाश्रितः तत्सौहार्दपोतमारुह्य मर्त्यः सुखेन संसारपारावारमुत्तरीतुं प्रभवति। अत एवोच्यते—

आपन्नाशाय विबुधैः कर्तव्याः सुहृदोऽमलाः ।
न तरत्यापदं कश्चिद्योऽत्र मित्रविवर्जितः ॥

नैवात्र संशयलेशावकाशः। मन्ये एतमेवार्थमनुवदितुं विस्तृतोऽसौ भुवि भारतीयेतिहासतन्त्रगिरां सन्दर्भः, यतः समस्तेष्वपि सूक्ष्मेक्षिकया समालोच्यमानेष्वितिवृत्ततन्त्रेषु अयमेवार्थो घनीभावमापन्नो नवनीतायते।

तथा हि, कस्य तावद् दुर्योधनेतिवृत्तमविदितम्, यदसौ भीष्मविदुरौ निरुपधिसुहृदावनादृत्य कर्णादीन् समाश्रितोऽन्तकान्तिकं प्रस्थितः। केन वा राक्षसराजो लोकरावणो रावणो न श्रुतः, योऽसौ निरुपधिमित्रम्

अयं च राजा व्यसनाभिभूतो
मित्रैरमित्रप्रतिमैर्भवद्भिः ।
अन्वास्यते राक्षसनाशनार्थे
तीक्ष्णः प्रकृत्या ह्यसमीक्ष्यकारी ॥
सुनीतं हितकामेन वाक्यमुक्तं दशानन ।
न गृह्णन्त्यकृतात्मानः कालस्य वशमागताः ॥

इत्येवमवबोधयन्तमपि विभीषणं तिरस्कृत्य प्रहस्तादीनि कपटमित्र स्वार्थपराणि समाश्रित्य प्रणाशं गतः ।

यस्तु पुनर्निरुपधिसुहृत्सौहार्दमाश्रितः संसारयात्रापरो भ नूनमसौ विपत्स्वपि कुशली स्वाभीष्टं याति । यथा हि भग श्रीरामचन्द्रो हनुमन्तं लक्ष्मणं सुग्रीवं च समाश्रितः सम दुस्तरा अप्यापदः समुत्तीर्य मुहुः स्वाभिलषितं लेभे । यथा धर्मसूनुरजातशत्रुर्भगवन्तं श्रीदेवकीनन्दनं समाश्रित्य सर्वा समुत्तीर्णवान् ।

ततश्चावितथमेवैतद्यन्निरुपधिसुहृत्सौहार्दमाश्रित्यैव मानवं शेषापदः सकुशलं समुत्तीर्य, सुखेन च संसारयात्रामतिव स्वाभीष्टं लभते ।

ततेतदखिलमालोचयतः कस्यचिद्विपश्चिच्छिरोमणेरिदमरविन् न्योक्तिरूपं सुभाषितं वचः स्मर्यमाणमतितरामभिरामं म हरति—

अयि दलदरविन्द स्यन्दमानं मरन्दमित्यादि ॥

( ३० )

## पुराणेषु विकासवादः

विदितमेवैतत्प्रायेण सर्वेषामपि समयविदां विदुषां यत्पाश्चात्त्या विद्वांसो विकासवादमाददते। सर्वेषामपि प्राणिनामप्राणिनां वा क्रमेणोन्नतिरिति तन्मतम्। तेन खलु वर्षशतात्पूर्वमासीद्यादृशं जगत्, तदपेक्षयाद्य वर्तते बहुतरमुन्नतम्। अद्य च यादृशम्, तदपेक्षयेदं भाविनि समयान्तरे भविष्यत्युन्नतमेव। सेयं क्रमिकोन्नतिधारेति फलति। वयन्तु ( भारतीयाः ) तद्विपरीतवादिन इवेति प्रसिद्धिः। अस्त्ययं संस्कार आबालवृद्धमस्मद्देशे, यज्जडचेतनोभयात्मकमपीदं जगद् यथाभवद्वर्षशतात्पूर्वम्, तदपेक्षया अद्य अवनतम्। न वृक्षास्तादृशाः, न वा तथा प्रसवित्री सस्यानां विश्वम्भरा। न वान्नादिष्वेव तादृशी शक्तिः। का तु कथा मनुष्याणाम्, ते खलु नक्तंदिवमायुषा वीर्येण धर्मेण बुद्ध्या समृद्ध्या वा ह्रसन्त्येव। सोऽयमास्माकीनो ह्रासवादः। फलमपि किलानुभूयते स्वस्ववादानुकूलमेव; ते खलु प्रत्यहमुन्नमन्त्येव, वयन्तु प्रत्यहं वा प्रतिक्षणमवनतिमेवाश्लिष्यामः। आस्तामिदम्, विकासवादोऽयमस्मच्छास्त्रेष्वपि सुस्फुटमुपलभ्यते—इत्येवाद्य दर्शनीयम्।

क्रमिकोन्नतिवादापरपर्यायोऽयं विकासवादःप्राणिविषये संक्षेपतः खलु द्वेधा विभज्य द्रष्टव्यः—जगति प्राणिनामुत्पत्तिविषये च, मनुष्याणां सामाजिकव्यवस्थाविषये च। पूर्वत्र तावदेष विकासवादसिद्धान्तः—न खलु भूम्यां परिदृश्यमाना इमे सर्वेऽपि प्राणिनो

युगपदेवोदपद्यन्त, अपि तु क्रमेणैषामुत्पत्तिः। सा चाप्युत्तरोत्तर-मुन्नतैव। तथा च पूर्वं तिरश्चां तत्रापि प्रथममेकेन्द्रियाणां ततो द्वीन्द्रियाणामनन्तरं त्रिचतुरेन्द्रियाणां पञ्चेन्द्रियाणां च तदनु क्रमेण समनस्कानां मनुष्याणामुत्पत्तिरिति तत्सिद्धान्तः फलति[1]।

सोऽयं सिद्धान्तः कथंचित् पौराणिकं सृष्टिक्रममनुसरतीव। तथा हि—सर्वेष्वपि पुराणेषु नवविधसृष्टिप्रतिपादनावसरे पूर्वं वृक्षाणां तदनु तिरश्चां ततो देवानां ततश्च मनुष्याणां सृष्टिरभिहिता। यथा विष्णुपुराणे (१ अंशस्य ५ अध्याये)—

सृष्टिं चिन्तयतस्तस्य कल्पादिषु यथा पुरा।
अबुद्धिपूर्वकः सर्गः प्रादुर्भूतस्तमोमयः ॥ ४ ॥
तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥५॥
पञ्चधावस्थितः सर्गो ध्यायतोऽप्रतिबोधवान्।
[2]बहिरन्तोऽप्रकाशश्च संवृतात्मा नगात्मकः[3]॥६॥
मुख्या नगा यतः प्रोक्ता मुख्यसर्गस्ततस्त्वयम्।
तं दृष्ट्वाऽसाधकं[4] सर्गममन्यदपरं पुनः ॥७॥

---

१ वानरा एव पुच्छघर्षणेन मनुष्यतया परिणता इति डार्विन्-मतमप्येतत्सिद्धान्तमनुसृत्यैव प्रवृत्तम्।

२ बहिः शब्दादिषु, अन्तः सुखादिषु च प्रकृष्टज्ञानरहितः।

३ वृक्षरूपः।

४ संसाराप्रवर्तकम्।

तस्याभिध्यायतः सर्गस्तिर्यक्स्रोतोऽभ्यवर्तत ।
यस्मात्तिर्यक्प्रवृत्तिः स तिर्यक्स्रोतास्ततः स्मृतः ॥८॥
पश्वादयस्ते विख्यातास्तमःप्राया ह्यवेदिनः ।
उत्पथग्राहिणश्चैव तेऽज्ञाने ज्ञानमानिनः ॥९॥
अहंकृता अहंमाना अष्टाविंशद्वधात्मकाः[१] ।
[२]अन्तःप्रकाशास्ते सर्वे [३]आवृताश्च परस्परम् ॥१०॥
तमप्यसाधकं मत्वा ध्यायतोऽन्यस्ततोऽभवत् ।
ऊर्ध्वस्रोतास्तृतीयस्तु सात्त्विकोदूर्ध्वमवर्तत ॥११॥
ते सुखप्रीतिबहुला बहिरन्तश्च नावृताः ।
प्रकाशा बहिरन्तश्च ऊर्ध्वस्रोतोद्भवाः स्मृताः ॥१२॥
तुष्टात्मानस्तृतीयस्तु देवसर्गस्तु स स्मृतः ।
तस्मिन् सर्गेऽभवत्प्रीतिर्निष्पन्ने ब्रह्मणस्तदा ॥१३॥
ततोऽन्यं स तदा दध्यौ साधकं सर्गमुत्तमम् ।
[४]असाधकांस्तु तान् ज्ञात्वा मुख्यसर्गादिसंभवान् ॥१४॥
तथाभिध्यायतस्तस्य सत्याभिध्यायिनस्ततः ।
प्रादुर्बभूव चाव्यक्तादर्वाक्स्रोतास्तु साधकः ॥१५॥

---

१ ज्ञान-तुष्टि-विपर्ययात्मका एते वधाः सांख्यदर्शने प्रसिद्धाः ।

२ सुखदुःखाद्यनुभववन्तः ।

३ पितृ-पुत्रादिसम्बन्धज्ञानशून्याः ।

४ केवलं भोगप्रसक्ता इति कर्मणामनारम्भेण संसारस्याप्रवर्तका देवा अपि ।

यस्मादर्वाग्व्यवर्तन्त ततोऽर्वाक्स्रोतसस्तु ते ।
ते च प्रकाशबहुलास्तमोद्रिक्ता रजोऽधिकाः ॥१६॥
तस्मात्ते दुःखबहुला भूयो भूयश्च कारिणः ।
प्रकाशा बहिरन्तश्च मनुष्याः [१]साधकास्तु ते ॥१७॥

तदत्र सृष्टिक्रमे संक्षेपतो विकासवादसिद्धान्त एव प्रख्यापितः— इति स्फुटमेव समीक्षादक्षाणाम् । इयांस्तु विशेषः, नास्माकमयं विकासवादोऽन्येषां ( युरोपीयादीनां ) विकासवाद इव निरीश्वरवादः, क्रमिके विकासेऽप्यत्र तत्तच्छक्त्या विर्भावस्य कारणसामग्र्याः संनिधापयिता कश्चिदीश्वरपदवाच्योऽभ्युपगम्यत एव । किं वा सन्निधापयिता, ईश्वर एव तत्तच्छक्त्यावेशेन भिन्नभिन्नैः स्वरूपैरवभासत इति

"इन्द्रो मायाभिः पुरुरूप ईयते ।"
"एकं सद्विप्रा बहुधा वदन्ति ।"

इत्यादि पदे पदे समुद्घोषयतामार्याणां स्फुटोऽभिमानः । तत एवात्र ईश्वरस्यैव क्रमेण सर्वविधप्राणिजनकत्वमाख्यातम् ।

निखिलसिद्धितुष्टिविशिष्टानां देवानां सर्गो यद्यपि विकासवादे मानुषसर्गादनन्तरं प्रतिपादयितुमुचितस्तथापि कर्मभिः सर्गप्रवर्तकत्वमत्र सृष्टिप्रकरणे मुख्यं विवक्षितम् । सा च यज्ञादिकर्मणां शक्तिरुत्तरोत्तरं सर्गप्रतननशक्तिश्च मानुषेष्वेव मुख्यतया प्रादुर्भवतीति त

---

१ कर्मस्वधिकृताः संसारप्रवर्तकाः ।

एव सर्वानन्तरजाताः सर्वेभ्यो मुख्यतया विवक्षिता इहाख्याताः । क्वचित्तु ज्ञानोन्नतिक्रमविवक्षया देवानां मुख्यत्वमाख्यायते ।

सृष्टिविषयोऽयमतिगभीरार्थगर्भित इति निबन्धान्तरे स्वातन्त्र्येण विस्तरशो व्याख्यायेत, इह तु दिङ्मात्रमेवास्योपदर्श्य विकासवादस्य द्वितीयं सिद्धान्तं विवरीतुमिच्छामः[१] ।

सोऽयं द्वितीयो विकासवादस्य सिद्धान्तः—यद् न मनुष्यजातिरुत्पत्तिदशायामेव सर्वशक्तिविशिष्टा सर्वकार्यकुशला वाऽभूत्, उत्पन्नमात्रेयमासीत्पशुप्राया । पशव इवादिमा मनुष्या अपि वन्यैः फलादिभिराहारं वर्तयन्ति स्म, अरण्ये वृक्षाणामधो गिरिगुहादिषु च वसतिमाश्रयन्ति स्म । पूर्वमिमेऽभवन्नग्नाः, तदुत्तरं तु वल्कलधारकाः । विद्यायाः सभ्यताया वा नासीत्कथापि । अथ क्रमेणोन्नतमस्या जातेर्ज्ञानम् । कृषिपद्धतिः, गृहग्रामनगरादिनिर्माणम्, वस्त्रादिविरचनम्, शस्त्रादिधारणं च क्रमेणैव बुद्धौ मनु-

---

१ केचित्तु मत्स्य-कूर्म-वराह-नृसिंह-वामन-परशुराम-राम-कृष्ण-बुद्ध-कल्कीति दशावतारक्रमेणापि पूर्वं जलचरा जीवाः, ततो जलस्थलोभयचराः, ततोऽरण्यचराः, ततोऽर्धग्राम्याः, ततो लघवः पुरुषाः, ततः केवलबलशालिनः, ततश्च राज्यादिप्रबन्धकुशला बलवन्तः, ततश्च राजनीतौ ज्ञाने बले च सर्वत्र मानुष्यस्य पूर्णतामुपगताः, ततोऽनन्तरं विरक्ताः, ततश्च समाजोद्धारकाः पुरुषा उत्पद्यन्त इत्येवं विकासवादं स्फोरयन्ति; न तु तच्छास्त्रे क्वचिदेवं परिष्कृतमित्युपेक्ष्यते ।

ष्याणामुपारूढम् । सर्वाऽपि विद्या क्रमेणैव विकासमलभत, लभते, लप्स्यते च । तेनाद्यावधि अनाविष्कृता अपि बह्वयः कलाः काले प्रादुर्भवेयुरेव । अद्य पर्यन्तमननुशीलिता अपि बह्वयः शक्तयः क्रमेणानुशीलनं प्राप्नुयुः । अननुशीलितास्तु काश्चन शक्तयो विनाशमप्युपगच्छन्ति, तेन संभाव्यते कस्मिंश्चिद् विषयेऽवनतिरपीत्यादि ।

सोऽयं सिद्धान्तः कस्मिंश्चिदंशे प्रकारभेदेन पुराणेष्वपि स्फुटं निबद्धः । तथा हि—**मार्कण्डेयपुराणे सृष्टिप्रकरणे** (४५-४६ अध्याययोः) नवविधभूतसर्गादिविवरणानन्तरं मानुषसर्गविस्तरे प्रकृते ब्रह्मणो ब्राह्मणादीनां बहुविधानां मनुष्याणामुत्पत्तिमभिधाय तदनन्तरं स्त्रीष्वार्तवप्रवृत्त्या स्त्रीपुंससंयोगादायुषोऽन्ते सन्तानप्रवृत्तिरित्युपवर्ण्य तस्मिन् काले प्रजानां का स्थितिरित्युपनिबद्धमारब्धम् (४६ अध्याये १० श्लोकानन्तरम्) (विस्तरभिया सर्वान् श्लोकाननुपन्यस्य तदाशय एवानूद्यते विशेषेण) :—

(कृतयुगे) तासां प्रजानां ध्यानेनैव शब्दाद्या इन्द्रियविषया उपनमन्ति स्म । ते जनाः सरित्सरःसमुद्रपर्वतानुपसेवन्ते स्म । शीतोष्णाभयमल्पमभूत् । इच्छा-द्वेष, सुख-दुःख, प्रियाप्रियादि-द्वन्द्वरहिता अमत्सरास्ते स्वाभाविकीं तृप्तिमधिगच्छन्ति[१] स्म ।

---

१ "पृथ्वी रसवती नाम आहारं व्याहरन्ति च" इति तु ब्रह्माण्डपुराणे (७ अ०, ४२ श्लो०) । "तुल्यमायुः सुखं रूपम्", "धर्माधर्मौ तदा न स्तः", "समूलफलपुष्पाणि वर्तनाय त्वशेषतः", "उत्तिष्ठन्ति पृथिव्यां वै तेषां ध्यानै रसातलात् । बलवर्णकरी तेषां जरारोगप्रणाशिनी", "असंस्कार्यैः शरीरैस्तु प्रजास्ताः स्थिरयौवनाः" इत्याद्यपि तत्र ।

अनिकेताः (गृहादिरहिताः) पर्वतसमुद्रादिषु तत्र विचेरुः। पिशाचोरगरक्षःपशुपक्षिसरीसृपनक्रमत्स्याद्यास्तस्कराद्याश्च तेभ्यो भयं न प्रायच्छन्। ऋतुजन्यानि मूलफलपुष्पाणि तदा न बभूवुः। सर्वदैव नात्युष्णशीतः सुखः कालोऽभूत्। कालपरिवर्तेन नित्यतृप्तानां तेषां पूर्वाह्णे मध्याह्ने च वितृप्तता आविर्भवति स्म, परमिच्छतामेवानायासेन तृप्तिरुदभूत्।

"इच्छतां च तथायासो मनसः समजायत।
अपां सौक्ष्म्यं ततस्तासां सिद्धिर्नाम्ना रसोल्लसा ॥२०॥
[1]समजायत चैवान्या सर्वकामप्रदायिनी।
असंस्कार्यैः शरीरैश्च प्रजास्ताः स्थिरयौवनाः ॥२१॥
तासां विना तु संकल्पं जायन्ते मिथुनाः प्रजाः।
समं जन्म च रूपं च म्रियन्ते चैव ताः समम् ॥२२॥
अनिच्छाद्वेषसंयुक्ता वर्तन्ते तु परस्परम्।
तुल्यरूपायुषः सर्वा अधमोत्तमतां विना ॥२३॥
कचित्क्वचित्पुनः साभूत् क्षितिर्भाग्येन सर्वशः।"

---

१ ब्रह्माण्डे—"कल्पादौ मानसी ह्येका सिद्धिर्भवति सा कृते" "तस्यां सिद्धौ प्रणष्टायामन्या सिद्धिरजायत। अपां सौक्ष्म्ये प्रतिगते तदा मेघात्मना तु वै। मेघेभ्यः स्तनयित्नुभ्यः प्रवृत्तं वृष्टिसर्जनम्। सकृदेव तया वृष्ट्या संसिद्धे पृथिवीतले। प्रजा आसंस्तस्तासां वृक्षाश्च गृहसंज्ञिताः" इत्यादि।

अथ क्रमेण कालपर्ययात्तासां सिद्धीनां नाशे आकाशात्प्रच्युता रसाः ( पयसः ) कल्पवृक्षा भूत्वा तद्गृहस्थिता अभूवन्। त्रेतायुगमुखे च तेभ्य एव वृक्षेभ्यस्तासां प्रजानां सर्वविधाः प्रत्युपयोगाः ( आहार-परिधान-शीतोष्णनिवारणाद्याः ) समजायन्त। ते वृक्षा एव तज्जीवनान्यभूवन्। सर्वेषां साधारण्येन भोग्यास्ते वृक्षा आसन्। कालपर्ययेण तु तेषां जनानां मनसि राग उद्बभूव। स्त्रीषु च मासि मास्यार्त्तवं भूयो भूयश्च गर्भोत्पत्तिः प्रवृत्ता। तदैव ते वृक्षा विलयं गताः।

अथापरे चतुःशाखा वृक्षाः पृथिव्यां प्रादुरभूवन्—

"वस्त्राणि च प्रसूयन्ते फलेष्वाभरणानि च ॥३०॥
तेष्वेव जायते तेषां गन्धवर्णरसान्वितम्।
अमाक्षिकं महावीर्यं पुटके पुटके मधु ॥३१॥
तेन ता वर्तयन्ति स्म मुखे त्रेतायुगस्य वै।"

एवं साधारण्येन वृक्षैर्वर्तयतां तेषां मनसि रागो लोभात्मना परिणतः। ततश्च ममेदं ममेदमिति वृक्षान् परिगृहीतवन्तः ( स्वत्वमभिमन्यन्ते स्म )। तेनापचारेण तेऽपि वृक्षा नष्टप्रायाः[१]। ततश्च शीतोष्णक्षुत्पिपासादीनि द्वन्द्वानि प्रजाः पीडयामासुः। ततो द्वन्द्वोपघाताय पुराणि तैः क्रियन्ते स्म।

---

१ "प्रणष्टाः प्रभुणा सार्द्धं कल्पवृक्षाः क्वचित् क्वचित्।" इति ब्रह्माण्डादिषु।

"मरुधन्वसु दुर्गेषु पर्वतेषु दरीषु च।
सश्रयन्ति च दुर्गाणि वार्क्ष पार्वतमौदकम् ॥३५॥
कृत्रिम च तथा दुर्ग मित्वा मित्वात्मनोऽङ्गुलैः।
मानार्थानि प्रमाणानि तास्तु पूर्व प्रचक्रिरे ॥३६॥

( अत्र वितस्ति-हस्तादीनि भूम्यादिमानानि सर्वाण्याख्यातानि, पुराणा च पुर-खेटक-द्रोणीमुख शाखानगर-खर्वटक-ग्राम घोषादिभेदास्तत्प्रमाणानि लक्षणानि च विस्तरेणाभिहितानि, तानि प्रकृतानुपयोगादुपेक्ष्यन्ते ।)

एव ता प्रजा पुरग्रामादि कृत्वा अथ शीतोष्णादिशान्तये गृहाणि निर्ममु । पूर्व हि ता वृक्षाश्रया पर्वताश्रया वा आसन्, तत्र वृक्षशाखाना पर्वतदरीणा वा यादृशा आकारा हृदयगमा बभूवुस्तत्सादृश्येनैव गृहाणि विरचयितुमारब्धानि। ( जायन्ते किलाद्यापि बहुत्र वृक्षाणा गृहाकारा प्राकृता सन्निवेशा, पर्वतदरीषु तु स्फुटमेव भवति बहुत्र प्रासादादिसाम्यम्। "तद्धि जानन्ति तद्विद")

"वृक्षस्यैव गता शाखास्तथैव चापरा गता·।
नताश्चैवोन्नताश्चैव तद्वच्छाखा प्रचक्रिरे ॥४३॥
या शाखा· कल्पवृक्षाणा पूर्वमासन् द्विजोत्तम।
ता एव शाखा गेहाना शालात्व तेन तासु तत् ॥४४॥"

( शाखासादृश्याद् गृहभागा अपि शालेत्याख्याता इति भाव )।

एव द्वन्द्वोपघात ( शीतोष्णादिनिवारण ) कृत्वा ततस्ते जना

वृक्षमधूनां नष्टत्वाद् वार्तोपायं ( जीवननिर्वाहयत्नं ) चिन्तयामासुः। तेषु क्षुत्तृडाद्यर्दितेषु विषादव्याकुलेषु ( त्रेतायुगमुखे ) वृष्टिरुदभूत्। वृष्टेरुदकानि च यानि निम्नगतानि तान्यवरोधात् स्रोतःखातादिरूपेण परिणतानि, ( नद्यश्च प्रवृत्ताः ) ततो भूमेरपां च संयोगादफालकृष्टा ग्राम्यारण्याश्चतुर्दशौषधयः प्रादुर्भूताः।

"ऋतुपुष्पफलाश्चैव वृक्षा गुल्माश्च जज्ञिरे।
प्रादुर्भावस्तु त्रेतायामाद्योऽयमौषधस्य तु ॥६०॥
तेनौषधेन वर्तन्ते प्रजास्त्रेतायुगे मुने।"

अथ रागलोभाभिभूतैर्जनैर्नदीक्षेत्रपर्वतादीनां वृक्षगुल्मौषधादीनां च ममत्वेन परिग्रह आरब्धः। तेनापचारेण भूमिस्तान्यौषधान्यप्यग्रसत्। नष्टास्वोषधीषु विभ्रान्ता क्षुधाकुलाः प्रजा ब्रह्माणं शरणं प्रापुः। स च तासां पीडानिवारणाय सुमेरुं वत्सं कृत्वा वसुधां दुदोह, तदा सस्यान्युत्पन्नानि।

"जज्ञिरे तानि बीजानि ग्राम्यारण्यास्तु ताः पुनः ॥६६॥
ओषध्यः फलपाकान्ता गणाः सप्तदश स्मृताः
व्रीहयश्च यवाश्चैव गोधूमा अणवस्तिलाः ॥६७॥
प्रियङ्गवः कोविदाराः कोरदूषाः सतीनकाः।
माषा मुद्गा मसूराश्च निष्पावाः सकुलत्थकाः ॥६८॥
आढक्यश्चणकाश्चैव गणाः सप्तदश स्मृताः।"
( अग्रे आरण्या यज्ञियाश्चौषधय आख्याताः )।

यदा ताः पुनर्न प्रारोहन्त तदा ब्रह्मा कर्मजां हस्तसिद्धिमाविरभावयत्। ततः प्रभृति कृष्टपच्या ओषधयो जज्ञिरे। एवं वार्तायां सिद्धायां चातुर्वर्ण्यमर्यादा स्थापिताऽभूत्। धर्मानुवर्तिनां तत्तद्वर्णानामाश्रमाणां च ऐन्द्रमारुतप्राजापत्यादीनि स्थानानि ब्रह्मणा नियमितानि। (ततो[१] दण्डनिर्माणं राजप्रजाव्यवस्था च प्रावर्तत। सरीसृपादिभ्यो भयं चापि प्रजासु प्रवृत्तम्)।

इत्येवमेषा युगाख्यायिका मार्कण्डेयेनाभिहिता।

वायुप्रोक्ते ब्रह्माण्डपुराणे द्वितीयेऽनुषङ्गपादे सप्तमाध्याये चाप्येतत्प्रायेणैवमेवोक्तम्। वायुपुराणे चादितोऽष्टमेऽध्याय इत्थमेव सर्वमभिहितम्। अग्रे वायवीयेऽष्टपञ्चाशेऽध्यायेऽपि विस्तरेण युगाख्यानमित्थंप्रायमेव। त्रेतायां त्रयीविद्यालाभः यज्ञादिकर्मप्रवृत्तिश्च बहुधा तत्र तत्राभिहिता। अथास्य विस्तृतमभिप्रायं तत्र स्वाभिप्रायमाधुनिकाद्विकासवादादत्र विशेषं च समयान्तरे पाठकेभ्य उपहरिष्यामः।

[ महामहोपाध्याय श्री पं० गिरिधरशर्मचतुर्वेदस्य।

---

१ "वर्णधर्मैश्च जीवन्त्यो व्यरुद्ध्यन्त परस्परम्। ब्रह्मा बुद्ध्वा तु तत्सर्वं याथातथ्येन स प्रभुः। क्षत्रियाणां बलं दण्डं युद्धमाजीव्यमादिशत्।" इत्यादि ब्रह्माण्डे वायौ च।

( ३१ )

# वाराणसीवैभवम्

सकलभुवनललामभूतेयं समस्तपुण्यपुरीसम्राज्ञी वाराणसी, न केवलं भूतल एव, अपि तु लोकत्रयेऽपि, पवित्रतातिरेकसम्पादिकेतिप्रथितकीर्तिः, भगवतो नवचन्द्रमौलेस्त्रिशूलोपरि विराजमाना, मुक्तिप्रदायिनीति प्रथितयशोऽवदाना, सकलतीर्थानामेकमायतनम्, विद्याश्रियोर्मातृसदनम्, भवनं वैभवस्य, आस्पदं साधुतायाः, कुलभवनं तपस्यायाः, आकरो ज्ञानस्य, निधानं वैचित्र्यस्य कस्य वा न विदिता सचेतसः।

( १ )

अस्या महिमानमुपवर्णयन्तो न विरमन्ति परमपूरुषनिःश्वसितात्मका अबाधिता अक्षयाश्चत्वारो वेदाः पुराणानि सेतिहासानि च।

इयमेव हि पुरा कृतयुगे राजर्षेर्दिवोदासस्य राजधानीत्वमासेदुषी सौभाग्यसम्पत्समृद्धिभिर्दिवौकसामपि स्पृहणीया बभूव। अथानेकप्रकारैः कपटैः कूटनीतिपाटवैश्च निर्वासिते ऋजुस्वभावे भूपतौ दिवोदासे देवगणैः सम्भूय समभ्यर्थितो भगवान् महादेवो विश्वनाथस्त्रिलोकीकल्याणकामनां चेतसाकलयन् विहाय कैलासमस्यामेव वसतिं चक्रे। प्रार्थनापूर्तिमुदितान्तरा निर्जरा अपि परमोत्सवपुरःसरं मुक्तिसाम्राज्यसिंहासने भगवन्तं विश्वनाथ-

मभिषिच्य साम्राज्यसुव्यवस्थासम्पादनाय कालभैरवदुण्ढिदण्डपाणिप्रभृतीन् नियोजयामासुः। आदिकेशवकेदारादिखण्डानि साम्राज्यान्तर्गतस्वायत्तशासनानि पृथगवतस्थिरे।

मुमुक्षुभ्यो मुक्तहस्तं पायसान्नं वितरन्ती मूर्तिमती माङ्गल्यदेवता शैलाधिराजदुहिता श्रीविश्वनाथदयिता भगवत्यन्नपूर्णाऽपि साकं स्वपरिवारेणात्रैव समागत्य मुक्तिसाम्राज्यसम्राज्ञीपदं समलंचकार। सर्वे देवाः सवाहनाः सायुधाः समागत्य स्वस्वाधिकारानुरूपां भगवतो विश्वनाथस्य सेवां विदधाना विस्मृतस्वर्गा अत्रैव वसतिं चक्रिरे।

भगवान् विश्वनाथोऽपि विनश्वरतनूमूल्येन सर्वोपायदुरवापामपि मुक्तिमाकीटमापामरं समानभावेन विक्रीणानः कति कति वा न सुकृतिनो मुक्तिभाजो विदधे।

अत्र हि केवलं शरीरपात एव मुक्तिलाभाय प्रभवति। इयं च भगवतो विश्वनाथस्यानन्दकाननमिति व्यवह्रियमाणा सत्यमेवानन्दकाननं संलक्ष्यते।

भगवती जह्नुतनयापि पापिनः समुद्धर्तुकामा गङ्गाधरस्य कपर्दबन्धान्निष्क्रम्य विश्वेशितू राजधान्या अस्या वाराणस्याः पादमूलं क्षालयन्ती सुधासमधिकस्वादुना स्वपाथःप्रवाहेण तृषार्तानां परमां तृप्तिमातन्वती समुद्धरन्ती पातकिनः प्रौढेव विगतचापल्या शान्तात्मनाऽत्र प्रवहति।

सत्यमूर्तिर्महाराजहरिश्चन्द्रोऽपि गाधिनन्दनेन राज्यमपहृत्य निर्वासितः सन् चाण्डालराजे आत्मानं विक्रीय तदनुचरीभवन्नत्रैव केदारखण्डे भागीरथीतटे प्रभोरर्थे प्रेतवस्त्राणि सञ्चिन्वन्नराजत। तेन प्रतिष्ठापितो हरिश्चन्द्रेश्वरोऽद्यापि जनैः सभक्त्युन्मेषमवलोक्यते।

अष्टादशपुराणानां निर्मातापि कृष्णद्वैपायनो व्यासो ढुण्डिगणपतेः कपटबटुवेषपाटवेन प्रतारितः सन्नितो निर्वासितो भूत्वा गङ्गायाः परतीरे मगधेषु वासं कल्पितवान्। केवलं कृष्णचतुर्दश्यां भगवन्तं विश्वनाथं द्रष्टुमनुमतस्तावतैवात्मानं धन्यं मन्यते।

अत्रैव भगवतो विष्णोरंशभूतेन भगवता धन्वन्तरिणापि आयुर्वेदविद्यासम्प्रदायः प्रवर्तितः। वृद्धकालेश्वरनिकटे 'धन्वन्तरिकूपः' इति प्रसिद्धः सकलामयोपसर्गदूरीकरणपटुरद्यापि स कूपो भक्तिमद्भिर्जनैः सादरमवलोक्यते निषेव्यते च। यत्प्रभावेण सर्वे रोगाः सहसैव दूरमपसरन्तीति विश्वसन्ति परमास्तिकाः सज्जनाः।

मुक्ताभियुक्तजनतापरिभूषितायामस्यामेव वाराणस्यां भगवतो नवजलधरद्युतेर्विष्णोस्तल्पसङ्कल्पसम्पादनसमर्पितवपुषो नागराजस्य शेषस्यावतारभूतो भगवान् पतञ्जलिराविर्भूय महाभाष्यं प्रणिनाय। तदावासभूते नागकूपेऽद्यापि श्रद्धालवो जनाः शब्दशास्त्रनैपुण्यकामनया स्नान्ति जपन्ति पूजयन्ति च। श्रावणशुक्ले नागपञ्चम्यां

प्रतिवर्षं पण्डितानां विद्यार्थिनां च शास्त्रार्थकोलाहलः कामपि कमनीयां कोटिं प्रकटयति।

( २ )

अष्टमे शतके लब्धजन्मना काश्मीरकेण कविपुङ्गवेन दामोदरगुप्तेन स्वकीये कुट्टिनीमत इयमेव काशी सविशेषं वर्णिता वर्तते।

बौद्धसाहित्येऽपि जातकेषु प्रायो वाराणसीतिनाम्नास्या एव काशिकायाः सौभाग्यसम्पत्समृद्धिः सातिशयं वर्णिता दृश्यते। काश्या निकट एव सम्प्रति 'सारनाथ' इतिनाम्ना प्रसिद्धं स्थानं बौद्धकाले 'मिगदाव' इतिनाम्ना प्रसिद्धमासीत्। यच्च जातकानुसारेण मृगरूपेणावतीर्णस्य भगवतो बुद्धस्य निवासस्थानमिति पवित्रतीर्थात्मना बौद्धैरद्यापि सम्मान्यते। तत्रैव तदनु सम्राजाशोकेन निखातः स्तम्भोऽद्यापि समतीतसार्द्धद्विसहस्रसंवत्सरमैतिह्यमितिहासरसिकानां पुरः समुपस्थापयति। इदमेव हि लोकोत्तरत्वमस्याः काशिकाया यदसौ सनातनधर्मस्य मातृगृहभूतापि बौद्धजैनादिधर्माणामपि प्रसारलीलाभूमिर्बभूव। इदमेव हि धर्मचक्रप्रवर्त्तनस्थानं बौद्धानाम्। प्रसिद्धानेकतीर्थङ्करलीलाभूमिश्च जैनानाम्। बौद्धयुगे च गङ्गायां नौकाद्वारा व्यापारस्य केन्द्रभूतमिदं नगरमासीत्। जातकेषु अत्रत्या धनिनो महाजनाः 'सेट्ठि' नाम्ना व्यपदिष्टाः सन्ति। तदानीं काशिकं वस्त्रं द्वीपान्तरेष्वपि रत्नमिव परिगण्यते स्म।

अथ बौद्धप्रभावादस्तमितप्रायं सनातनधर्ममुद्दिधीर्षुः शङ्करावतारो भगवान् शङ्कराचार्योऽपि केरलेषु लब्धजन्मा काश्यामुपगतो चाण्डालवपुर्धारिणा भगवता व्यासेन स्पृष्टः सन्नात्मानमशुचिं मन्वानो तेन परिबोधित एव तत्त्वज्ञानमवाप्तवान्। अन्वभूच्च सपदि ज्ञानोत्पादनमाहात्म्यं काशिकायाः।

एवमेवान्येऽप्याचार्याः सम्प्रदायप्रवर्त्तकाः काशीनिवासमहिम्ना लब्धपरिशुद्धावबोधा एव जनानुपदेष्टुं मोक्षमार्गे प्रवर्त्तयितुञ्च प्राभवन्। वैष्णवेषु श्रीवल्लभाचार्यस्य काश्यां सुचिरं निवास आसीदिति तु शतशः प्रमाणजातैरपरोक्षमेव प्रेक्षावताम्। वङ्गीयवैष्णवसम्प्रदायप्रवर्त्तकः श्रीमान् चैतन्यदेवोऽपि काश्यां निवसन्नेव सनातनमुपदिदेश। अत्रत्यः प्रसिद्धः संन्यासी प्रकाशानन्दोऽपि तेनानुगृहीतस्तस्य शिष्यो भूत्वा प्रबोधानन्दनाम्ना प्रसिद्धमुपाजगाम।

( ३ .)

काशिकापतेर्भगवतो विश्वनाथस्य मन्दिरमधिकृत्य कापि चित्तमुद्वेजयन्ती कथा प्रथिता वर्त्तते। प्राचीनेतिहासेषु काश्या अविमुक्तक्षेत्रमिति, काशीपतेरविमुक्तेश्वर इति च नाम प्रायः सर्वत्रैव समुपलभ्यते। 'काशी', 'विश्वेश्वर' इति नामनी तु नातितमां प्राचीने इत्यपि शक्यं वक्तुम्। 'कालापहाड' इतिनाम्ना प्रसिद्धेन यवनराजसेनापतिना सर्वादौ श्रीविश्वनाथमन्दिरं निपातितमासीत्। ततः परम् आस्तिका मणिकर्णिकातीर्थ एव श्रीविश्वनाथं

भावयन्तः पूजयन्तः कथमपि चेतांसि समादधिरे। वैक्रमपञ्च-दशशतके प्रादुर्भूतेन भट्टनारायणेन स्वप्रभावचमत्कृतटोडरमल्ल-महीपालद्वारा अकबराख्ययवनसम्राजोऽनुग्रहमासाद्य लक्षसुवर्णमुद्रा-व्ययेन रमणीयतममभ्रंलिहशिखरं नवं मन्दिरं निर्माय पुनः प्रतिष्ठा-पितो विश्वनाथः काशिकायाम्। ततः परमकबरप्रपौत्रेण मूर्तिम-तेव हिन्दूनां दुर्भागधेयेन औरङ्गज़ेबनाम्ना तात्कालिकेन यवन-सम्राजा स्वकीयेन सुयशसा सहैव तन्मन्दिरं पुनर्निपातितम्। अथ पेशवाख्यस्य दाक्षिणात्यब्राह्मणराजस्य सौभाग्यवृद्धये काश्यां तप-श्चरणमनुतिष्ठता तपोमूर्तिना सिद्धिसमृद्धेन पाटणकरनारायण-दीक्षितेन स्वप्ने भगवदादेशमासाद्य पुनः प्रतिष्ठापितो भगवान् विश्वनाथः। मन्दिरं च जगत्प्रसिद्धदातृतामहिम्ना साध्वीकुलल-लामभूतया 'अहिल्याबाई' इतिप्रसिद्धया 'इन्दोर' महाराज्ञ्या निर्मा-पितम्। सौवर्णशिखरं च सूरशिरोमणिना रणजीतसिंहेन संघ-टितम्। तदेवेदं मन्दिरम्, स एव च भगवान् विश्वनाथः परमा-स्तिकानां संकल्पकल्पनाय कल्पतरुरिव विराजमानोऽद्यापि हिन्दूनां गौरवमक्षुण्णमिव रक्षति।

( ४ )

प्रायः सर्वेष्वेव शास्त्रेषु तत्तच्छास्त्रीयनिबन्धनिर्मातारः प्रधानपण्डिता अपि स्वस्वनिवासेनेमां काशिकां समलंचक्रिरे। तत्र व्याकरणे पतञ्जलिरत्रैव नागकूपे निवसन् महाभाष्यं प्रणिनायेति किंवदन्ती जागर्ति। काशिकाकारौ वामनजया-

दित्यावपि कञ्चित्कालं काशीमेवालंकुरुतः स्म। अर्वाचीनेषु प्रक्रियाकौमुदीकारो रामचन्द्राचार्यः, सर्वतन्त्रस्वतन्त्रो महावैयाकरणोऽनेकप्रबन्धनिर्माता श्रीशेषकृष्णः, सिद्धान्तकौमुद्यादिनिर्माता श्रीभट्टोजिदीक्षितः नागेशभट्टश्च काशिका एवासन्। ततः परं तच्छिष्यानुक्रमे पायगुण्डेबालभट्टस्तच्छिष्यः शम्भुदेवो गाडगीळोपनामको जनार्दनः काशीनाथशास्त्री राजारामशास्त्री बालसरस्वतीतिप्रथितो बालशास्त्री च सर्वेऽप्यमी दाक्षिणात्या अपि काशिकाशिशव एव प्रथिता अभूवन्। श्रीबालशास्त्रिशिष्येषु प्रसिद्धयशोगौरवा महामहोपाध्यायादिपदाङ्किता राजप्रजोभयसमुपार्जितसम्मानाः श्रीईगङ्गाधरशास्त्रि, दामोदरशास्त्रि, शिवकुमारशास्त्रि, तात्याशास्त्रिणोऽपि तथाविधा एव समभूवन्। तच्छिष्यपरम्परास्वेव सम्प्रत्यपि महामहोपाध्यायश्रीनित्यानन्दपन्तपर्वतीय[1]प्रभृतयो महावैयाकरणा विराजन्ते। साहित्यदर्शनादिशास्त्रेषु नव्यप्राच्यन्याययोश्च प्रौढप्रगाढपाण्डित्याः श्रीमद्गोस्वामिदामोदरशास्त्रिणोऽपि तादृशा एव।

वेदान्तेऽपि, शङ्करभगवत्पादानन्तरं तच्छिष्याः पद्मपादाचार्याः काशिका एवासन्। ततः परं मध्ययुगे मधुसूदनसरस्वतीस्वामिनोऽपि वङ्गीया अपि चरमे वयसि काश्यामेव न्यवसन्। नृसिंहाश्रमस्वामिनोऽपि काशिका एव। स्वयंप्रकाशयतयः, काष्ठजिह्व-

१ स्वर्गं गतोऽसौ महाभागः १९८८ वैक्रमाब्दे।

स्वामिनः, पूर्णाश्रमास्तारकाश्रमाश्च सर्वेऽप्यमी वेदान्तदान्ताशया यतिपुङ्गवाः काशिका एवासन्।

न्यायेऽपि, भवानन्दसिद्धान्तवागीशाः, महादेवदिनकरभारद्वाजौ, कृष्णभट्टो, विद्यानिवासभट्टाचार्यौ, विश्वनाथपञ्चाननः, पुण्यस्तम्भकरमहादेवो, गङ्गारामजडी च वैदेशिका अपि काश्यां चिरमवात्सुः। महामहोपाध्यायकैलासचन्द्रशिरोमणिभट्टाचार्यश्च काशीमेव चिरं निषेव्य विससर्ज तत्रैव वपुः। तच्छिष्येषु प्रमुखो महामहोपाध्यायश्रीवामाचरणभट्टाचार्यो[1]ऽद्यापि काशिकराजकीयपाठशालायां मुख्याध्यापकपदे विराजमानस्तपस्विनीं न्यायविद्यां संरक्षति।

धर्मशास्त्रेऽपि भट्टभट्टवंश्येषु प्रथमगण्याः श्रीनारायणभट्टाः, शङ्करभट्टः, कमलाकरभट्टो, नीलकण्ठभट्टो, दिनकरभट्टश्च; धर्माधिकारिवंश्येषु प्रख्यातकीर्तयो नन्दपण्डिताः, शेषवंश्येषु शेषश्रीकृष्णाश्च प्रसिद्धा एव ग्रन्थकर्त्तारः समभवन्।

सांख्येऽपि विज्ञानभिक्षवो, भावेगणेशदीक्षिताः। मीमांसायामपि खण्डदेवाः, कविमण्डनशम्भुभट्टाः, भट्टवंश्याश्च। पुराणे नीलकण्ठचतुर्धराः। ज्यौतिषे कमलाकररङ्गनाथमुनीश्वरा नीलकण्ठदैवज्ञप्रभृतयश्च। ततः परं ज्योतिर्विद्यावताराः श्रीमन्महामहोपाध्याय-

---

१ दिवं गतोऽसौ महाशयः १९८८ तमे वैक्रमाब्दे।

सि० आई० ई० इत्यादिपदवीविभूषिताः श्रीमद्बापूदेवशास्त्रि स्तच्छिष्याः महामहोपाध्यायश्रीसुधाकरद्विवेदिनश्चन्द्रदेवशर्मा स्वधर्मधुरन्धरा ज्योतिःशास्त्रपारदृश्वानो वेतालविनायकशास्त्रि घाटेमहादेवशास्त्रिणोऽन्ये च समभूवन्। तन्त्रे प्रेमनिधिभास्करर यादयः। अलङ्कारे पण्डितराजजगन्नाथप्रभृतयश्च। सर्वेऽप्यय वैदेशिका अपि चिरं काशीमलङ्कुर्वन्तस्तांस्तान् प्रबन्धान् प्रणयन्ति स्म। तेषु बहूनां वंश्या अद्यापि स्वपूर्वजगौरवेण समाजे लब्धपूज पूज्यत्वेन जाग्रति। महानैयायिको मिथिलालङ्कारः शङ्करमिश्रोऽ चरमे वयसि काशीमेव सेवते स्मेति प्रसिद्धमस्ति।

**सिद्धपुरुषविषयेऽपि** काशिकागौरवमसामान्यमेव। अत्र मुक्तिपुर्यां देवदेवं विश्वेशं निषेवितुकामाः प्रायः सर्वेऽपि सिद्ध पुरुषा निवासं भेजिरे। प्रसिद्धो रामभक्तो गोस्वामितुलसीदासोऽ काशिक एवासीत्, अत्रैव च विससर्ज पार्थिवं वपुः। परमप्रख्यात यशसः कबीरस्यापि काशिकैव जन्मभूः। लोकोत्तरसिद्धिशाल परमहंसस्तैलङ्गस्वाम्यपि काशिक एव। स्वामी भास्करानन्दोऽ नन्दनः काशिकायाः। महापण्डितो वशीकृतानेकनरपतिर्योगिराज स्वामी विशुद्धानन्दोऽपि वाराणसेय एव।

( ५ )

नास्तिक्यप्रचुरप्रचारविषमेऽपि **वर्तमानसमये** यादृशी धर्मचर्चा, यादृशश्च सदाचारः, यावच्च शास्त्राणां परिशीलनम्, यावन्तश्च धार्मिकाः काश्यामुपलभ्यन्ते न तथान्यत्रेति काशीमाहा-

त्म्यमेवात्र प्रभवति। अत्रत्यो राजकीयः संस्कृतमहाविद्यालयः प्रतिवर्षमसंख्यान् विदुषः परीक्षापाथोधिपरतीरप्रापणेन लब्धप्रतिष्ठान् वितन्वन् सुरभारतीमविरतं निषेवते। अत्रत्या अध्यापका अद्यापि प्राचीनगौरवमक्षुण्णं रक्षन्ति।

काश्याः परभागेऽसीसङ्गमतीर्थोत्तरप्रदेशे श्रीमतामसामान्य-गुणगणानां लोकोपकाराध्वरदीक्षितानां श्रीमन्मदनमोहनमालवीय-महोदयानां कीर्तिराशिरिव मूर्तिमान् हिंदूविश्वविद्यालयो नयन-गोचरीभवति। यत्र सर्वा विद्याः सर्वाः कलाश्च सविशेषं शिक्ष्यन्ते। तत्तद्विषयविशेषज्ञाश्च तं तं विषयं सविशेषमध्या-पयन्ति।

इत्थमेव दानशूरस्य निर्भयताप्रथितकीर्तेः सरलहृदो धनकुबेरस्य श्रीशिवप्रसादगुप्तमहोदयस्यार्थसाहाय्येन संस्थापितं काशीविद्यापीठ-मपि राष्ट्रियशिक्षाप्रचारैकलक्ष्यं सुलक्षणं संलक्ष्यते। तत्र महादार्शनिका देशकार्यकरणप्रसिद्धा गम्भीरताभूमयो डॉ० भगवान्दासमहोदयाः कुलपतिपदे विराजन्ते। तेषामधीनत्वे प्रभूता विद्वांसस्तानि तानि शास्त्राणि सरहस्यं सप्रयोगं चाध्यापयन्ति।

राजमहाराजैः श्रेष्ठिभिश्च व्यक्तिशः संस्थापितानां विद्यालयानां संख्या तु सम्प्रत्येव शतत्रयादुपरि गच्छन्ती कालक्रमेण भवन्तीं तेषामभिवृद्धिं द्योतयति। विद्यार्थिनोऽपि नानादेश्याः समागत्य धनिभी राजमहाराजैः प्रतिष्ठापितेषु सहस्राधिकेष्वन्नसत्रेषु भुञ्जाना धर्मशालासु छात्रावासेषु च विहितवसतयोऽधीयते।

उदरमिव जगन्निवासस्य भगवतो विष्णोः काशिकापि सर्वदेश्य सर्वविधजनतासमावृता काम्प्यनुपमां सुषमां वहति । तत्तत्प्रान्ताभिजनैरत्रत्यैर्जनैः स्वस्ववीथीषु तथा व्यवस्था विरचिता वर्तते यथा दशाश्वमेधप्रान्ते वङ्गीयानां सविशेषं निवासात्स प्रदेशो वङ्गदेश इव लक्ष्यते । एवं हनुमद्घट्टभागे मद्रासप्रान्तीया एव निवसन्तीति स विभागो मद्रासप्रान्त इव । एवं महाराष्ट्रीयाणां मैथिलानां च वसतिप्रदेशो महाराष्ट्रभूर्मिथिला च संलक्ष्यते ।

काशिकायाः पादमूलं क्षालयन्त्या भगवत्या जाह्नव्या अवतारतीर्थेषु पङ्क्तिशोऽवस्थिता अनेकमहीपालसुयशःस्वरूपाः पाषाणनिर्मिताः शताधिका घट्टास्तु सकलभूतलविलक्षणसुषमा अनन्यसामान्या एव । पञ्चगङ्गातीर्थनिकटे औरङ्गजेबनिर्मापितमस्जिदमध्यवर्त्ती समुन्नततमो दूरवीक्षणयूपसौधो[१] ( माधोलाल का धरैरा) बाहुरिव काशिकायाः समाह्वयन्निव धार्मिकान् संलक्ष्यते ।

एवंविधानामसंख्यानामाश्चर्यभूम्नां प्रसवभूरियं वाराणसी केन वा साकल्येन वर्णयितुं शक्येत । सर्वाङ्गेण विशेषविभूषिताया अस्याः प्रत्यङ्गमनेके विशेषाः सविशेषं लक्ष्यन्ते; तेषां सर्वेषां वर्णनं वाक्पथातीतमेव । असाध्यमेव मादृशामल्पमेधसाम् । केवलमत्यन्तं संक्षेपेण सामान्याकारेण सङ्कलितमिदं वाराणसीवैभवमविशेषविदां यदि किञ्चिदुपकुर्यात्तर्हि सफलो मे परिश्रम इति ॥

[ म० म० साहित्याचार्यश्रीनारायणशास्त्रिखिस्तेमहोदयस्य
( १९३० तमे खिस्ताब्दे लिखितोऽयं निबन्धः )

---

१ सौधः प्रासादः ।

( ३२ )

# भगवतो बुद्धस्य चरितमुपदेशश्च

( १ )

अद्यत्वे प्रचरत्सु धार्मिकसमयेषु श्रीशाक्यसिंहप्रवर्तितस्य सद्धर्मचक्रस्य कालमहिम्ना मन्दीभूतवेगतयापचीयमानप्रभावस्यापि बहुमतत्वाद्वा सिद्धान्तवैशिष्ट्याद्वा सर्वोत्तरं गौरवमवलोक्यते। तस्यास्यैव परमप्रसिद्धधर्मस्य प्रवर्तकस्य महापुरुषस्य चरितमुपदेशं चोद्दिश्य किञ्चिदत्र संक्षेपेण निगद्यते।

धर्मस्यास्य प्रवर्त्तको गौतमाख्यः कश्चित् क्षत्रियकुमार आसीत्। स राजकुल उत्पद्य संसाराद् विरज्यमान उग्रं तपश्चरन् सम्यक्सम्बोधिमधिगतवान्। मनुष्योऽपि स तपःप्रभावेण प्राप्तदेवभाव उत महान् देव एव जगदुद्धारसंकल्पेन विहितावतारो मानुषीं तनुमाश्रित इति विप्रतिपन्नम्।

एवं श्रूयते किल सुमेधा नाम कश्चिद् ब्राह्मणो वेदपारगो दीपङ्करबुद्धकाले वर्त्तमान आसीत्। संसारे चिरं संसरन् दुःखान्तं गवेषमाणः स दानादिकमनुतिष्ठन् शीलनैष्क्रम्यप्रज्ञादीन् पूरयामास। सर्वाः पारमिताः साक्षात्कृत्य पूर्णत्वमासादितवान्। मरणोत्तरं स तुषिताख्ये देवावासे देवराड्रूपेण दिव्यदेहमास्थायाविरभूत्। तत्र दीर्घकालं स्वीयपुण्यसंचारसमुचितां महीयसीं सम्पदं भुञ्जानो देवैः सम्प्रार्थितः सन्नात्मनः सम्बोधिकालः

समागत इत्युपलभ्य स्वेच्छया स्वावतरणायोग्यं कालदेशादिकं निर्णीय भारते वर्षे कपिलवस्तुनगरे शाक्यवंशे राज्ञः शुद्धोदनस्य महिष्या मायादेव्याः कुक्षावागत्य तस्यै श्वेतहस्तिरूपेण स्वत्मानं स्वप्ने प्रदर्शयन् यथाकालं वैशाखमासस्य पूर्णिमातिथौ लुम्बिनीवने शालतरुमूले भूमिष्ठो बभूव। यस्मिन् देशे यस्मिन् काले च धर्मस्य ग्लानिर्भवति तत्र तदैव जगत्संरक्षिणी महती शक्तिराविर्भूय विप्लुतं धर्मं पुनः संस्थापयति। तथा च तुषितस्वर्गे तदधिपति-रूपमाश्रित्य यो देवराट् शुद्धभोगान् नित्यमुपभुञ्जानो विराजते स एव साक्षाद्वा, निर्माणकायं निर्माय तदधिष्ठानेन वा, कामलोके कामहतसत्त्वानामचक्षुष्काणां मार्गप्रदर्शनार्थमात्मानं प्रकटयति। नात्र किमपि चित्रम्।

आबाल्यं लालितो भोगसुखेन विलासोपकरणैश्च परिवृतोऽपि स क्षत्रियोचितशस्त्रादिचर्चायां विविधविद्यासु चतुःषष्टिकलासु च परं नैपुण्यमलभत। षोडशवर्षदेशीय एव स दारपरिग्रहं विदध इति स्मर्यते। तस्य लोकोत्तरा वैचित्र्यशालिनी शक्तिः सर्वत्र शैशवादेव प्रकटिताभूत्। कदाचित् प्रवृत्ते मधुमासवैभवे स उद्यानविहारार्थमवरोधेन साकमुपवनमगच्छत्। तदैव तस्य प्रबोधकालः समागत इति देवास्तस्य पूर्वस्मृतिमुत्पादयितुं बोधि-लाभार्थं महाभिनिष्क्रमणे मतिं जनयितुञ्च जरारोगमृत्युभिराक्रा-न्तान् पुरुषान् तस्मै दर्शयामासुः। तद्दर्शनेन सारथ्युपवर्णितं सत्त्व-मात्रस्य जरादिविकारावश्यंभावपीडनमाकर्ण्य च भृशं तस्य मनः विषण्णमभवत्। तत एव सोऽकृतोद्यानविहारो निर्विण्णहृदयो

व्यरमन्। अनन्तरं दैवानुभावेन पथि शान्तचेतास्तप्तकाञ्चन-सन्निभः समुद्भासितप्रसन्नवक्त्रमण्डलः प्रज्ञायाः करुणायाश्च लोकोत्तरो विग्रह इव कश्चित्तापसस्तस्य दृष्टिगोचरमायातः। दृष्ट्वा च तं तथाविधं ज्ञात्वा च तं निस्तीर्णभवसागरं लङ्घितजरादि-विकारजातं तादृशमेव स्वात्मानमपि विधातुकामः प्रव्रज्यायै मन-श्चक्रे। वीतस्पृहं कुमारमवलोक्य पितुर्मनसि प्रकृत्यैव महती चिन्ता पदमकृत। पुत्रस्य भोगाकाङ्क्षासंजननार्थं निखिलोऽपि पितुर्यत्नो निष्फलो बभूव। वह्निप्रदीप्ते गृहे स्थितिर्यथा दुःशका तथैव संविग्नमनसो गौतमस्य संसारावस्थानमपि प्रत्यभात्। निर्वेदे क्रमेण घनीभूते दृढीभूते च गृहत्यागसंकल्पे कदाचित् स निशीथे, सुप्तेषु पौरजानपदेषु, निःशब्दे च राजकुले, महाभिनि-ष्क्रमणाय प्रतस्थे। सद्योजातस्तनयः, सुरूपा गुणवती भार्या, स्नेहानुबन्धी जनकः, प्रभूतमैश्वर्यं, नवं वयः, कान्तं वपुः— किमपि तस्येप्सिताभिमुखं मनः प्रतीपयितुं तर्पयितुं च नाशकत्।

राजोचितं वस्त्रभूषणादिकं परित्यज्य केशवपनं विधाय धृत-श्रमणवेशो भिक्षां चरन् देशाद् देशान्तरं पर्यटन्नासीत्। अन्तरा-न्तरा मारस्य प्रलोभनमप्यजायत। परन्तु तस्य वज्रसारे चेतसि कथमपि लेशोऽपि विकारस्य नादृश्यत। यस्य शमस्य सम्पत्तये स संसारस्य स्नेहपाशं छित्त्वा, अभुक्तामपि सुविशालां राज्य-श्रियं परित्यज्य, प्रव्रज्यामाश्रितः, न तु स केवलं प्रव्रज्यया समधिगन्तुं शक्यते, अपि तु योगादिसाधनं विविधं दुश्चरं तपोऽपि च तत्रापेक्ष्यते इति विजानानो योगोपदेष्टुर्मार्गोपदर्शन-

समर्थस्य कस्यापि देशिकस्यान्वेषणमकरोत्। तथा कुर्वंश्च कालाय सगोत्रस्याऽऽराडाख्ययोगिनः प्रसिद्धिं योगसमृद्धिं चावगत्य तः गत्वा तदाश्रमे कियत्कालमवसत्। तदनुज्ञया च तत्र ध्यानादि विहारेषु तत्प्रदर्शितदिशा चिरं चित्तं दधे। गुरोः सामर्थ्येन स्वस्य च महनीयेन संरम्भेण चत्वारि रूपध्यानान्युपलभ्य ततो निवृत्तोऽरूपभूमौ तृतीयायामाकिञ्चन्याख्यायां यथावत् प्रकर्षमगच्छत्। एतादृशध्याने निष्णातः क्षेत्रज्ञो देहं विसृज्य विमुच्यत इति श्रुत्वापि तत्र तस्य हार्दिको रागो नाजायत। तस्मादपि ध्यानात् चित्तं व्युत्तिष्ठतीति संदृश्य तदपि चित्तस्य प्रशमनाय नालमिति मत्वा च तदुत्तरभूमेर्जयार्थं गुर्वन्तरं रामपुत्रं रुद्रकाह्वयमगच्छत्। तत्रापि तदनुग्रहेण "नैवसंज्ञानासंज्ञि" भूमिपर्यन्तमेव तस्य साक्षात्कारो जातः। जातेऽपि तादृशे साक्षात्कारे पूर्ववत् चित्तस्यैकान्तिकीं निवृत्तिमपश्यन् तदाश्रयं विहाय उरुबिल्वायां गत्वा निरञ्जनातीरे शुचौ प्रदेशे कस्यचिदश्वत्थवृक्षस्य मूले पूर्णबोधिलाभार्थं नानाप्रकारैरुपवासादिकृच्छ्रविधिभिरात्मनः कार्श्यं सम्पादयन् विहितासनबन्धो दुष्कराणि तपांसि समारेभे। षड् वर्षाणि मारेण युद्ध्यन् पारमिताविश्वासबलेन तं पराभूय परमां सिद्धिमवाप।

तथा हि ध्यानरतस्य तस्य रात्रेः प्रथमे यामे प्राक्तनीनां जातीनां तदुद्भवसंस्काराणां चानुभवपर्यन्तमनुस्मरणमजायत। संजातप्राक्स्मृतिः स आत्मनः पूर्वावस्थापरम्परामस्मरत्, भूतामपि तां संनिकृष्टामिव साक्षादकरोच्च। आदिसर्गमारभ्य

लिङ्गमेकमेव वासनाभेदैरधिवासितं भोगार्थं कं कं नाम देहं नाश्रितवत्? अनियताकारमपि तत् प्रारब्धकर्मणामुपभोगार्थमुपादीयमानदेहानुरोधेन कं कमाकारं नासादितवत्? संस्कारसाक्षात्करणेन पूर्वस्मृतीनामुदये तस्यानुभूतपूर्वभोगानां तत्संपृक्तविषयभुवनव्यवहारादीनां च सर्वेषामपि समुल्लेखः स्फुटमेव हृद्युपाजायत। संनिहितमृत्योर्जनस्यातिक्रम्यमाणजीवनस्येव संजातबोधाभासस्य सुस्मूर्षोस्तस्य निखिलानामेव जन्मनां स्मरणमभूत्। आसन्नचेतनस्य निमेषायुषः कीटस्य दशामिव कल्पान्तस्थायिनां देवानामपि दशामजानात्। तथा जानन् जगति दुःखानामेवोत्कर्षमपश्यत्। आनन्दभूयिष्ठेऽपि जन्मनि दुःखसत्तामवेत्।

अथ द्वितीये यामे दिव्यं चक्षुरुदपद्यत येन निखिललोकस्य दर्पणप्रतिबिम्बितनगरस्येव स्फुटं दर्शनमभूत्। षाट्कौशिकादिदेहेन तादात्म्यबुद्ध्या वस्तुतस्तद्विविक्तोऽपि व्यवहारेण तदवच्छिन्नरूपस्तदाश्रितेन्द्रियग्रामैर्विषयेषु प्रचरन् जीवो निबिडमोहपाशबद्धः समन्ताद् दृष्टिं प्रसारयितुं न शक्नोति। महाविदेहां धारणां शीलयतो मनसः कर्मनिमित्तां देहप्रतिष्ठां शिथिलीकृत्य तस्य विशुद्धिं स्वेच्छया वहिःसंचारं च सम्पादयतः समुद्भूतप्रज्ञाबलस्य गुरुकटाक्षक्षपितमलस्य किमिव न दृष्टिपथमृच्छति? व्योम्नि नक्षत्रपङ्क्तिरिव, अलाबुलतायां तत्फलानीव, सावित्ररश्मौ त्रसरेणव इव, अनादिनिधनायां भगवच्छक्तौ प्रकृत्यावरणे कोटिशो ब्रह्माण्डानि, प्रतिब्रह्माण्डं च कोटिशो लोकाः प्रतिभा-

सन्ते। ते सर्वे एव भोगाधिकरणरूपा उच्चावचभोगसाधनै-र्विषयैः पूर्णाः। भोगाश्च सुखप्राया अपि नैकान्तेन दुःखाविनाकृता इति दुःखरूपा एव। एवं भोगस्य देशविस्तारं पश्यन्, कालविस्तारं भोक्तृभेदेन भेदमप्यपश्यत्। जाते च तथाविधे दर्शने सत्त्वानां जन्ममृत्युदर्शनात् प्रागुद्भूतं कारुण्यं भूयोऽपि वर्धितमभूत्।

तृतीये यामे च तस्य चेतसि प्रतीत्यसमुत्पादस्य निगूढं रहस्य-मुन्मिषितमभूत्।

एवं स बोधिद्रुममूले जगतां दुःखस्कन्धस्य मूलभूतामविद्यां भित्त्वा सर्वाः प्रतिसंविदः सम्प्राप्य बोधिपाक्षिकान् धर्मानुपलभ्य च क्षीणास्रवः सर्वज्ञत्वं बुद्धत्वं चाधिगतवान्।

बहुविधा लोकोत्तराः सिद्धयस्तेन लब्धाः—षडभिज्ञाः, दश-बलानि, तपस्यायाः फलभूतं सर्वमेव तस्य करायत्तमभूत्। परन्तु ऋद्धिजातैर्दुःखानामात्यन्तिक उच्छेदो न संभाव्यते, इति जातास्वपि योगविभूतिषु तस्य मनस्तत्र लग्नं नाभूत्। येन दुःखमेकान्तेन न निवर्तेत, किं तेन स कुर्यात्। धावन्तं पुरुषं स्वदेहच्छायावत् तपःसमाधिसम्पन्नं विद्वांसं सर्वाः समृद्धयो-ऽनुगच्छन्ति। सर्वसत्त्वानां सर्वविधदुःखापगमे यः कृतोत्साहो भोगसुखानि तस्य स्थिरनिश्चयं मनः कथं चालयितुं प्रभवेयुः।

( २ )

बोधिसम्पत्तेरनन्तरं स्वात्मानं कृतार्थं मन्यमानः, तत्त्वस्य गहनत्वं

दुर्विगाहत्वं च विचार्य स्वकीयमुपदेष्टृद्वयमेव स्वोपलब्धविद्याविभव-समर्पणस्य पात्रभूतममन्यत। परन्तूभयोरेव तयोस्तदानीं कालवशंगतत्वात् स वाराणसीमेव सद्धर्मप्रचारणाय समागच्छत्। सद्विद्यानां क्षेत्रभूतं, धर्मप्रस्थानानां विलासनिकेतनं, तपस्विनां विदुषां योगिनां च सिद्धपीठरूपं, भूमिष्ठमपि भूमिमस्पृशज्ज्योतिर्मयम-विमुक्तनगरं सम्यक्सम्बुद्धस्य धर्मचक्रप्रवर्त्तनस्थानमभूत्।

तत्रैव तेन चत्वार्यार्यसत्यानि दिष्टानि। दुःखमस्तीति प्रथमार्यसत्यम्, तस्य हेतुरस्तीति द्वितीयम्, दुःखनिरोधो निर्वाणाख्यः संभवतीति तृतीयम्, तदुपायभूतोऽष्टाङ्गयोगोऽप्यस्तीति तुरीयम्।

तत्र प्रथमार्यसत्यस्य विषये न कापि विचिकित्सा सम्भवत्येव। विचित्रकर्मवशेन भोगवैचित्र्यजुषां तत्तद्भोगौपयिकसंघातवतां तत्तद्भुवनवासिनां जीवानां संसरणभूमिरियं दुःखेन कवलीकृतेति न कस्यापि चक्षुष्मतोऽविदितचरम्। बुभुक्षूणामिन्द्रियलोलानामनवस्थिते चेतसि संसारस्यासारता क्षणभङ्गुरता हेयता वा नोदीयमानापि मुमुक्षोर्वैराग्यवतः परमार्थमभीप्सतो बाह्यार्थैरमितैश्वर्यमयैरतृप्यतो हृदये नितरां जागर्त्ति। स चोदयोऽचिरस्थोपि भावान्तरैर्न पराभूयते, क्षणप्रभेव मेघाच्छन्ननभोलीनैर्दर्शनिशीथतमोभिः। नानाविधसुखदुःखसंकुलः संसारोऽयं सूक्ष्मेक्षिकया दृश्यमानः परिणामतापसंस्कारदुःखैरन्वितत्वाद् विवेकिभिर्दुःखमयत्वेनैव विभाव्यते। विवेकपराङ्मुखो भोगलोलुपचित्तस्तु

विषयेभ्योऽनुपरममाणो दुःखानुषक्तसुखेष्वपि कामबुद्धया प्रवर्त्तमानो दुःखनिवृत्तिमविन्दन् दीर्घसंसारकान्तारेष्वनिशं भ्रमन् योनेर्योन्यन्तरं पर्यटति, दुःखमेव च निरन्तरं लभते।

अस्य पुनर्जगद्व्यापिदुःखस्कन्धस्य मूलमविद्या। तत एव संस्कारादिक्रमेण दुःखसमुदयो भवति। तद् यथा—सर्वं दुःखं जातिनिबन्धनम्। जातिश्च देहोपलम्भः। तस्यां सत्यां जरा वा रोगो वा मरणं वा सर्वमेव दुःखकारणं सम्भवति। तन्निरोधे च दुःखोत्पादस्य मूलमेव च्छिद्यते। मरणेन देहनिवृत्त्या दुःखविगमो न सम्भवति; देहारम्भकसंस्कारादिसत्त्वात् पुनरपि तस्य परिग्रहो भवत्येव। देवदेहो वा भवतु, तिर्यग्देहो वा, सर्वत्रैव पुनर्दुःखानुबन्धः संलक्ष्यते। जन्मनः कारणं भवः, स खलु उपादानात्सञ्जायते। यद् बाह्यं वस्तु उप समीपे आदत्ते तदुपादानम्। उपादानस्यासम्भवे भवोदयासम्भवात् जातिरपि न सम्भवति। उपादानस्य निमित्तभूता तृष्णा; यावत्सा न शाम्यति तावत् संतोषाभावाद् बाह्यपरिग्रहाकाङ्क्षा तिष्ठत्येव। तृष्णायाः कारणं वेदनाख्या विषयानुभूतिः, वेदनायाश्च कारणमिन्द्रियार्थसन्निकर्षः स्पर्शः। स्पर्शः षडायतनादुत्पद्यते। षडायतनं नाम ज्ञानेन्द्रियपञ्चकं मनश्चेति षड्वर्गः। षडायतनं नामरूपाभ्यां समुत्पद्यते। तत्र नाम संज्ञासंस्कारविज्ञानानां संघातः। नामरूपे एकीभूय पञ्चस्कन्धं घटयतः। नामरूपयोर्निमित्तं विज्ञानम्। विज्ञानस्य हेतुः संस्काराः। संस्काराश्च सर्व एव अविद्यामूलकाः। अविद्यायाः पुनर्मूलं न किमपि दृश्यते। सैव सर्वानर्थनिदानमिति

तस्या उन्मूलनमेव पुरुषार्थस्वरूपम्। तच्चाष्टाङ्गयोगमार्गपरिशीलनलब्धप्रज्ञया साध्यते। **एतानि द्वादश निदानानि सौगतानां ग्रन्थेषूपलभ्यन्ते। समुच्चयेन प्रतीत्यसमुत्पादोऽयमेव।**

तदिदमनिशमावर्त्तमानं दुःखचक्रं कदापि निवृत्तं भवितुमर्हति नवेति शङ्कायां सम्भवत्येव तन्निरोध इति तत्प्रशमस्वरूपाविष्करणरूपं तृतीयं सत्यम्। अयमेव दुःखनिरोधः प्रथानभेदेन मोक्षनिर्वाणापवर्गामृतनिःश्रेयसादिपदैर्व्यपदिश्यते। यदिदं जगदाडम्बरं परिदृश्यते, तच्चाविद्याया एव विजृम्भितमिति प्रागेवोक्तम्। अविद्यानिरोधेन दुःखपर्यन्तस्य तत्कार्यचक्रस्यापि निरोधे सति जगदभावे यदवशिष्यते तदमृतं निर्वाणमिति कथ्यते। तदेव च शून्यपदभाक्। नहि निर्वाणं वस्तुतोऽभावरूपमिति विज्ञेयम्। न वा व्यावहारिकभाववदपि; तादृशभावानां प्रज्ञोदयेऽसत्त्वात्। निर्वाणम् "असंस्कृत" धातुत्वात् शाश्वतं शिवं द्वन्द्वातीतं प्रपञ्चोपशमरूपं परमं सुखम्।

निर्वाणममृतपदम्। तदस्ति, तत्प्राप्त्युपायश्चाप्यस्ति। कः स उपायः? अष्टाङ्गयोग इति बुद्धदर्शनम्। वस्तुतस्तु ज्ञानेनैवाविद्यानिवृत्तिर्भवति। तस्यां निवृत्तायां क्रमेण संस्कारादिनिवृत्त्या दुःखं निवर्त्तते। ज्ञानसम्पत्तये चाष्टाङ्गयोगमार्ग एव शरणम्। **योगाङ्गानि** तावत्—सम्यग्दृष्टिः, सम्यक्संकल्पः, सम्यग्वाक्, सम्यगाचारः, सम्यगाजीवः, सम्यग्वीर्यम्, सम्यक्स्मृतिः, सम्यक्समाधिश्च।

बहूनां जन्मनामन्ते कस्यचिदेव भाग्यवतः समाधिमनुशीलयतो मनसि प्रज्ञायाः समुदयो भवति। उदितायां तस्यां बन्धनकारका दशविधाः पाशाः संयोजनाभिधाः क्षीयन्ते।

मार्गस्यास्य चतस्र एव भूमयः।

प्रथमा तावत्—स्रोतआपत्तिभूमिः, तामधिगतस्यार्यस्य सत्कायदृष्टिविचिकित्साशीलव्रतपरामर्शरूपं संयोजनत्रयं विनश्यति। स पृथिव्यां वा, कस्मिन्नपि देवावासे वा, कर्मानुगुणफलभोगार्थं जायते। परन्तु मार्गाश्रयादपुनरावृत्तिस्तस्य नियतैव। सप्तसु जन्मसु तन्न्यूनेषु वा निर्वाणमवश्यं भावि।

द्वितीया भूमिः सकृदागामिपदव्यपदेश्या, तामारूढस्य देवलोक उपपद्य पृथिव्यां सकृदेव जन्म भवतीति केषाञ्चिन्मतम्। देवलोके जन्मेत्यपरेषां मतम्। तदेव तस्य चरमं जन्म। तदैव प्रज्ञोत्कर्षान्निर्वाणमधिगम्यते। अस्यां भूमौ 'कामरागः' 'प्रतिघ'-श्चेतिसंयोजनद्वयं निवर्त्तते।

अनागाम्याख्या भूमिस्तृतीया। तस्यां कामरागाभावात् पृथिव्यादौ वा तदन्यस्मिन् कामस्वर्गादौ कामलोके वा पुनरावृत्तिर्न सम्भवति। अनागामी ब्रह्मलोके सकृदेवाविर्भवति। तत्रैव च प्रज्ञाशुद्धिं लब्ध्वा विमुच्यते। स कस्मिन् ब्रह्मलोके जायत इति रागोच्छेदतारतम्यमपेक्ष्य समाधेयम्। यस्य रूपरागो विद्यते स रूपब्रह्मलोके, तदितरस्तु अरूपब्रह्मलोके स्वात्मानमाविर्भावयति। अरूपरागच्छेदेऽरूपब्रह्म-

लोके नोद्भवः सम्भवी। मानौद्धत्याविद्याख्यसंयोजनत्रयस्य निवृत्तेर्बन्धनकारणत्रयस्य रहितत्वात् निर्वाणं भवति। तच्च सत्यपि देहे संजायते। तदेव चार्हत्त्वं जीवन्मुक्त्याख्यम्। देहपातानन्तरं परमं निर्वाणमवशिष्यते, तच्च परमार्थः।

तदाप्रभृति जनपदेषु सर्वत्र परिभ्रमन् स सद्धर्मं प्रचारयामास। केचिद् गृहे निवसन्त उपासका बभूवुः। केचिच्च गृहं त्यक्त्वा भिक्षवः। पुरुषवत् स्त्रियोऽपि तस्य शिष्यमण्डले प्राविशन्। क्रमेण विहारसङ्घारामादि स्थाने स्थाने निर्मितमभूत्। सङ्घस्य परिचालनोपयोगिनो नियमा निबद्धा जाताः। ब्राह्मणा राजानः श्रेष्ठिनो वेश्या अपि त्रिरत्नं—बुद्धं धर्मं सङ्घं च—शरणमुपागच्छन्।*

तदुपदेशमाहात्म्येन बहवोऽर्हद्भावं गताः, बहवश्च स्रोतआपत्त्यादिभूमिषु प्रविष्टाः। केचित्तु मौद्गलायनवद् ऋद्धिमन्तोऽपि संवृत्ताः। बहवस्तस्य विरोधिनोऽपि विरोधं परिहाय तस्य सेवकत्वं गृहीतवन्तः। नात्राविश्वासार्हं किमपि लक्ष्यते। महीयसां महता प्रभावेण सर्वमेव संभाव्यते।†

---

*त्रिशरणं खलु बुद्धस्य तत्प्रवर्तितधर्मस्य तद्धर्मावलम्बिसंघस्य च दैनिकी स्तुतिः—'बुद्धं शरणं गच्छामी'त्यादिरूपा।

† स्थूलदृष्ट्या बौद्धो धर्मः शीलानुष्ठानपर इति शीलमधिकृत्य किंचिदुच्यते। भिक्षुभिर्गृहस्थैश्च **पञ्चशीलमनुष्ठेयम्**। तत्तु प्राणिहिंसाऽदत्तादानव्यभिचारमृषावादमद्यपानविरतिरूपम्। **अष्टशीलं** तु प्रागुक्तं शीलपञ्चकं तेन संयोजितं **नियमत्रयं** च। नियमत्रयं नाम विकालभोज-

इत्थं चत्वारिंशदधिकवर्षकालं धर्ममुपदिशन् जीवानुद्धरन् स कृतकृत्यः पश्चिमे वयसि कुशीनगराख्ये स्थाने देहं मुमोच ॥

[ वाराणसेयराजकीयसंस्कृतविद्यालयभूतपूर्वाध्यक्ष-
महामहोपाध्याय श्रीगोपीनाथकविराजमहोदयस्य

---

( ३३ )

# वेदानां संस्कृतपठनपाठनप्रणाल्यां स्थानम्

## वेदानां महत्त्वम् ।

कस्याविदितं सचेतसो यदस्माकं भारतीयानामार्याणां वाङ्मये निरतिशयेन सर्वोत्कृष्टं हि स्थानं वेदानाम् । न केवलं विभिन्नरूपेण प्रचरत आर्यधर्मस्य मूलस्रोतस्त्वेन उपजीव्यत्वेनैव च तेषामुत्कृष्टत्वम्, किन्तु अन्यान्यदृष्ट्यापि ।

---

नविरतिः, माल्यधारणगन्धद्रव्योपयोगविरतिः, उच्चमहाशयनाभ्यां विरतिश्च । अष्टशीले व्यभिचारविरतिस्थलेऽब्रह्मचर्य्यविरतिर्बोध्या । अष्टशीलेन सह नियमद्वययोजनेन दशशीलं भवति । नृत्यगीतादिविरतिः स्वर्णरजतप्रतिग्रहविरतिश्चेति नियमद्वयम् । दशशीलं भिक्षून् पञ्चशीलं च गृहस्थानुद्दिश्य प्रवृत्तम् । शीलाचरणेन शमो लभ्यते, तदनाचरणेनात्मनो मूलमपि नश्यति । गृहस्थैर्भिक्षुभिश्चानुष्ठेयेषु बहुविधेषु धर्मेषु बुद्धेनोपदिष्टेषु शीलोपदेश एव सर्वसामान्येन प्रधानः ।

भारतीयसंस्कृतेर्भारतीयानां भाषाणाम्–आर्यभाषाणां तदितर-भाषाणाम्–च तात्त्विकदृष्ट्या अध्ययनाय अनुशीलनाय च वेदानां वैदिकभाषायाश्चानुशीलनं नितरामावश्यकम्। अन्यदेशीयभाषा-संस्कृत्याद्यनुशीलनापेक्षयापि तेषामतीवोपयोगित्वमिति तु नात्र प्रकृतमिति न तद्विषये किञ्चित्प्रस्तूयते।

अत एवास्माकं धार्मिकग्रन्थेषु तत्र तत्र शतशः प्रकारैर्वेदानां महत्त्वमुद्घोष्यते।

तथा च भगवान् मनुः—

वेदोऽखिलो धर्ममूलम् ॥२।६॥
सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥१।२१॥
यः कश्चित्कस्यचिद् धर्मो मनुना परिकीर्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥२।७॥
पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्।
अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः ॥१२।९४॥
चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक्।
भूतं भव्यं भविष्यं च सर्वं वेदात्प्रसिध्यति ॥१२।९७॥ इति।

## प्राचीनकाले वेदानां पठनपाठनप्रणाल्यां स्थानम्

तदेवं सर्वतोमुखीं वेदानामत्युपयोगितामाकलय्यैव अस्माकं साक्षात्कृतधर्मभिराचार्यैः प्राचीनकाले पठनपाठनप्रणाल्यां मुख्यत्वेन स्थानं वेदानां निर्धार्यते स्म। तथा च—

तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥२।१६५
वेदमेव सदाभ्यस्येत्तपस्तप्स्यन् द्विजोत्तमः ।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥२।१६६॥
योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥२।१६८॥
शूद्रेण हि समस्तावद् यावद्वेदे न जायते ॥२।१७२॥
षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम् ।
तदर्धिकं पादिकं वा ग्रहणान्तिकमेव वा ॥३।१॥
वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥३।२॥

इत्यादिमानवधर्मशास्त्रोक्तैरन्यैश्चैवंप्रकारैः शतशः प्रमाणैर्न केवल द्विजैस्तेषामध्ययनमेवातीवावश्यकत्वेन प्रतिपाद्यते, किन्तु वेदाध्ययनस्यैव प्राधान्येन द्विजत्वसंपादकत्वमप्याख्यायते ।

कस्यैतदविदितं यत्, वेदानामखिलपुरुषार्थसाधनतया, प्रायः सर्वेषां शास्त्राणामध्ययनाध्यापनस्य वेदाभ्यासो वेदानुशीलनं वेद-रक्षा चैव परमप्रयोजनमिति विभिन्नशास्त्रेष्वेवासकृद् गीयते सप्रयत्नं स्थाप्यते च ।

उदाहरणार्थम्, पातञ्जलमहाभाष्य एव शब्दानुशासनस्य प्रयोजननिर्देशप्रसङ्गे प्रायो वेदनिबन्धनेनैव "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" इति, "तेऽसुराः । दुष्टः शब्दः । यदधीतम् । यस्तु प्रयुङ्क्ते ।

अविद्वांसः। विभक्तिं कुर्वन्ति। यो वा इमाम्। चत्वारि। उत त्वः। सक्तुमिव। सारस्वतीम्। दशम्यां पुत्रस्य। सुदेवो असि वरुण"। इति च प्रयोजनानि प्रतिपादितानि।

निरुक्तेऽपि, "अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते। अर्थमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशः।", "अथापीदमन्तरेण पदविभागो न विद्यते।", "अथापि याज्ञे दैवतेन बहवः प्रदेशा भवन्ति तदेतेनोपेक्षितव्यम्।", "अथ ज्ञानप्रशंसा भवत्यज्ञाननिन्दा च।" इत्युपक्रमैर्वेदाध्ययनमुद्दिश्यैव तत्प्रयोजनान्यभिहितानि।

किं बहुना, अतिगम्भीरस्य वेदस्य साक्षात्परम्परया वा अध्ययनोपकारायैव प्रायेण विभिन्नशास्त्राणि प्रवृत्तानि।

तथा चोक्तं यास्काचार्येण निरुक्ते—

"साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्संप्रादुः। उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च।" इति।

व्याकरणादीनाम् 'अङ्गत्वेन' मीमांसादिशास्त्राणां च 'उपाङ्गत्वेन' सर्वविदितं वर्णनमपि वेदानामपेक्षयैव। अत एव पाणिनीयशिक्षायामुच्यते—

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥

शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥४१।४२

मीमांसादिशास्त्राणामपि वेदार्थज्ञानार्थमुपयोगस्तत्र तत्र स्मर्यते तथा हि—

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥

इत्यादीनि बहूनि प्रमाणानि अत्र विषये ।

वेदाङ्गत्वेन वेदोपाङ्गत्वेन च प्रसिद्धशास्त्राणि विहायापि अक्षुण्णतया वेदसम्प्रदायपरिरक्षणाय समस्तपृथिव्यामन्यधर्मावलम्बिनामश्रुतचरा ये नानाविधा उपाया अस्माकमाचार्यैराविष्कृता प्रचारिताश्च न केषान्ते विस्मयावहाः। पदक्रमजटाद्यष्टविकृतीनां परिकल्पना पदपाठ-बैठ-प्रातिशाख्यादीनां पादादिविषयकविविधानुक्रमणीनां च निर्माणं सर्वमेतद्वेदानां रक्षणार्थमेव। अत एव परःसहस्रेषु वर्षेष्वतीतेष्वपि वैदिकसंहितानां पदशः स्वरशोऽक्षरशश्च सम्प्रदायाविच्छेदो न कानाश्चर्यचकितान्विदधाति ।

असन्तुष्टा इवानेन महतापि प्रयत्नेन त एवाचार्या ब्राह्मणसमाजस्य द्विवेदत्रिवेदचतुर्वेदादिविभागमपि सुतरां वेदानां परिरक्षणार्थमेव चक्रुरिति प्रतीयते ।

तदेतत्सर्वं प्राचीनकाले पठनपाठनप्रणाल्यां वेदानामत्युत्कृष्टमनन्यसाधारणं च स्थानं द्योतयति ।

## आधुनिकी अवस्था

परं कां दशामनुप्रपन्ना वयमद्यत्वेऽस्मिन्विषये । वेदानामध्ययनाध्यापनं विलुप्तप्रायमेवास्माकं दौर्भाग्येण । केचिदेव विरला अङ्गुलिनिर्देश्याः सर्वभावेन वेदाध्ययनपरायणा दृष्टिपथं प्रयान्ति । न चेयमाधुनिकी एव प्रवृत्तिः । चिरकालादेवैतादृग्दुर्दशाग्रस्ता वयम् । वैदिकत्वेन प्रसिद्धान् कांश्चिद् ब्राह्मणान् वर्जयित्वा, केवलं नाममात्रेणैव प्रायेण वैदिकत्वमितरेषामिति प्रतीयते । प्राचीनग्रन्थानुसन्धाननिरतस्य कस्याविदितं यन्नानाशास्त्रज्ञानां पण्डितानां गृहेष्वपि अन्यान्यविषयकप्राचीनहस्तलिखितग्रन्थेषूपलभ्यमानेष्वपि वैदिकग्रन्थानां, विशेषतश्च वैदिकसंहितादिग्रन्थानां, प्रायोऽभाव एव दृश्यते । सर्वमेतद्वेदविषये तेषामनास्थामेव वस्तुतो द्योतयति ।

वैदिकत्वेन प्रसिद्धानां मध्येऽपि केचिदेव प्रविरला एतादृशो ये—

स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥

यद् गृहीतमविज्ञातं निगदेनैव शब्द्यते ॥
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥
( निरुक्ते १।१८ )

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः ॥
(ऋ० १०।७१।४

इत्यादिश्रुतीः स्मरन्तोऽनुसरन्तश्च अर्थदृष्ट्यापि वेदानामभ्यासम तिष्ठन्ति ।

विद्यमानाप्येषा चिरकालादेव वेदविषयेऽस्माकमुदासीन साम्प्रतमतिमात्रं वृद्धिं गता । अत एव प्रविरलसंस्कृतप्रचारा सामान्यप्रदेशानां तु का कथा, विद्यायाः केन्द्रीभूतस्थानेष्वा सत्स्वपि तत्रान्यान्यशास्त्रीयविषयविशेषज्ञेषु, वस्तुतो वैदिका विदुषां प्रायोऽभाव एव दृश्यते । येऽपि विभिन्नविषयेषु पारोवर्यवि विद्वांसस्तेऽपि वेदविषयेऽनभिज्ञा एव प्रायशः । वेदानामध्ययने न तेषां किञ्चित्प्रयोजनमितीव तेषां प्रतीतिः । महाभाष्यानुसा वेदरक्षार्थं प्रवृत्तस्य अन्यान्यसंस्कृतव्याकरणापेक्षया विशेषतो वैदि प्रक्रियाप्रतिपादकस्य पाणिनीयव्याकरणस्य कर्णधारेषु वा, वेदा प्रामाण्याप्रामाण्यं पुरस्कृत्य साग्रहं विवदमानेषु नैयायिकपञ्चा ननेषु वा, वेदप्रतिपाद्यधर्मस्वरूपविचारचातुरीधुरीणेषु मीमांसा प्रवीणेषु वा, धर्म्याधर्म्यव्यवस्थापकेषु धर्मधुरन्धरेषु पदवाक्य प्रमाणपारावारीणेषु वा, "अस्य महतो भूतस्य निःश्वसितमेतद् यदृ ग्वेदः" इत्याद्यर्थपरक 'वेद+अन्त'मधीयानेषु वेदान्तिधौरेयेषु व वस्तुतः "अनेकविद्यास्थानोपबृंहितस्य प्रदीपवत् सर्वार्थावद्योतिन सर्वज्ञकल्पस्य महत ऋग्वेदादेः" अनुशीलनस्य प्रवृत्तेरभाव

एव प्रायो दृष्टिपथमापतति। एतस्या दुरवस्थाया एव एष परिणामो यद्वैदिकत्वाभिमानिनोऽपि वयं केवलं नाममात्रेणैव वेदानुयायिनः संवृत्ताः।

अत एव—

विश्वदानीं सुमनसः स्याम।
पश्येम नु सूर्यमुच्चरन्तम्॥ ऋ० ६।५२।५॥

मा नो अग्नेऽवीरते परा दा
दुर्वाससेऽमतये मा नो अस्यै।
मा नः क्षुधे मा रक्षस ऋतावो
मा नो दमे मा वन आ जुहूर्थाः॥ ऋ० ७।१।१६॥

अस्मे धेहि श्रवो बृहद् द्युम्नं सहस्रसातमम्।
इन्द्र ता रथिनीरिषः॥ ऋ० १।९।८॥

उदिह्युदिहि सूर्य वर्चसा माभ्युदिहि।
याँश्च पश्यामि याँश्च न तेषु मा सुमतिं कृधि॥
अथर्व० १७।१।७॥

पुमान् पुमांसं परि पातु विश्वतः॥ ऋ० ६।७५।१४॥

इन्द्र त्वोतास आ वयं वज्रं घना ददीमहि।
जयेम सं युधि स्पृधः॥ ऋ० १।८।३॥

वयं शूरेभिरस्तृभिरिन्द्र त्वया युजा वयम्।
सासह्याम पृतन्यतः॥ ऋ० १।८।४॥

अदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्॥
यजु० ३६।२४॥

भद्रं जीवन्तो जरणामशीमहि ॥ ऋ० १०।३७।६ ॥

पश्येम शरदः शतम् ॥ जीवेम शरदः शतम् ॥

बुध्येम शरदः शतम् ॥ रोहेम शरदः शतम् ॥

पूषेम शरदः शतम् ॥ भवेम शरदः शतम् ॥

भूषेम शरदः शतम् ॥ भूयसीः शरदः शतात् ॥

अथर्व० १९।६७।१-८ ॥

यतो यतः समीहसे ततो नो अभयं कुरु ॥

यजु० ३६।२२

अश्मा भवतु नस्तनूः ॥ ऋ० ६।७५।१२ ॥

वीर्यमसि वीर्यं मयि धेहि ।

बलमसि बलं मयि धेहि । यजु० १६।९ ॥

मदेम शतहिमाः सुवीराः ॥ अथर्व० २०।६३।३ ॥

इत्यादीनामाशाभावभरितानां वीरतारसपरिप्लुतानामुदात्तवि- राणाम् "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः", "तद्वचनादाम्- यस्य प्रामाण्यम्" इत्यादिप्रमाणानुरूपमभ्युदयनिःश्रेयससाधन- वैदिकसदाचारस्य वैदिककर्मकाण्डस्य च सर्वथाऽभाव इव सर्व- दृश्यते। अत एवास्माकं समाजस्य शिथिला शीर्णा च दश- निःश्रीका निस्तेजस्काश्च वयं संवृत्ताः। प्राचीनाः सर्व एव समुन्न- आदर्शा विलुप्तप्रायाः स्मृतिगर्भे विलीनाः संजाताः।

## अस्माकं कर्तव्यम्

समुपस्थितायामेतादृश्यां परिणामदुरन्तायां वैदिकसाहित्य-

विषयकोपेक्षायां सर्वैरस्माभिर्वैदिकैः समयानुसारेण यथासंभवं पुनरपि वैदिकसाहित्यानुशीलनस्य प्रवृत्तेरुज्जीवनाय उपाया अवलम्बनीयाः। प्रयतनीयं च तथा यथा तत्तद्विषयानधीयाना अपि संस्कृतच्छात्राः—

वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत्॥ मनु० ३।२॥
उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते॥
एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते॥
मनु० २।१४०-१४१॥

"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" (महाभाष्ये) इत्याद्यादर्शमनुसरन्तो वेदाभ्यासोऽस्माकं निष्कारणो धर्म इति मन्यमाना वेदमप्यभ्यस्येयुरनुशीलयेयुश्च।

कथमेतत्सर्वं सम्पादयितुं शक्यते, कथं च वेदाध्ययनं द्विजमात्रेण विशेषतश्चार्यजातेः पुरोयायिभिर्ब्राह्मणैः क्रियते, कथं चास्मिन् विषये आधुनिकी प्रचलिता पठनपाठनप्रणाली साधिका भवितुमर्हति, इत्यादिविचारणार्थमेव वेदानामनुरागिणामनुयायिनां च पुरस्तादेष प्रबन्धः समुपस्थाप्यतेऽस्माभिः।[1]

---

१ संस्कृतरत्नाकरस्य वेदाङ्के पूर्वं प्रकाशितोऽयं लेखः किञ्चित्परिवर्त्यात्र समुद्ध्रियते।

( ३४ )

# *भारतीयसंस्कृतिः

नूनमभूतपूर्वोऽयं समयो भारतवर्षस्य दैर्घकालिक इतिहासे। सत्यं सुप्रभाता रजनी। चिरकालिकपारवश्यमहातमिस्रातमोऽपगमे भारतीयगगनमण्डले उदयाभिमुखभारताभ्युदयभास्वतो नूतननूतनाशाकिरणोद्भासि दिव्यं प्राभातिकं ज्योतिर्विशालमाशाचक्रवालम् आभासयन्नो मानसकलिकाः प्रबोधयदिवावलोक्यते। अस्मिन्हि शोभने समये प्रकृतिदेव्याः क्रोडे क्रीडतामाद्यानामृषीणाम् "एषा दिवो दुहिता प्रत्यदर्शि ज्योतिर्वसाना समना पुरस्तात्" ( ऋग्० १।१२४।३ ) इत्याद्युषस्यं श्रुतिगानमिव भारतीयानामस्माकं सोल्लासमनसां सहसेव मुखान्निःसरति—

सुप्रभातं विजयतां धियो यत्पुष्टिवर्धनम्।
पथः सत्यस्य सातये ॥

तदेतेन मनोऽभिरामेणाभिनवजीवनदायिना समयेनाभिनवतामापन्न इव भारते

"ताः प्रत्नवन्नव्यसीर्नूनमस्मे रेवदुच्छन्तु सुदिना उषासः"

( ऋग्० १।१२४।६ )

---

* ३।२।१९५० ईस्वीतिथावुत्कलसंस्कृतपरिषद उपाधिवितरणोत्सवसरे कृताद् ग्रन्थकर्तुर्दीक्षान्तभाषणात्तदंशरूपेण समुद्धृतोऽयं लेखः।

इत्यनुसारं प्रत्नवद्भयोऽपि भारतीयसंस्कृतेः प्रजागरः स्यादित्यभिप्रायेण 'भारतं भारती भारतीयसंस्कृतिः' इति श्रुतिमधुरो रवः सर्वतः श्रुतिपथमापतति ।

न केवलमस्मद्देशस्य विभिन्नक्षेत्रेषु कार्यधुरं वहन्तो नेतार एव तत्तन्मञ्चेभ्यो भारतीयसंस्कृतेर्गुणगानपरा अनवरतमद्यत्वे श्रूयन्ते, किन्तु हिन्दुमहासभा-राष्ट्रियस्वयंसेवकसंघ-अखिलभारतीयसंस्कृतिसंमेलनप्रभृतिसंस्था अपि तथैव खलु तन्महिमवर्णनया मुखरा दृश्यन्ते। किं बहुना भारतवर्षस्य तु का वार्ता, भारताद्बहिरपि अमेरिका-रूस-फिन्लैण्ड-नारवेप्रभृतिसुदूरदेशदेशान्तरेष्वपि भारतीयसंस्कृतेरध्ययनाध्यापनविषयिणी महती अश्रुतचरी रुचिर्विदुषां नानाविश्वविद्यालयानां च क्रमशः प्रवर्धमाना अहरहः संवादपत्रेभ्यः प्रतीयते ।

तत्र केयं ननु भारतीयसंस्कृतिः, किं तस्याः स्वरूपम्, कीदृशं च तस्याः स्थानमद्यतनीये जगतीति स्वाभाविकी जिज्ञासा समुदेति नो मनःसु । सर्व एष विचारः खलु संस्कृतिसामान्यस्वरूपावधारणसापेक्ष इति संस्कृतिसामान्यमेव तावत्संक्षेपेण विचार्यते ।

तत्र **संस्कृतिस्तावत्केति जिज्ञासायां** कस्यापि देशस्य समाजस्य वा विभिन्नजीवनव्यापारेषु सामाजिकसंबन्धेषु वा मानवीयत्वदृष्ट्या प्रेरणाप्रदानां तत्तदादर्शानां समष्टिरेव संस्कृतिरित्येवार्थः प्रमितित्वेन वक्तव्यः । वस्तुतस्तस्यामेव सर्वस्यापि सामाजिकजीवनस्योत्कर्षः पर्यवस्यति । तयैव तुलया विभिन्नसभ्यताना-

मुत्कर्षापकर्षौ मीयेते। किं बहुना, संस्कृतिरेव वस्तुतः "सेतुर्विधृतिरेषां लोकानामसंभेदाय" ( छान्दोग्योपनिषदि ८।४।१ ) इत्येवं वर्णयितुं शक्यते। अत एव च सर्वेषां धर्माणां संप्रदायानामाचाराणां च परस्परं समन्वयः संस्कृतेरेवाधारेण कर्तुं शक्यते।

## भारतीयसंस्कृतिः

उपर्युक्तदृष्ट्यैव भारतीयसंस्कृतेरपि गुणगानमद्यत्वेऽभितः श्रूयते। इयं हि भारतीयसभ्यताया अन्तरात्मा, सर्वेषां भारतीयानां धर्माणां संप्रदायानां चाधारः। आपाततः परस्परं विरुद्धत्वेन प्रतीयमानेष्वपि शैवशाक्तवैष्णवजैनबौद्धादिसंप्रदायेषु परस्परं य आन्तरः संबन्धस्तस्य मूलं तेष्वेकसूत्ररूपेण ओतप्रोता भारतीया संस्कृतिरेव। "स यथा सर्वासामपां समुद्र एकायनम्" ( बृहदारण्यकोपनिषदि २।४।११ ) एवं सर्वेषां भारतीयसंप्रदायानां भारतीयसंस्कृतिरेकायनम्।

भारतीयसंस्कृतेस्तत्तत्संप्रदायानां च परस्परं पोष्यपोषकभावरूपः संबन्धः। एकतः सा तानाप्याययति, अपरतस्ते तां पोषयन्ति। अत एव "इदं सत्यं सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु" ( बृह० उप० २।५।१२ ) इति श्रुतिमनु "इयं भारतीयसंस्कृतिः सर्वेषां भारतीयसंप्रदायानां मध्वस्याः संस्कृतेः सर्वे संप्रदाया मधु" इदमपि सुतरां वक्तुं शक्यते।

इयं हि यद्यपि तत्तत्संप्रदायेषु व्याप्ता, तथापि न तैरस्याः स्वरूपं परिसमाप्यते। किञ्च, तत्तत्कालभेदेन तत्तदवस्थितिभेदेन च भिन्नापि, गङ्गाया धारेव सततं प्रगतिशीलापि, सा एकसूत्ररूपेण वर्तमाना स्वस्या एकात्मतां पवित्रतां च न जहाति। अत एव भारतवर्षे चिराय प्ररूढासु, अस्माकं दास्यकाले च सुतरां प्रवृद्धासु, अनुदारसांप्रदायिकभावनासु विद्यमानास्वपि, तत्त्वविदो विचारशीला विद्वांसः "परोक्षप्रिया हि देवाः प्रत्यक्षद्विषः" इति श्रुतेरादेशमनुसरन्त इव तेषु तेषु संप्रदायेषु व्यापिन्या एकस्या भारतीयसंस्कृत्या भावनयैव भावितचित्ता उदारहृदयाः सर्वत्र समदृष्टयो न कुत्रापि संप्रदाये पक्षपातिनो भवन्ति, न चान्यायेन व्यवहरन्ति।

## भारतीयसंस्कृतेः स्वरूपम्

तस्या एतस्या आसेतुहिमालयम् "आ समुद्रात्तु वै पूर्वादा समुद्रात्तु पश्चिमात्" (मनु० २।२२) परःशतेषु संप्रदायेषु प्रविभक्तायाः, परःसहस्रेभ्यश्च वर्षेभ्यो लोकोत्तरप्रतिभानवद्भिराचार्यैर्महात्मभिश्च जगद्धितसंपादनकामनयैवाभिवृद्धिं नीतायाः, साम्प्रतं च चतुर्दिशम् "इन्द्राग्नी ता हवामहे" (ऋग्० १।२१।३), "सवितारमुपह्वये" (ऋग्० १।२२।५) इत्यादिसदृशं देवतारूपेण समाहूयमानाया भारतीयसंस्कृतेः किं स्वरूपं किं वा वैशिष्ट्यमिति महति प्रश्ने समासत एव तत्समाधानमिह प्रदर्श्यते।

भारतीयसंस्कृतेः स्वरूपावधारणप्रसङ्गे प्रथमं पदमवगाहते

आध्यात्मिकी भावना। एषा हि तस्या अधिष्ठानं हृदयमात्मैव वा। तिलेषु तैलमिव, पुष्पे सुगन्ध इव, क्षीर आज्यमिव, प्राणिषु प्राणा इव, शरीरे रक्तमिव वा इयं हि तस्याः सर्वं स्वरूपमभिव्याप्य तिष्ठति। मणिमालायां मेरुमभितो मणिगणा इव आध्यात्मिकीं भावनामभितस्तस्या अन्ये गुणा अभिवर्तन्ते। सैव तत्सूत्रं येन वै भारतीयसंस्कृतेः सर्वाण्यन्यानि रूपाणि संदृब्धानि भवन्ति। एषैव तानि सर्वाणि यमयति। सब्राह्मणोपनिषत्का वेदाः, स्मृतयः, पुराणानि, बौद्धानां जैनानां वागमाः, महात्मनां वचांसि, अन्यद्वा भारतीयं वाङ्मयं सर्वमप्याध्यात्मिक्या भावनया साक्षादसाक्षाद्वा ओतप्रोतम्। असंख्यानां भारतीयमहात्मनां मुनीनां साधूनां च जीवनान्यस्या एव निदर्शनानि।

कीदृग्रूपा पुनरियमाध्यात्मिकी भावनेति चेत्, "परोक्षप्रिया हि देवाः प्रत्यक्षद्विषः", "कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" ( कठोपनिषदि २।१।१ ), "श्रेयो हि धीरोऽभि प्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद् वृणीते" (कठो० १।२।२), "पञ्ञापासादमारुय्ह असोको सोकिनिं पजं। पब्बतट्ठो व भुम्मट्ठे धीरो बाले अवेक्खति॥" (धम्मपद २।८) इत्यादिश्रुतिस्मृत्यनुसारं सततं संसरणशीले क्षणपरिणामिनि संसारे आपातरम्यां पर्यन्तपरितापिनीमैन्द्रियिकां तात्कालिकीं च प्रवृत्तिं विहाय यत्किंचित्स्वभाववतोऽप्यात्मनः कल्याणकामनया धीरधीभिरेवावलम्बनीया अन्तर्वृत्तिरूपा दीर्घदृष्टिरेव सेत्येव वक्तुं

शक्यते। सा चैषा आध्यात्मिकी भावना समाना सर्वेष्वपि भारतीयसंप्रदायेषु। अन्यत्सर्वमधस्ताद् वर्णितं भारतीयसंस्कृतेः स्वरूपं वस्तुतोऽस्या एव विस्तरो व्याख्यानं वा।

आध्यात्मिकीं भावनामनु समायाति पारलौकिकी भावना। आपातरम्ये पर्यन्तपरितापिनि ऐन्द्रियके जीवनेऽनास्था, आत्मनः कल्याणकामना च स्वत एव 'अयमेव लोको न परः' इति भावनाया विरोधिन्यां पारलौकिकभावनायामेव विश्रान्तिं लभेते। तां विना को नु क्षणस्थायिनि सततं संसरणशील इह जीवने शान्तिभाग् भवेत्। एतयैव प्रेरिता भारतीया वीरा रमण्यश्च स्वधर्मस्य स्वदेशस्य च रक्षार्थं हसन्त एव सर्वस्वं प्राणानपि चोत्सृजन्तो भारतीयेतिहासे दृश्यन्ते। सा चैषा पारलौकिकी भावनापि सततमस्मान् कर्तव्यपालनाय प्रोत्साहयन्ती अमूल्यं रत्नमिव भारतीयसंस्कृतेः।

कर्तव्यपक्षेऽपि वर्णनातीतमेव भारतीयसंस्कृतेः स्वरूपम्। तत्र **आत्मसंयमस्**तावत्प्रथमं पदमधितिष्ठति। नानाविधव्रतोपवासादिबहुलेन तत्तत्सांप्रदायिकाचारेण, कृच्छ्रातिकृच्छ्रचान्द्रायणादिविधानेन च आत्मसंयमस्यैव भारतीयसंस्कृतावनन्यसदृशं महत्त्वमाख्यायते। पुरुषार्थचतुष्टयसाधकेषु चतुर्ष्वाश्रमेषु यद् ब्रह्मचर्यस्यानन्यसाधारणं प्रमुखं स्थानं तदपि भारतीयसंस्कृतावात्मसंयमस्यैव वैशिष्ट्यं प्रख्यापयति। नैतदहेतुकं यत्पृथिव्यां विभिन्नसभ्यतासु केवलं

भारतीयसंस्कृतावेव ब्रह्मचर्यस्य एकतमाश्रमत्वेन स्थापना तस्या-द्वितीयमहत्त्ववर्णनं च दरीदृश्यते। कस्याविदितं यद् भीष्म-पितामहसदृशादर्शब्रह्मचारिणां जन्मभूमिरपि भारतमेव।

आध्यात्मिकभावनावारिणा सिक्तायामेव भूमौ पुनरस्यात्म-संयमस्य संभव इति न व्याख्यामपेक्षते। वस्तुतस्तु यमनियमा-दीनि सर्वाण्यपि बाह्याभ्यन्तरशुचितासाधनानि आत्मसंयमस्यैव प्रपञ्चः।

आत्मसंयमादनन्तरं तस्यैव सद्विलास इव भारतीयसंस्कृते-रपरं वैशिष्ट्यं मातृशक्तेः संमाननं नाम। भारतीयसंस्कृतेर-साधारणं माहात्म्यमेतत्कृतमेव। विश्वप्रपञ्चस्य मूलकारणभूता-माद्यां महाशक्तिं "या देवी सर्वभूतेषु मातृरूपेण संस्थिता" (दुर्गासप्तश० ५।७१) इत्येवं मातृरूपेण चिरात्संभावयन्त्या, "तव देवि भेदाः स्त्रियः समस्ताः" (दुर्गा० ११।६) इत्येवं च तां निध्यायन्त्या भारतीयसंस्कृत्या मातृशक्तेर्विशेषतः संमानः स्वाभा-विक एव। परं नियतमेतद्वैशिष्ट्यमखिलेऽपि संसारेऽसाधारणम्। "मातृवत्परदारेषु" इति नीतिकृद्भिरभ्युपगतः सिद्धान्तो व्यवहारेऽपि परस्त्रीषु परदारिकासु च मातः! भगिनि! पुत्रि! इत्यादिशब्दान् प्रयुञ्जानैर्वस्तुतः परिपाल्यते भारते पामरैरपि जनैः। किं बहुना, विशेषतो भगवत्याः सीतायाः[1] देव्या द्रौपद्याश्चापमानपरिमार्जनार्थं

१ तथा हि दृश्यताम्—"काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्" (वाल्मी० रा० १।४।७)। "पतिव्रतानां नाकस्मात् पतन्त्यश्रूणि भूतले" (वा० रा० ६।१११।६७)।

प्रवृत्तयोर्रामायणमहाभारतयोर्निर्माणमपि उपर्युक्तसिद्धान्तनिदर्शनार्थमेव जातमिति मन्ये। ततश्च स्त्रीजातेः संमानभावनाप्यस्माकं भारतीयसंस्कृतेरवर्णनीयं वैशिष्ट्यमिति निर्विवादम्।

परस्परं विचारसहिष्णुतापि अपरं वर्णनार्हं वैशिष्ट्यं भारतीयसंस्कृतेः। सामाजिकाचारेष्वपेक्षितेऽपि प्रायेण व्यक्तीनां साम्ये, विचारविषये सर्वेषां स्वातन्त्र्यं चिरादेवाभिमतमासीद् भारतीयानाम्। परस्पर विचारसहिष्णुतामन्तरेण न तत्प्रथत इति साप्यावश्यकत्वेनाङ्गमस्मत्संस्कृतेः। अत एव ईश्वरानीश्वरवाद-वेदपौरुषेयत्वापौरुषेयत्ववाद-वाममार्गदक्षिणमार्गादिभेदानां परस्परं सहिष्णुतया संस्थितिर्न कस्याप्यविदिता भारते। अत एव च विशुद्धभारतीयेतिहासे विदेशेतिहासेष्विव धर्मभेदासहिष्णुतामूलकस्य रक्तपातस्य नामापि न श्रूयते। नृशंसन (= मनुष्यहिंसा) विरोधप्रतिपादकस्य महाभारतादिप्राचीनग्रन्थेषु श्लाघनीयगुणत्वेनासकृद्वर्णितस्य आनृशंस्यस्याप्यन्ततो मनुष्यत्वस्य समादररूपायां परस्परं विचारसहिष्णुतायामेव पर्यवसानं भवति।

व्यक्तिस्वातन्त्र्यरूपा वा मनुष्यत्वस्य संमानरूपा वा एषा विचारसहिष्णुतैव वस्तुतो जैनानामनेकान्तवादसिद्धान्तस्य मूलम्। विभिन्नशास्त्रेषु जैनाद्यागमेषु चोपसंगीतगौरवाया अहिंसाया अपि अन्ततस्तत्तच्चेतनव्यक्तीनां स्वव्यक्तित्वविकासार्थमबाधस्वातन्त्र्यमेवाभिप्रायो निष्पद्यते।

अत एव भारतीयेतिहासे बलात्कारेण धर्मान्तरग्रहणस्य

वार्ता अश्रुतचरी एव। तदत्र मौलिको भेद आर्यसंस्कृतेरितरसंस्कृतिभ्यः।

## भारतीयसंस्कृतेः स्थानमद्यतनीये जगति

तदेवमाध्यात्मिकभावनाया आधारेण पारलौकिकी भावना आत्मसंयमं, मातृशक्तेः सम्मानं, परस्परं विचारसहिष्णुता चेत्यादिरूपैरसाधारणैर्व्यष्टेः समष्टेश्चोदात्ततायाः कल्याणस्य च सम्पादकैर्गुणैरर्चिता इयं नो भारतीयसंस्कृतिर्नूनं स्वरूपत एव सकललोककल्याणसाधनक्षमा। अत एव मानवीयधर्मेणानर्थान्तरतया "जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्" (योगसूत्रे २।३१) इत्यनुसारं सार्वभौमधर्मस्यैव नामान्तरम्। लोककल्याणमेव कामयमानैर्ऋषिभिर्मुनिभिराचार्यैश्च प्रायोऽविच्छिन्नरूपेण संपोषितायाः, "मित्रस्य चक्षुषा समीक्षामहे" (यजुर्वेदे ३६।१८), "असतो मा सद्गमय। तमसो मा ज्योतिर्गमय। मृत्योर्माऽमृतं गमय" (बृहदारण्यकोपनिषदि १।३।२८) इत्याद्युपदेशामृतैश्च भरिताया अस्याः स्वभावत एव सार्वभौमधर्मरूपत्वे नहि किञ्चिदाश्चर्यम्। अत एव च "कृण्वन्तो विश्वमार्यम् (ऋग्वेद० ९।६३।५), "एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥" (मनुस्मृतौ २।२०) इत्याद्युद्घोषास्तस्यां संस्कृतौ संगच्छन्ते। तत्कृत एव च तस्याः कल्याणकारी प्रभावोऽद्यापि सुदूरदेशदेशान्तरेषु, विशेषतश्च बृहत्तरभारतप्रदेशेषु, समुपलभ्यते।

तस्या एतस्याः सांप्रतिके, एकतो नानासंघर्षैरुद्विग्ने, अपरतो जगद्विजिगीषाराक्षस्या समाक्रान्ते, अन्यतः पारस्परिकविद्वेषाविश्वाससंत्रासैः कदर्थिते, क्वचिच्चाद्यापि सभ्यताप्रकाशेन रहिते जगति कीदृशी उपयोगितेति विषये किमु वक्तव्यम् ? स्वत एव स्पष्ट एषोऽर्थो नैव हेतुवादैः साध्यतामपेक्षते। नूनं भारतीयसंस्कृत्यधीनमेव परित्राणं समन्तात् खिन्नस्य जगतः।

## तस्याः सांप्रतिकी दुरवस्था

सत्यप्येतादृशे लोकोत्तरमहिमशालिनि भारतीयसंस्कृत्याः स्वरूपे वृत्ते च, तस्या भारत एव साम्प्रतिकी दुरवस्था कस्य नाम मनस्तापं न तनुते ? चिरादेव जीर्णशीर्णगात्रा सा साम्प्रतं सत्यं मुमूर्षुरिव प्रतीयते। यत्र कुत्रापि दृष्टिर्निःक्षिप्येत तत्रैव सा सुप्तेव, विलुप्तेव, अथवा विलोपनोन्मुखी एव दृश्यते। सर्वेष्वस्माकं व्यवहारेषु, जीवनक्षेत्रेषु, गृहजीवने, सामाजिकजीवने, विश्वविद्यालयेषु, अन्यत्र वा तस्या आदर्शानां स्वरूपस्य च प्रायेण प्रातिकूल्यमेव दृष्टिपथमापतति।

तस्या आध्यात्मिकताया मौलिक आधार एव तावत् प्रस्खलित इव, शिथिलित इव, उन्मूलित इव वा संजातः। "संगच्छध्वं सं वदध्वम्" (ऋग्० १०।१९१।२) इतिश्रुतेरादेशानुसारं समष्टिहितसंपादन एवात्महितबुद्धेर्दीर्घदृष्टिमपहाय समाजविद्वेषिण्यामन्धस्वार्थकामनायामेव निमग्नाः, सात्त्विकभावनाः

समुत्सृज्य रजस्तमोऽभिभूताः, स्वकर्तव्यपालनविमुखा निरन्तरमधिकारलिप्सयैवोह्यमानाः, "ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान्।......इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम्" (भ० गी० १६।१२-१३) इत्येवम् "आत्मसंभाविताः स्तब्धा धनमानमदान्विताः" (भ० गी० १६।१७) जगतोऽहितायैव प्रायेण प्रवृत्ता मन्ददृष्टयो वय स्पष्टं नितरां प्रतिकूला आध्यात्मिकभावनायाः।

एवं भारतीयसंस्कृत्या आधार एव समुन्मूलनोन्मुखे का कथा तस्यास्तत्तद्विशेषाणाम्। तथा च आत्मसंयमस्थाने नग्नोच्छृङ्खलतायाः, विचारसहिष्णुतायाः स्थाने सांप्रदायिकविद्वेषिताया वर्गसंघर्षस्य च साम्राज्यमभितो दरीदृश्यते। औदरिका इव 'रोटीरोटी' इति विपुलं क्रन्दन्तोऽपि सुदूरमेव ततः क्रमशो नीयमानाः, वस्त्राद्यावश्यकसामग्रीविहीनाः, सर्वविधानुशासनहीना इव स्वकर्तव्यपालनविषये, 'स्त्रियः स्वतन्त्राः' इत्येवमापाततस्तासां हितं चिकीर्षन्तोऽपि दम्पत्योरकृत्रिमं स्नेहमुन्मूल्य गृहे गृहेऽशान्तिवातावरणोत्पादनपराः, चिरपरम्पराप्ररूढं गुरुशिष्ययोः पवित्रसम्बन्धं कलुषीकुर्वन्तो वयमसंशयं भारतीयसंस्कृतेः सुदूरमुपनीता इव साम्प्रतम्।

## सांप्रतिका भारतीयविश्वविद्यालयाः

यथा ह वै कस्मिन्नपि देशे राष्ट्रे वा तत्तद्वस्तूनि तत्तद्यन्त्रालयेषु निष्पाद्यन्ते, एव वाव तत्रत्यायाः सभ्यतायाः संस्कृतेर्वा अभिवृद्धिः परिपुष्टिर्वा तत्रत्येषु विद्यालयेषु विशेषतश्च विश्वविद्यालयेषु जायते।

तत्परीक्ष्यतां तावदस्मदीयानां विश्वविद्यालयानामेव दृष्टिरवस्था चैतस्मिन् विषये। सत्यामपि नानाविधायां स्पृहणीयायां तेषां समुन्नतौ, सत्यपि च निर्विवादं तेषामस्माकं समुन्नतौ स्वतन्त्रताप्राप्तौ च महत्युपकारे, को नाम प्रभवेत् प्रत्याख्यातुं यत्तेषामा जन्मनः सर्वापि प्रवृत्तिः सर्वेऽप्यादर्शा आमूलचूडं विदेशप्रभवा एव। भारतीयसंस्कृतेर्भवतु नामाध्ययनाध्यापनं यत्र कुत्रचिद् विशेषविषयरूपेण, तच्चाप्यङ्गुलिनिर्देश्यैश्छात्रैः, परं निश्चितं केनाप्यद्य यावन्नैव प्रयतितं भारतीयसंस्कृत्याधारेण तान् प्रतिष्ठापयितुम्। प्रायेण भारतीयवाङ्मयस्य संस्पर्शेनापि विहीनास्तत्रत्याश्छात्रा अध्यापकाश्च भारतीयसंस्कृतेरादर्शेभ्यः पराङ्मुखा इति न किमप्याश्चर्यम्। अत एव च्छात्रोच्छृङ्खलतया कदर्थनामनुभवतामध्यापकानाम्, निर्व्याजविद्यापरायणतामुत्सृज्य प्रधानतोऽर्थोपार्जनपराणामध्यापकानामुपेक्षाभावेन खिन्नानां छात्राणां च पारस्परिकसंबन्धस्यादर्शहीनता कं न तापयति भारतीयसंस्कृतेः कल्याणानुबन्धिष्वादर्शेषु श्रद्धावन्तं जनम्। एतस्यैव परिणामोऽयं यदद्यत्वेऽहरहः सुप्रसिद्धविश्वविद्यालयेष्वपि छात्रेभ्योऽप्यध्यापकानां भयस्य, छात्राणां स्वाभीष्टप्रतिघातमूलकस्य तात्कालिकस्याध्ययनाद्विरामस्य, तैरेव कृतस्य न केवलमध्यापकानां किन्तु विश्वविद्यालयप्रधानाधिकारिणामप्यनादरस्य च संवादाः समाचारपत्रेषु दृश्यन्ते।

परदारेषु परदारिकासु च मातृबुद्धिं स्वसृबुद्धिं दुहितृबुद्धिं वा शास्त्रतो व्यवहारतश्च प्रतिपादयति भारतीयसंस्कृतिः। परं

तद्विरुद्धमेवास्माकं विश्वविद्यालयेषु च्छात्राणामभद्रो व्यवहारो भारतीयसंस्कृतेस्तु सर्वथा प्रतिकूल एव, भारतीयसंस्कृतेरपरिचित-स्यान्यस्यापि कस्यचित्सोऽभिमतो भवेदिति महान्न सन्देहः।

प्राचीनभारते नैकविधतपस्याया जीवनं निर्वहतां छात्राणां ब्रह्मचर्यं शृङ्गारभावनाराहित्यं सौम्यत्वं मातापित्रोरैश्वर्यशालित्वा-शालित्वविचारमप्युत्सृज्य कृष्णसुदाम्नोरादर्शमनु परस्परं भ्रातृ-भावेन गुरुसपर्यया च वर्तनं कस्याविदितं भारतीयसंस्कृतीतिहास-विदः। सर्वमेतद्विपर्यस्तमिवाद्यत्वे विद्यासंस्थास्विति नापेक्षते विशेषविवरणम्। शिक्षाया अतीव व्ययसाध्यत्वम्, स्वास्थ्यस्य निर्ह्रासः, कस्या अपि निश्चिताया सन्ध्यावन्दनादिसहकारिण्या दिनचर्याया अभावः, सर्वमेतदेतत्कृतमेव।

अत एव साम्प्रतं भारतीयविश्वविद्यालयेषु भारतीयसंस्कृतेस्तु का कथा, प्रायेण साकल्येन तद्विरुद्धमेव वातावरणम्। भाषाया भावाना भोजनाच्छादनयोरपि च दृष्ट्या प्रायेणाभारतीयं वर्तनं तत्र।

तदेवमस्माकं विद्यास्थानेभ्य एव बहिष्कृता भारतीया संस्कृतिः कथमन्यत्र राष्ट्रियजीवने समाश्रयं लब्धुं क्षमा भवितुम-र्हति। कथं च तस्या दुरवस्था अपरिहेया न भविष्यतीति सर्वथैव दौर्भाग्यं तस्याः। प्रतिवर्षं देशालङ्कारभूतैर्महाभागैर्दीक्षान्तस-मारम्भेषु विचारगभीरेषु अभिभाषणेषु क्रियमाणेष्वपि नूनं हृदय-तापकरी भारतीयसंस्कृतेरियं दुर्दशा।

## भारतीयसंस्कृतेः समुद्धारः

तदेवमस्या, प्राचीनकाले व्याप्तदूरदेशदेशान्तराया, साम्प्रतं पुनः स्वदेशेऽपि दुरवस्थाग्रस्ताया जीवितसंशयं चोपेताया भारतीयसंस्कृत्या, न केवलं राष्ट्रियजीवन एव "अभयं सत्त्वसंशुद्धिः" (भ० गी० १६।१) इत्यादेर्दैव्याः संपदः परिपोषिकायाः परिस्थितेरुत्पादनार्थम्, किन्तु तत्तद्व्यक्तिगतव्यवहारेष्वपि निर्व्याजमाधुर्यभावानामुत्पत्तये सद्यः समुद्धारोऽपेक्षितः। अत एव राष्ट्रस्यात्मनः समुद्गतं तदन्तर्नादरूपमाह्वानमिवैष भारतीयसंस्कृतेरुद्घोषः समन्तात् साम्प्रतं श्रूयते।

तत्कोऽभ्युपायस्तस्याः समुद्धारस्येत्येव महान् प्रश्नः।

तत्र तावदिदमवधारणीयं यत्सत्यामपि चिरकालतोऽत्यन्तं प्रतिकूलायां परिस्थितौ भारतीया संस्कृतिरद्यापि न सर्वथैव समुच्छिन्ना। जागर्त्येव सा समष्टिरूपेण भारतीयजनताया अन्तर्हृदये मूकभावनासु च। ततः सर्वतः प्रथममावश्यकता यत्तस्या अन्तरात्मन आविष्करणं नाम। तच्च तस्या दीर्घपरम्पराया अध्ययनेनैव साध्यम्। तदर्थं च केवलमेकमात्रं साधनं यदिदं संस्कृतं देववाणी वा।

कस्यैतदविदितं यत्संस्कृतं हि भारतीयसंस्कृतेः शरीरम्। परःसहस्रवर्षेभ्यः समागतायाः, परिस्थित्यनुसारं तत्तत्सम्प्रदायप्रभावाद्वा तत्तद्राजनीतिकप्रभावाद्वा नानावस्था उपभुञ्जानाया अपि

अन्तर्वर्तिनीमेकसूत्रतां संदधानाया भारतीयसंस्कृतेः स्वरूपावगमाय देववाण्या विस्तृतं, प्रायेण भारतीयेतिहासकालस्य समव्यापि, वाङ्मयमेव मुख्यं साधनम्।

चिरन्तनकालादेवायुतसिद्ध इव संबन्धो भारतीयसंस्कृत्या सह संस्कृतस्य। भारतीया संस्कृतिरिव संस्कृतभाषापि चिरादेव समानरूपेण समाश्रिता परिपुष्टा च विभिन्नसंप्रदायैः। अद्यत्वेऽपि विभिन्नभाषाभाषिप्रान्तेषु विभिन्नधार्मिकसंप्रदायेषु च संस्कृतभाषैव सांस्कृतिकीमेकसूत्रतां संपादयति। कस्य तिरोहितं यदद्यापि यावद्भारतमार्याणां धार्मिकं कृत्यं प्रायेण संस्कृतद्वारैव संपाद्यते। अद्यापि च दिष्ट्या भारतीयभाषासु केवलं संस्कृतमेव आसेतुहिमालयमापूर्वापरसमुद्रं च परस्परव्यवहारसाधनम्।

ततश्च निर्विवादं भारतीयसंस्कृतेः समुद्धारस्य मुख्यतमं साधनं संस्कृतमेव।[१]

( ३५ )

## कृत्स्नो हि लोको बुद्धिमतामाचार्यः

( चरके )

**अथवा**

## संस्कृतज्ञेषु लोकप्रगतेर्लोकावस्थितेश्चोपेक्षा

---

१ विषयस्यास्य-विशेषविचारस्तु प्रबन्धप्रकाशस्य द्वितीयभागेऽविकलरूपेण प्रकाशिते प्रकृतदीक्षान्तभाषण एव द्रष्टव्यः।

*कानि पुनर्देववाण्या अवनतेः कारणानि ? प्रायेणैष विचार एतादृशस्थलेषु बहुभिरुपस्थाप्यते यद्राजशक्तेः स्वसंस्कृतेः पोषिकाया अभाव एवास्माकं देववाण्या वा उत्तरोत्तरमभिवर्धमानाया अवनतेः कारणमिति। "राजा कालस्य कारणम्" इत्यादिवचनान्यप्यत्र विषये प्रमाणीक्रियन्ते। परं वस्तुतो विचारणायां तु कार्यकारणभावस्य वैपरीत्यमेवात्र नः प्रतिभाति। कस्यापि देशस्य राजशक्ती राजनीतिसंबन्धिन्यवस्था वा न स्वयमकारणात एव समुत्पद्यते। वस्तुतः सापि तत्तद्देशवासिनां शिष्टानां शिक्षितानां वा जननायकानां जनतायाः प्रतिनिधिरूपाणां पुरोयायिनां पुरोहितानां वा प्रजाः प्रति स्वकर्त्तव्यस्य पालनापालनमूलिकैव। एवञ्च तत्तत्काले संदृश्यमाना भारते या राजनीतिसंबन्धिनी दुरवस्था नैषास्माकं दुरवस्थायाः कारणम्, प्रत्युत वयमेव स्वकर्तव्यपालनाद्विमुखा जनतायाः पुरोयायिपदाद् भ्रष्टास्तस्याः कारणतामुपगताः। एतादृशमेव तत्तद्विषयककार्यकारणभावे मतिवैपरीत्यमन्येष्वपि विषयेषु प्रायेणास्माकमुपदृश्यते। तदाधारेणैव च जनताया वास्तविकलाभालाभविचारमुपेक्ष्य तास्ता दृष्टीः प्रजासु प्रचारयन्तो वस्तुतः स्वात्मवञ्चनामेव बहवो जनाः कुर्वन्ति।

---

* १६, २०।८।१९३९ ईस्वीतिथ्योः संयुक्तप्रान्तीयसंस्कृतच्छात्रसंमेलनस्य श्रीमथुरापुर्यां द्वितीयाधिवेशने ग्रन्थकर्त्रा सभाध्यक्षरूपेण कृतादभिभाषणात्तदंशरूपेण समुद्धृतोऽयं प्रबन्धः।

## लोकप्रगतेर्लोकावस्थितेश्चोपेक्षा

ततश्च न हि राजशक्तेर्हानि संस्कृतभाषाया अवनतेर्मूलकारणम्, किन्तु यन्मूलकारणं तत्कृतैव राजशक्तेर्हानिरपि। तच्च लोकप्रगतेर्लोकव्यवहाराद् लोकावस्थितेश्च संस्कृतज्ञाना विराग उपरति, तेषामुपेक्षा च।

लोकप्रगतिर्हि नदीव सततमग्रगामिनी न जातु एकावस्थायामेव संतिष्ठते। ऋतूनामिव तस्या अपि आनुरूप्येण वर्तनं जीवनस्य सफलजीवनयात्राया वा प्रथमं लक्षणम्। लोकप्रगतिमनुरुध्यैव प्रवर्तमानास्तत्तद्देशनिवासिन्यो जातयो जगति स्वयश समन्तात् प्रसारयन्ति। अन्यास्तु कालकवलतामापद्यन्ते।

वस्तुतो लोकप्रगतिमूलिकैव तत्तद्युगादिकल्पना, युगरूपानुसारतश्च धर्माणा भेद इति वै शास्त्रविदा मतम्। तथा हि—

अन्ये कृतयुगे धर्मास्त्रेताया द्वापरे युगे।
अन्ये कलियुगे नृणा युगरूपानुसारत.॥
युगेष्वावर्तमानेषु धर्मोऽप्यावर्तते पुन.।
धर्मेष्वावर्तमानेषु लोकोऽप्यावर्तते पुन॥
श्रुतिश्च शौचमाचारः प्रतिकाल विभिद्यते।
नानाधर्मा प्रवर्त्तन्ते मानवाना युगे युगे॥

इत्येव तासु तासु स्मृतिषु स्मर्यते।

सर्वेष्वपि देशेषु सर्वेष्वपि च कालेषु सर्वेऽपि कर्ममार्गाः, सर्वमेव कर्मकाण्डं च लोकप्रगतिमनुरुध्यैव वस्तुतः प्रजाहित-दृष्ट्यैव च प्रचारितं सत् साफल्यं लभते।

लोक एव याथार्थ्येन

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत॥

इत्येवं गीयमानस्य भगवतो विराट्पुरुषस्य प्रत्यक्षमूर्त्ति-रिव सर्वेषामेव मार्गाणां धर्माणां कर्मणां वा सत्यत्वासत्यत्वयो-रुपयोगित्वानुपयोगित्वयोर्वा परीक्षणाय तत्त्वनिकषग्रावेव वर्तते। असुमेवार्थं प्रख्यापयन्ती "विशि राजा प्रतिष्ठितः' इत्येषा श्रुतिर्गीयते।

अयमेवार्थः "स्त्रीभ्यः सर्ववर्णेभ्यश्च धर्मशेषान् प्रतीयात्' (आ० धर्म० २।११।२६।१५) इत्यापस्तम्बधर्मसूत्रवचनेन पुष्टिं समश्नुते।

एतदेव रहस्यं यत्कालक्रमेण केऽपि धर्मा विलुप्ता जायन्ते, परम्परागताः प्राचीनशास्त्रेषु समुद्गीयमानाः कर्मपथाः खिली-भवन्ति। अन्ये च नूतनास्तेषां स्थानमधितिष्ठन्ति। एतदेव कारणं प्राचीननवीनसंस्कृत्योस्तिरोभावाविर्भावयोः।

तामेतां लोकप्रगतिमनुरुध्यैव लोकावस्थितिञ्चावेत्य लोक-व्यवहारविदो विद्वांसः प्रजाहितदृष्ट्यैव कर्मसु प्रवर्तमानाः

सर्वेषां समादरभाजो जायन्ते। तत्तत्कार्येषु पुरोयायिन पुरोहिता ( पुरोऽग्रे हिताः स्थापिताः ) मार्गप्रदर्शका ए मनुष्येषु नायकत्वपदवीं नेतृत्वपदवीं वासादयन्ति। चक्षुषा मिव नेतृणां शिक्षितानां शिष्टानां वा एतदेव कार्यं यत्खलु मार्ग प्रदर्शनं जनतायाः। एतन्मूलकमेव खलु नयनयोर्नयनत्वम् पशुषु पुनरन्यथैवैतत्। तेषां प्राजिता हि पश्चादेति दण्ड साहाय्येनैव च तानग्रे यापयति। अत एव प्राचीनकाले ऋषयो धर्मसंकटेषु प्रजोपप्लवेषु चोपस्थितेषु संभूय विचार्य च लोकावस्थानुसारत एव कर्तव्यमार्गनिर्धारणं कुर्वन्ति स्म लोकावस्थाया उपेक्षयैव पुनः प्रवर्तमानाः पश्चाद्दृष्टयो जना शोकमापद्यन्ते।

ततश्चास्माकं देववाण्याः संकृतज्ञानां वा विदुषां चिरादेव क्रमशो ह्रासमुपगच्छन्त्या अवस्थाया वास्तविकं मूलकारण लोकप्रगतेर्लोकावस्थितेश्च अथवा प्रजायाः सामान्यजीवनस्यो पेक्षैव, ततस्तेषां पार्थक्यं च। लोकस्य लोकयात्रायाश्च प्रात्यहिकीनामावश्यकतानामुपेक्षयैवास्माकं जीवनोपयोगिनीनां विद्यानां कलानां च नानाविधानां तिरोभाव समजनि। लोकप्रगतेरुपेक्षणेन सर्वैरुपेक्षिता इव शनैः शनैः संस्कृतज्ञा दृश्यन्ते। जनताया नेतृत्वं च शनैः शनैस्तेषां हस्तात्प्रस्खलितमिव प्रतिभाति।

स्वाभ्युदयकाले पुनर्देववाण्या वाङ्मयस्य जीवनयात्राया

विभिन्नविभागानामानुरूप्येणैव नैके विभागा विभिन्नाः शाखाश्चावर्त्तन्त। सभ्यसमाजस्य तत्तदावश्यकतानुसारमेव तास्ता विद्याः कलाश्च समुद्दिश्य संस्कृतवाङ्मयं तदा प्रवृत्तमासीत्। आसीच्च समाजस्य राष्ट्रस्य वा सर्वेष्वप्यङ्गेषु समाना कल्याणबुद्धिः प्राचीनानामाचार्याणां शिष्टानां जनतायाः पुरोयायिनाम्। अत एव च तत्र तत्र पुराणादिषु—

पठन्द्विजो वागृषभत्वमीयात्
स्यात्क्षत्रियो भूमिपतित्वमीयात्।
वणिग्जनः पण्यफलत्वमीयाज्
जनश्च शूद्रोऽपि महत्त्वमीयात्॥
(वा० रा० १।१।१००)

शृण्वन्विप्रो वेदवित्स्यात्क्षत्रियः पृथिवीपतिः।
ऋद्धिं प्राप्नोति वैश्यश्च शूद्रश्चारोग्यमृच्छति॥
(अग्निपुराणे ३८३।२३)

इत्येवं राष्ट्रस्य सर्वेष्वप्यङ्गेषु अङ्गाङ्गिभावरूपो घनिष्ठः संबन्धोऽत एव चैकस्यापि दुरवस्थयोपेक्षया वा सर्वेषामपि हानिर्नियतेति च सिद्धान्तानुरूपं सर्वेषामप्यङ्गानां कल्याणकामना श्रूयते। अत एव च प्रजाया विभिन्नानामङ्गानामावश्यकतानुरूपम् "आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती" इत्येवं विद्यानां चातुर्विध्यमाम्नायते।

"चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति। आगमकालेन

स्वाध्यायकालेन प्रवचनकालेन व्यवहारकालेनेति" ( महाभाष्ये ), "आचार्यः सर्वचेष्टासु लोक एव हि धीमतः", "कृत्स्नो हि लोको बुद्धिमतामाचार्यः । शत्रुश्चाबुद्धिमताम्" ( चरके ), 'बुद्धिहीना विनश्यन्ति यथा ते मूर्खपण्डिताः" ( पञ्चतन्त्रे ) इत्याद्यभियुक्तोक्तिभिः, महाभाष्यादिप्राचीनग्रन्थेषु पदे पदे "तद्यथा लोके" इत्येवं लोकव्यवहारस्य समादरेण, सांख्यादिषु नानाविधलौकिकदृष्टान्तसाहाय्येन च शास्त्रार्थप्रतिपादनेन प्राचीनानां विदुषां दृष्टौ लोकबुद्धेर्लोकप्रगतेर्व्यवहारज्ञानस्य च महत्त्वमेव स्पष्टीक्रियते ।

प्राधान्येन सामान्यजनतायाः शिक्षणार्थं विनिर्मितेषु सर्वेषां माननीयेषु विभिन्नपुराणेषु राजशास्त्रस्य, भुवनकोशस्य, महाद्वीपादेः, वास्तुलक्षणस्य, रत्नादिपरीक्षायाः, वृक्षायुर्वेदस्य, नैकेषां राजवंशानाम्, अश्वचिकित्सायाः, गजचिकित्सायाः, अन्येषां चैवंविधानां लोकोपयोगिविषयाणां सप्रपञ्चं वर्णनादिकमपि "लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि' इति भगवदाज्ञानुरूपं न केवलं प्राचीनाचार्याणां लोकसंग्रहचेष्टाया लोककल्याणबुद्धेश्चैव निदर्शकं, किन्तु तेषां स्वयमपि लोकोपयोगिविद्यासु परमप्रावीण्यस्य ख्यापकं स्पष्टतः प्रतीयते ।

परमद्यत्वे संस्कृतज्ञा भीता इव समुद्विग्ना इव दूरतः परित्यजन्ति व्यवहारोपयोगिनीनां लोकप्रगतेश्च परिचायिकानां भूगोलेतिहासगणितराजशास्त्रादिविद्यानामध्ययनम् । हन्त ! एता-

त्कृप्रवृत्तिमूलिकैव संस्कृतभाषाया संस्कृतज्ञाना च जीवनयात्रा-सम्बन्धिषु विभिन्नव्यापारेषु राष्ट्रस्य तत्तदावश्यकविभागेषु चानिश संवर्द्धमानानुपयोगिता ।

तदेव प्रपञ्चितमस्माभिरस्मन्मतानुसारेण देववाण्या अवनतेर्मूलकारणम् । अन्यानि कारणानि वस्तुतोऽस्यैव मूल-कारणस्य व्याख्यारूपाणि ।[1]

( ३६ )

# शिक्षायाः प्रधानमुद्देश्यम्

सर्वेष्वपि सभ्यदेशेषु शिक्षाविषयक प्रश्न सनातन एव । तथाप्यद्यत्वे संघर्षस्याशान्तेश्च वातावरणे चतुर्दिश प्रसृते, मनुष्यतया च पशुताया रूपे गृहीते सति, सर्वत्र शिक्षाविषयिणी अन्तरवेक्षणप्रवृत्तिर्विशेषतो जागरितेव दृश्यते । अतो भारते प्रचलितां वर्तमानशिक्षामधिकृत्य किञ्चिदिह विवेचन साम्प्रतिकमेव ।

## शिक्षायाः प्रधानमुद्देश्यम्

शिक्षाया प्रधानमुद्देश्य किमित्येष वै मुख्य प्रश्न शिक्षा-विषये । नून तेनैतादृशेन भवितव्य येन मनुष्यस्य मनुष्यत्वाभि-

---

१ देववाण्या अवनतेरन्येषा कारणाना विचारस्तु प्रबन्धप्रकाशस्य द्वितीयभागेऽविकलरूपेण प्रकाशिते प्रकृतभाषण एव द्रष्टव्य ।

मुखो—न तु पशुत्वाभिमुखी—प्रवृत्तिर्विकासमाप्नुयात्, यच्च मनुष्यस्य पशुभ्यः पृथक्कृतायाः साधनीभूतानां दैवीनां सात्त्विकीनां च प्रवृत्तीनां प्रोत्साहनाय, नतु पाशवीनामासुरीणां च प्रवृत्तीनां प्रवर्धनाय, प्रभवेत्। नैतद् विशेषविवरणमपेक्षते यन्मनुष्यः खलु स्वभावत एव दैवीभिरासुरीभिश्च प्रवृत्तिभिरुपेतो विद्यते। तथापि मनुष्यतायाः कृते आवश्यकमेतद् यन्मनुष्यः स्वकीयनिम्नप्रवृत्तीनां दमने शक्तो भवेत्। इममेवार्थं भगवद्गीता एवमाह—

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च।

(१६।६)

दैवी संपद्विमोक्षाय निबन्धायासुरी मता।

(१६।५) इति।

शिक्षाया उपर्युक्तस्य वास्तविकस्य उद्देश्यस्योपेक्षा वै साम्प्रतं संसारव्यापिनः संघर्षस्याशान्तेश्च मुख्यं कारणम्। कर्तव्याकर्तव्यबुद्धेरपेक्षां विनैव, कथमपि स्वार्थसम्पादनशक्तेरर्जनमेव शिक्षाया उद्देश्यमित्येव प्रायेण लोको मन्यते। एतादृश्या भावनाया आधारेण गृहीता शिक्षा कामं धनबलयोः प्राप्तेः साधनं भवतु; परन्तु नहि मनुष्यस्तद्द्वारा वास्तविकदृष्ट्या सामाजिकीं वैयक्तिकीं वा शान्तिमाप्तुं शक्नोति। तद्भावभावितो हि नरः सत्यस्य, आत्मसंयमस्य, स्वदेशस्य, स्वधर्मस्य, स्वजातेः, स्वसंस्कृतेश्च गौरवमयीर्भावना उपेक्ष्य परेषां चाटुकारितां प्रवञ्चनां चाप्यङ्गीकरोति। अत एव शिक्षाया मौलिकं लक्ष्यमस्मन्मत एतदेव

यत्तद्द्वारा मनुष्ये स्वकीयजीवनस्यादर्शभावनायाः कर्तव्य-बुद्धेर्वा उद्बोधनं भवेदिति। "धियो यो नः प्रचोदयात्" (यजु० २२।९), "यां मेधां देवगणाः पितरश्चोपासते। तया मामद्य मेधयाग्ने मेधाविनं कुरु स्वाहा॥" (यजु० ३२।१४) इत्यादिवैदिकमन्त्रेषु बुद्धिविषयिण्या प्रार्थनया उपरिनिर्दिष्टा आदर्शभावना कर्तव्याकर्तव्यबुद्धिरेव वा अभिप्रेयते। तस्या एवादर्शभावनाया निदर्शनमस्माकम्

अग्ने नय सुपथा राये...युयोध्यस्मज्जुहुराणमेनः।
(यजु० ४०।१६)

(अर्थात्, भगवन्! वास्तविकैश्वर्यस्य प्राप्त्यै प्रेरय नः सत्यस्य मार्गेण गमनाय, आत्महानिकरं पापं चास्मत्तो दूरीकुरु),

विश्वानि देव सवितर्दुरितानि परा सुव। यद्भद्रं तन्न आ सुव॥
(यजु० ३०।३)

(अर्थात्, हे देव सवितः! अस्माकं पापान्यस्मत्तो दूरे गमय। यच्च कल्याणं तदस्मानागमय)

इत्यादिवैदिकप्रार्थनासु दृश्यते।

आदर्शभावनाया उद्बोधनं वै निखिलसात्त्विकप्रवृत्तिषु प्रगतिशीलनूतनतायाः समुत्पत्तेः कारणम्। तस्याः प्रकाशे हि मनुष्यस्वभावस्य निम्नप्रवृत्तीनां विद्यमानता नैव संभवति। शनैः शनैः स्वयमेव ता विलीनतामुपयान्ति। आदर्शहीनं जीवनं पुनरन्धकारे

यात्रया समानम्, यस्यामवस्थायां मनुष्यः, प्रगतेस्तु का कथा स्वजीवनस्यापि रक्षायामसमर्थो भवति।

आदर्शभावनैव, व्यक्तेः समाजस्य च दृष्ट्या, जीवने वैषम्यस्य घातकद्वन्द्वानां वा अभावस्य स्पृहणीयाया अवस्थायाः प्राप्तेः साधनम्। एतस्या एवावस्थाया नामान्तरं वर्णाश्रमव्यवस्थेति नः प्राचीनशास्त्रेषु प्रसिद्धम्। यथा हि खलु व्यक्तेः समाजस्य च पारस्परिकद्वन्द्वस्य समाधानं वर्णव्यवस्था, एवं वै मनुष्यस्य विभिन्नानां तात्कालिकीनामैन्द्रियिकाणां च प्रवृत्तीनां सामञ्जस्येन प्रगतिशीलतासंपादनमेव आश्रमव्यवस्था।

व्यक्तेः समाजस्य च, व्यक्तिगतविरुद्धप्रवृत्तीनां च घातकं द्वन्द्वं कस्याविदितं मनीषिणः। नूनं तस्य परस्परोन्नायकस्य जीवनप्रदसमन्वयस्य व्यवस्थायाश्च रूपेण परिवर्तनं महानादर्शः तस्यैव महत आदर्शस्य प्राप्तेरात्मनि योग्यतासम्पादनं वास्तविकं द्विजत्वप्राप्तिः। एतस्या एव द्विजत्वप्राप्तेरुद्देश्येन गुरुणोपनीता बालकाः प्राचीनकाले गुरुकुले निवासं चक्रुः।

## शिक्षायां सामाजिकी दृष्टिः

अतश्च समष्टिदृष्ट्या समस्तस्य समाजस्य जातेः राष्ट्रस्य वा हितभावनयैव शिक्षाया मौलिकेन लक्ष्येण भवितव्यम्। शिक्षाद्वारा भावनायामेतस्यां प्रबुद्धायां लब्धभूमिकायां च शिक्षितो जनः कस्यामप्यवस्थायां वर्तमानः—सोऽध्यापको वैद्यो

विधि(=Law)जीवी व्यवसाये रतो वा भवतु, अन्यो वा कश्चन—देशस्य समाजस्य जातेर्वा हितं न कदाचिदुपेक्षितुं प्रभवेत्। वैदिकविवाहसंस्कारे 'राष्ट्रभृद्' आहुतिभिर्वधूवरयोरेवैव राष्ट्रहितभावना दृढीक्रियते। तासामाहुतीनामेष एवाभिप्रायो यत्ताभ्यां प्रतिज्ञातव्यं यत्तयोर्वैवाहिकजीवनस्य लक्ष्यं राष्ट्रहितस्य संपादनमेव भवेदिति।

साम्प्रतिकभारते विभिन्नसामाजिकवैमस्यैः परम्परागतैर्मिथ्यास्वार्थैरनुदारभावनाभिश्च अस्माकमार्यजातौ विशृङ्खलितायाम्, राष्ट्रं समाजं च प्रति समष्टिरूपेण हितभावनाया उद्बोधनस्य महती आवश्यकतेति कस्य तिरोहितं विपश्चितः। अतश्चास्माकं शिक्षासंस्थाभिः स्वकर्त्तव्यत्वेन सर्वतः प्रथममेतद्विचारणीयं यत्कथं नु भारतीयेषु नवयुवसु समस्तं समाजं जातिं राष्ट्रं च प्रति सत्या हितभावनोद्बोधयितुं शक्यते, कथं तेषु एकस्या भारतीयजातेर्गर्वः, यावद्भारतीयम् (भारतीयमात्रे) अकृत्रिमः प्रेमा च संपादयितुं शक्येते, कथं च परम्पराप्राप्तानामनुदारभावनानां विनाशकारिप्रभावात्तेषां रक्षा संभवतीति।

समष्टिदृष्ट्या शिक्षाया महत एतस्यादर्शस्यावहेलनया, लघ्वतिलघुसमाजेष्वेव मिथ्याजातिबुद्धिमाधाय, तेषामेव हितसाधनं च प्रायेणात्मनो लक्ष्यत्वेन गृहीत्वा इयमस्माकं विश्वविजयिनी आर्यजातिः परःशतेभ्यो वर्षेभ्यः परेषां धिक्कारन्यक्कारयोः पात्रीभूता घोरमपमानमसहिष्ट। तेषामेव कुसंस्काराणां विषमयी

आत्मघातिनी प्रवृत्तिरद्यापि तां न मुञ्चति। तस्यैवैष प्रभाव यत्साम्प्रतिकशिक्षादीक्षिता अपि बहवः प्रायेण तस्मिन्नेव कर्दम मये कच्छे पतिता इव दृश्यन्ते। एष एव विषमयः प्रभाव हिन्दुसमाजं जीर्णं शीर्णं च विदधाति। तस्य च दुष्परिणाम समस्तेन देशेन सुतरामनुभूयते।

## शिक्षायां वैयक्तिकी दृष्टिः

व्यक्तिगतजीवनदृष्ट्यापि शिक्षाद्वारा आदर्शभावनाय उद्बोधनस्य सुतरामावश्यकता। व्यक्तिभिरेव समाजस्य निर्मा भवति। एकैकया इष्टकया हि महान्तः प्रासादा निर्मीयन्ते अतः शिक्षायाः साक्षादुद्देश्यं तु व्यक्तिगतपरिष्कार एव। शब्दा न्तरे, एतदेव 'चरित्रनिर्माणम्' इति व्यपदिश्यते।

किं पुनश्चरित्रनिर्माणमिति चेत्, उच्यते। मनुष्ये स्वजीव नादर्शस्य पूर्णं परिज्ञानम्, तस्मिन्नादर्शे निष्ठाविश्वासयो सद्भावः, किं च तस्यादर्शस्य प्राप्तावनुषक्तिः पालने दृढता चेत्येत देव चरित्रनिर्माणमिति मन्तव्यम्। अस्माकमादर्शेषु कार्येषु यद्येकवाक्यता सामञ्जस्यं च न विद्यते, अस्माकमुपदेश आचा च यदि विरोधो दृश्यते, यद्यल्पीयसापि बाह्येनाभ्यन्तरेण प्रलोभनेन, आलस्येन, संकटेन वा स्वकीयादर्शेभ्यो विचलिता भवामः, तर्हि अस्माकं शिक्षायाः किं मूल्यं कश्चोपयोगः?

वैदिकविवाहसंस्करे सामाजिकादर्शभावनायाः सद्भावविष

उपरिष्टादुक्तमस्माभिः। तथैव वैयक्तिकदृष्ट्यापि आदर्शभावनामभिलक्ष्यैव तस्मिन् संस्कारे जयाख्या आहुतयो विधीयन्ते। शारीरिकीमानसिक्यादिशक्तिभिः संपन्नस्य दृढव्रतस्य सत्यनिष्ठस्य च जनस्य समक्षं जीवनस्य सर्वविधा बाधा नतशिरस्का जायन्त इत्येतमेवार्थं वधूवरौ बोध्येते ताभिराहुतिभिः। स्पष्टमेव चायमर्थस्तत्र।

प्रजापतिर्जयानिन्द्राय वृष्णे
प्रायच्छदुग्रः पृतनाजयेषु।
तस्मै विशः समनमन्त सर्वाः
स उग्रः स इ हव्यो बभूव॥

( जयान् = जयसाधकान् मन्त्रान् विजयान्वा। पृतनाजयेषु = विरोधिशक्तीनां जयनिमित्तेन। इन्द्राय वृष्णे = विजयशीलाय शक्तिसंपन्नाय जनाय। प्रायच्छत् = प्रयच्छति। इ = च। हव्यः = स्तुत्यः ) इत्यस्मिन् मन्त्रे प्रतिपाद्यते।

सामाजिकजीवनं वस्तुतः समुन्नतं विधातुमस्माकं व्यक्तिगतजीवने पवित्रता, सत्यता, कर्तव्यपरायणता इत्यादिगुणानां सद्भावस्यात्यन्तमावश्यकता। सा चैषाद्यत्वेऽदृष्टचररूपेणातिमहती। अस्माकं सामाजिकजीवने तदाधारभूतानामेषामुदात्तगुणानां कियती आवश्यकता विद्यते, कियच्चोत्तरदायित्वं तद्विषयेऽस्माकं शिक्षितानामित्यन्तरवेक्षणेन सर्वैरस्माभिरनुभवितुं शक्यते। एतेषां गुणानां विषये हि ग्रामीणाया अशिक्षिताः

याश्च जनताया मार्गप्रदर्शनमस्माकं कर्तव्यं विद्यते। तत्स्थाने तत्प्रतिकूलमेवोदाहरणमुपस्थाप्यतेऽस्माभिः। तदेतद् दौर्भाग्य मस्मद्देशस्य।

शिक्षायां वैयक्तिकदृष्ट्या आदर्शभावनायाश्चरित्रनिर्माणस्य च याथातथ्येन लक्ष्यीकरणेनास्माकं गृहाण्येव शिशूनां कृते शिक्षामन्दिराणां स्थानं ग्रहीतुं शक्नुवन्ति। तस्यामवस्थायां देशस्य समक्षमुपस्थितस्य शिशुशिक्षालयानां 'मान्टेसरी' प्रभृतिपाठशालानां वा विषये आवश्यकस्य प्रश्नस्य प्रायेण बहुतिथं समाधानं स्वत एव संजायते। वास्तविकशिक्षामवाप्तवतोर्मातापित्रोः सम्पर्के गृहस्य पवित्रे वातावरणे वसतां शिशूनां कोमलहृदयेषु सच्चरित्रताया देशभक्तेश्च स्थायिन्याः शिक्षायाः सुखेनैव बीजारोपणं भवितुमर्हति। "मातृमान् पितृमानाचार्यवान् पुरुषो वेद" (अर्थात्, मनुष्यस्य वास्तविकी शिक्षा प्रशस्तेषु मातापित्रोराचार्ये चायत्ता भवति), "पितुर्दशगुणं माता गौरवेणातिरिच्यते" (अर्थात्, बालकस्य शिक्षायां पितुरपेक्षया मातुरत्युत्कृष्टं स्थानं वर्तते) एतादृशां वैदिकादर्शानां सत्यता महत्ता च, शिक्षायां वैयक्तिकादर्शभावनायै चरित्रनिर्माणाय च समुचितस्थानस्य दानेन विना, नैवानुभवितुं शक्यतेऽस्माभिः।

## उपसंहारः

अतश्च भवत्वस्माकं बालकानां कीदृश्यपि विशिष्टा शिक्षा, परं शिक्षाया वास्तविक्याः सफलतायाः कृते आवश्यकमेतद् यत्तेषां

शिक्षायां सामाजिकदृष्ट्या वैयक्तिकदृष्ट्या च उपरिनिर्दिष्टाना-मादर्शभावनानामुद्बोधनस्य समुचितेन स्थानेन भाव्यमिति । वस्तुतः शिक्षाया इयमेव मौलिकी भित्तिः ॥

---

( ३७ )

## भारतीयसंस्कृतौ स्त्रीजातेः स्थानम्

चिरकालिकराजनीतिकपारवश्यतमिस्रातमोऽपहतदृष्टयो भारतीया मूढा इव परप्रत्ययनेयबुद्धयो प्रायेण भारतीयसंस्कृतेः सर्वं स्वरूप-मन्यथाकारं मन्यन्ते ।

भारतीयसंस्कृतौ स्त्रीजातेः किं स्थानमित्यस्मिन् विषयेऽपि तथैव बहूनां मिथ्याप्रत्ययो विद्यते । स्त्रीजातेर्नैव विशेषतः संमाननीयं स्थानमासीद् भारत इत्येव तेषां विचारः ।

नूनमेतद् भारतीयसंस्कृतेरपरिज्ञानमूलकमित्येवानुपदं प्रदर्श्यते ।

भारतीयसंस्कृतिमनुशीलयतां शेमुषीमतां नाविदितमेतद् यद् भारतीयसभ्यतायाः प्रारम्भकालादेव सांप्रतं यावद्, न केवल-मैतिहासिकदृष्ट्यैव, न केवलं शास्त्रीयदृष्ट्यैव, किन्तु व्यवहारदृष्ट्यापि, सर्वदैव भारते स्त्रीजातिर्विशिष्टस्य संमानस्य गौरवस्य च पात्रमासीद् वर्तते चेति ।

ऐतिहासिकदृष्ट्या तावत्—

वैदिकेषु ऋषिषु घोषा-विश्ववारा-लोपामुद्राप्रभृतीनामृषिकाणा उपनिषत्सु गार्गीप्रभृतीनां ब्रह्मवादिनीनाम्, महाभाष्यादिग्रन्थेषु "काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी। काशकृत्स्नीमधी काशकृत्स्ना ब्राह्मणी" (महाभाष्ये ४।१।१४), "उदमेघस्यापत् गोत्रं स्त्री औदमेघी। औदमेघ्याश्छात्रा औदमेघाः" (महाभाष ४।१।७८), "या तु स्वयमेवाध्यापिका तत्र वा ङीष् वाच्यः उपाध्यायी, उपाध्याया।", "आचार्या स्वयं व्याख्यात्री (सिद्धान्तकौमुदी) इत्यादिप्रमाणानामुपलब्धया स्पष्टमत्युच्चम सनमुद्घोष्यते प्राचीनभारते स्त्रीजातेः।

शास्त्रीयदृष्ट्यापि, "जायेदस्तम्' (=जाया वै गृहमित्यर्थ ऋ० सं० ३।५३।४), "गृहिणी गृहमुच्यते", "मातृमा पितृमानाचार्यवान् पुरुषो वेद" (शतपथब्रा०), "पितुर्दशगुर माता गौरवेणातिरिच्यते", इत्यादीनि प्रमाणानि तामेव कथ कथयन्ति।

किञ्च, द्वन्द्वे पूर्वनिपातप्रकरणे "अभ्यर्हितं च पूर्वं निपततीि वक्तव्यम्" इति वार्त्तिकस्य "मातापितरौ" (महाभाष्ये २।२।३४ इत्युदाहरणेनापि पुरुषस्याप्यपेक्षया स्त्रिया विशिष्टगौरवास्पदत्व प्रतीयते। अत एव न केवलं संस्कृतभाषायामेव किन्तु लोक भाषास्वपि 'राधाकृष्ण', 'सीताराम', 'गौरीशंकर,' 'पार्वतीपरमेश्वर'- इत्यादिसमस्तशब्देषु दृश्यमानः स्त्रीनाम्नः पूर्वनिपात उक्तमेवार्थ समर्थयति।

अत्रैतदपि विभावनीयम् । वैदिकदेवतासु इन्द्रादिभिः सहेन्द्राणी-प्रभृतिदेवपत्नीनां सद्भावः, सर्वदेवसाधारणस्यापि 'देवता'शब्दस्य स्त्रीलिङ्गता, प्राकृतिकजगतस्तस्य तस्य विभागस्याधिष्ठातृशक्तेः 'अधिष्ठातृदेवता' इति स्त्रीत्वविशिष्टाधिष्ठातृदेवतारूपेणावगतिः, अन्ततः जगदात्मशक्तेर्निःशेषदेवगणशक्तिसमूहमूर्त्तेः स्थितिसंहार-कारिण्या विश्वेश्वर्या महाशक्तेरपि 'देवी'रूपेण विभावना च— सर्वमेतद् भारतीयसंस्कृतौ स्त्रीजातेरनन्यसाधारणीं संमानभाव-नामेव ख्यापयति ।

व्यवहारदृष्ट्यापि, भारतीयसंस्कृतौ मातृशक्तेर्विशेषतः संमानः स्वाभाविक एवेति स्पष्टतः प्रतीयते । "मातृवत् परदारेषु" इति नीतिकृद्भिरभ्युपगतः सिद्धान्तो व्यवहारेऽपि परस्त्रीषु परदारिकासु च मातः ! भगिनि ! पुत्रि ! इत्यादिशब्दान् प्रयुञ्जानैः पामरैरपि जनैर्भारते वस्तुतः परिपाल्यते । किं बहुना, विशेषतो भगवत्याः सीताया देव्या द्रौपद्याश्चापमानपरिमार्जनार्थं प्रवृत्तयोः रामायण-महाभारतयोर्निर्माणमपि उपर्युक्तसिद्धान्तनिदर्शनार्थमेव जातमिति मन्ये[१] ।

---

१ तथा च वाल्मीकिरामायणम् "काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्" ( १।४।७ )। "पतिव्रतानां नाकस्मात् पतन्त्यश्रूणि भूतले" ( ६।१११।६७ )।

ततश्च स्त्रीजातेः संमानभावना भारतीयसंस्कृतेः परमं वैशिष्ट्य-मित्येव मन्तव्यम् ।।

---

( ३८ )

# अस्माकं तीर्थानि

तीर्थेति शब्दो नानार्थः। तथा चामरः "निपानागमयोस्तीर्थमृषिजुष्टे जले गुरौ" इति। कोशान्तरेषु पुनरन्येऽप्यर्था अस्य दृश्यन्ते। परमत्र प्रकृते नद्यादिसमीपस्थितं पवित्रस्थानमेव तीर्थत्वेनाभिप्रेयते। तथा चोक्तम्—

यथा शरीरस्योद्देशाः केचिन्मेध्यतमा मताः।
तथा पृथिव्या उद्देशाः केचित्पुण्यतमाः स्मृताः ।।
प्रभावादद्भुताद् भूमेः सलिलस्य च तेजसः।
परिग्रहान्मुनीनां च तीर्थानां पुण्यता स्मृता ।।
( शब्दस्तोममहानिधिः )

पृथिव्यां सर्वत्र विभिन्नधार्मिकसंप्रदायानां पवित्रतीर्थानां सद्भावाद् अस्माकमार्यधर्मावलम्बिनामपि तत्तत्संप्रदायभेदेन नैकतीर्थानि विद्यन्त इति सर्वथा स्वाभाविकमेव। अद्यापि परःसहस्रा भारतीयाः श्रद्धया विश्वासेन च सह, नानाविधकष्टानि सहमाना अपि, प्रतिवर्षं तीर्थयात्रार्थं गच्छन्तीति महतः सन्तोषस्य विषयः।

तीर्थयात्राया अनेके लाभा विद्यन्त इत्यन्यत्र प्रतिपादितमेवास्माभिः। तथापि तेषां तीर्थानां विषये बहु वक्तुमवशिष्यते। तदेवात्र प्रपञ्च्यते।

नूनं सर्वैरप्यस्माभिस्तीर्थमेकं तीर्थद्वयं वा तावद् दृष्टं भवेत्। तत्र तीर्थेषु गतवतः प्रायः सर्वस्यापि जनस्य मनसि विचार एष समुदेति यत्तत्तीर्थानां तीर्थत्वेन प्रसिद्धौ तत्रत्यं प्राकृतिकं रामणीयकमेव मौलिकं कारणं भवेदिति। तत्तत्स्थानानां तादृशीमलौकिकीं शोभासंपत्तिमालोक्यैव तदाकृष्टचित्तैरस्मत्पूर्वजैर्ऋषिभिर्मुनिभिर्महात्मभिश्च वननदीपर्वतादीनामभ्याशे नूनं स्वकीया आश्रमा अस्थाप्यन्त। कालान्तरे तेषामेव तीर्थत्वेन प्रसिद्धिरभवत्। परमद्यत्वे हन्त! तेषु प्राकृतिकदृश्येषु प्रायेण विद्यमानेष्वपि न तत्र तादृशमलौकिकं रामणीयकमुपलभ्यते। गया-पुष्करेत्यादितीर्थेषु गतवता केन खलु नैतदनुभूतं भवेत्।

तीर्थानामभ्यन्तरभागे जनाकीर्णपथेषु मालिन्यम्, तत्रत्यजनताया अव्यवस्थितो निवासप्रकारश्च, सर्वथैव तीर्थानां पवित्रतारामणीकयोर्विरोधित्वेन, कस्य मनीषिणो मनो न कदर्थयति। जनताया दारिद्र्यमेवात्र प्रधानं कारणमिति प्रायेण लोकप्रवादः। परं वस्तुतस्तु अद्यत्वेऽपि भारतीयेष्वस्मासु नागरिकताबुद्धेः स्वच्छताभव्यताभावनयोश्चाभाव एव तत्र कारणमिति को नाम प्रत्यवतिष्ठेत?

किञ्च, यद्यपि तीर्थेषु पण्डाख्यतीर्थपुरोहिताः सर्वत्रैव विद्य यथाकथंचिच्च ते यात्रिणां मार्गप्रदर्शका अपि तत्र भवन्ति, तथ सुदूरदेशदेशान्तरेभ्य आगतान् सर्वथा च तेषु प्रत्ययमादध यात्रिणः प्रति तेषां व्यवहारो न तादृशो दृश्यते यादृशेन भवितव्यम्। नायं विषयो बहु विवरणमपेक्षते। नानाविधकष्टज सोढ्वा, प्रायेण महान्तं धनव्ययं च कृत्वा विभिन्नप्रदेशेभ श्रद्धावशादागतानां यात्रिणां सभ्यैः सुशीलैर्विश्वासभाज सच्चरित्रैर्विनम्रैश्च तीर्थपुरोहितैः सर्वथा साहाय्यं विधेयमिति नाम नानुमोदिष्यते।

अन्यच्च, अद्यत्वे हि परम्पराप्राप्तमैतिह्यं तन्मूला च लोका तेषु पवित्रताभावना, एतावन्मात्रं प्रायेण तीर्थानां संपत्तिरवशिष्ट नैव तत्र प्राचीनकाल इव तपःस्वाध्यायनिरतैर्दान्तैः शान्तै महात्मभिर्मनीषिभिश्च कृताधिवसतय आश्रमा विद्यन्ते, न चा सुव्यवस्थितत्वेन विद्यमानमन्यत्किञ्चिदेतादृशं संस्थानं प्रायेणावल क्यते यतस्तत्र गतवतां यात्रिणां मनःसु विद्याया ज्ञानस्य वा धर्मस वा कृते काचिद्विशिष्टा प्रेरणा प्रोत्साहनं वा समुत्पद्येत। भवन्तु ना कानिचिद्देवमन्दिराणि तत्र। तद्दर्शनेन च श्रद्धालुजनैः काचिद ध्यात्मिकी शान्तिर्लभ्येत। परन्तु प्रायेण तेषु देवायतनेषु वास्तवि क्याः स्वच्छताया भव्यतायाश्चाभावात् सामान्यजनतायाः, विशेषतः साम्प्रतिकविचारैः प्रभावितचेतसां सचेतसां, मनःप्रसाद नैव जायते।

तदेतादृश्यां हृदयावसादकर्यामस्माकं तीर्थानामवस्थायां विद्य

मानाया सर्वेषा तीर्थेष्वास्थावतामास्तिकजनाना गम्भीरविचारस्याय विषयो यत्कथ नु तेषा गौरवस्य मर्यादायाश्च रक्षा कर्तु शक्यते । अत्र विषयेऽस्माक मत तु एतद्यत् सर्वत प्रथम तत्रत्यनगरपालिकानामेतदपरिहार्यत्वेन कर्तव्यं भवेद् यत्तीर्थाना भव्यताया स्वच्छतायाश्च सवर्धनार्थं सर्वेऽपि समुचिता उपाया अवलम्बनीया इति ।

अपि च, तीर्थपुरोहिताना न केवल नियन्त्रणमेव, किन्तु तेषु शिक्षाया शीलस्य यात्रिण प्रति कर्तव्यपालनस्य सेवायाश्च बुद्धे समुत्पादनमपि, नगरपालिकाना शासनस्य च प्रधानं कर्तव्यम् ।

किञ्च, भारते धर्मप्राणजनतया विशेषत एतद्विभावनीय यत्प्रतिवर्ष धर्मस्य कृते दानादिरूपेण व्ययीक्रियमाणस्य कोटिकोटिधनस्य सदुपयोगस्तीर्थेषु ज्ञानस्य विद्याया धर्मस्य च प्रोत्साहनार्थं सुव्यवस्थिताना विविधसस्थानाना स्थापनाया सचालने चैव विद्यत इति ।

नूनमेतेषामुपायानामवलम्बनेन तीर्थानि न केवल शरीरस्वास्थ्यस्य चित्तनिर्वृतेर्वा लाभार्थमेव, किन्तु घोरनास्तिकेष्वप्यास्तिकताबुद्धे प्रचारार्थमपि, अद्वितीयसाधनानि भवितुमर्हन्ति ॥

---

## ( ३९ )

# सांप्रदायिक्यसहिष्णुता तत्प्रतीकारश्च

चिरकालादेव हि भारतवर्षे सांप्रदायिकासहिष्णुताया ज भूमिरिव प्रतीयते। आर्यधर्मावलम्बिष्वपि पुनरतितरामुपलभ्यम सा कदर्थयति देशहितैषिणां चेतांसि। 'वयमास्तिका यूयं नास्तिक 'वयं वैदिका यूयमवैदिकाः', 'अस्माकं सम्प्रदायः प्राचीनतमो युष्म पुनर्नवीनः, किञ्चित्कालादेव प्रचलितः' इत्येवं परस्परमधिक्षिपः साम्प्रदायिकाः केन न श्रुता भवेयुः। तत्तत्संप्रदायनामोल्लेखपू तत्तत्सिद्धान्तखण्डनप्रवृत्तानां ग्रन्थानां नामसु 'मुखभङ्गः', 'क मर्दनम्', 'मुखचपेटिका' इत्यादिपदविन्यासोऽपि तादृश्या ए सहिष्णुताया लज्जास्पदं निदर्शनम्।

वर्तमाने काले समुन्नतदेशेषु तत्तदनुदारसाम्प्रदायिकभावना प्रतिदिनमुपक्षीयमाणास्वपि, अस्मासु भारतीयेष्वेव राष्ट्रियभावन भ्रशकरोऽसहिष्णुतायाः सद्भावः कस्य नाम देशहितैषिण आर्यधम भिमानिनो मनस्तापं न तनुते।

तस्या एतस्या असहिष्णुतायाः किं कारणं कश्च तत्प्रतीका इत्येतदेवात्र विचारविषयः।

तदत्र आपाततः परस्परं विरुद्धत्वेन प्रतीयमानेष्वपि शैव शाक्तवैष्णवजैनबौद्धप्रभृतिषु नानासंप्रदायेषु एकसूत्ररूपेण

व्यापाया भारतीयमौलिकसंस्कृत्याः स्वरूपस्यापरिज्ञानमेव तस्या मुख्यं कारणमिति संक्षेपेण वक्तुं शक्यते। तत्स्वरूपं चोपवर्णित-मुपरिष्टादस्माभिः।

अत्रैतदपि विभावनीयम्। इतिहासविदामतिरोहितं यत्काल-क्रमेण तत्तदवस्थावश्यकतानुरूपं स्वभावत एव नूतना नूतनाः सम्प्रदायाः सर्वेषु देशेषु प्रवर्तन्ते। परम्परागतमर्यादाया विरोधि-त्वभावना तेषु किञ्चित्कालपर्यन्तमेव जनताया जायते। किञ्चित्का-लातिपाते तु तेषां तस्यामेव मर्यादायामन्तर्भावः समावेशश्च प्रायः सर्वत्र क्रियते। ततश्च साम्प्रदायिकी असहिष्णुता सर्वथा अवि-चारमूला। अत एव तत्त्वविदो विचारशीला विद्वांसः तेषु तेषु सम्प्रदायेषु व्यापिन्या एकस्या भारतीयसंस्कृत्या भावनयैव भावितचित्ता उदारहृदयाः परस्परं सहिष्णुताभावस्यैवाभिवृद्धिम-भिवाञ्छन्ति।

अपरं च। संप्रदायेषु परस्परं भेदः प्रायेण तस्य तस्य तत्त्वस्य विषये सांप्रदायिकपरिभाषाकृत एव भवति। एवं चान्ततः स भेदो भाषाया विलास एव पर्यवस्यति। यतो हि आध्या-त्मिकानां दार्शनिकानां च तत्त्वानां परिशीलने भाषा प्रायेण परिभाषारूपेणैव कार्यकरी भवति। यथा हि तत्तच्छास्त्रेषु व्यवहारसौकर्यार्थं पारिभाषिकशब्दानां कल्पना संकेतो वा क्रियते, तथैव खल्वाध्यात्मिके दार्शनिके च जगति शाब्दिकरूढीनामाश्रयेण तत्तत्प्रमेयाणां प्रतिपादनं क्रियते। एवं भाषा तत्त्वस्य स्वरूपे कमपि भेदमनादधती केवलं तस्य विभिन्नपक्षानेव प्रतिपादयति। अतश्च "शब्दब्रह्मातिवर्त्तते" इत्यनुसारं भाषायाः स्तरम् (लोकं, पदवीं वा)

अतिक्रान्तस्य तत्त्वदर्शिनः स्थितप्रज्ञस्य दृष्टौ—वेदान्तस्य 'ब्र
नीति(=कर्तव्य)शास्त्रस्य 'सत्यम्', बौद्धदर्शनस्य 'ध
(=धम्मो), मीमांसादर्शनस्य 'कर्म', तन्त्रशास्त्रस्य 'शक्ति
गीताशास्त्रस्य च 'अहम्' अथवा 'वासुदेवः'—सर्व एते पारिभाषि
शब्दा वस्तुत एकस्यैव मौलिकस्य तत्त्वस्य तत्तद्दृष्टिभे
प्रतिपादकाः।

मनुष्येण रचिता हि भाषा, या हि

"वाग्वै मनसो ह्रसीयसी। अपरिमिततरमिव हि मन
परिमिततरेव हि वाक्" (शतपथब्राह्मणे १।३।६)
एतच्छ्रुत्यनुसारं विचाराणां प्रकटीकरणार्थमपूर्णमेकं साधन
स्वतःसिद्धस्य मौलिकतत्त्वस्य प्रतिपादिकैव भवितुमर्हति,
तूत्पादिका।

अत्रैते श्लोका भवन्ति—

यतो भूतानि जायन्ते यत्र तेषां लयो मतः।
यदाश्रयेण तिष्ठन्ति तत्त्वं तन्नित्यमव्ययम्॥ १॥
भाषासीमामतिक्रम्य ज्ञानगम्यं कथंचन।
स्वयम्भु, वस्तुतो नाम्ना रहितं तद्धि वर्तते॥ २॥
तन्नामविषये मन्दास् तत्तद्रूढिवशान्मुधा।
विवदन्ते, तदाश्चर्यमुपहासकरं महत्॥ ३॥
नियतो विषयो वाचोऽनियतो मनसस्, ततः।
ह्रसीयसी हि वागुक्ता मनसोऽपेक्षया श्रुतौ[1]॥ ४॥

---

[1] तथा च शातपथी श्रुतिः—"वाग्वै मनसो ह्रसीयसी। अपरिमि
तरमिव हि मनः। परिमिततरेव हि वाक्।"

तत्त्वं स्वभावतः सिद्धं गुणग्रामनिकेतनम् ।
गुणमेकं समाश्रित्य पुनर्नाम प्रवर्तते ॥ ५ ॥
न विद्यते ततो नाम त्रिषु लोकेषु तादृशम् ।
तत्त्वोपवर्णने शक्तं साकल्येन भवेत्तु यत् ॥ ६ ॥
अन्वर्थवाचकं सर्वं नाम तत्त्वस्य विद्यते ।
नैत्र रूढ, ततस्तेन विशेषगुण उच्यते ॥ ७ ॥
रुचिभेदाद्धियो भेदादथवा संप्रदायतः ।
तत्त्वस्य विषये दृष्टेर्भेदः समुपजायते ॥ ८ ॥
दर्शनानि विभिन्नानि संप्रदायास्ततोऽपरे ।
समुत्पन्नानि लोकेऽस्मिन् दृश्यन्ते यत्र तत्र वै ॥ ९ ॥
परिधानीयवस्त्राणां भोज्यानां चैव निश्चितम् ।
प्रकारेषु महान् भेदो देशभेदेन दृश्यते ॥ १० ॥
तत्तत्कारणसत्त्वेऽपि तत्र भेदे, न मौलिकः ।
अभिप्रायो मनुष्याणां भेदमापद्यते क्वचित् ॥ ११ ॥
रुचकादिप्रकारेण भिन्नाकारानुपेयुषः ।
सुवर्णस्य सुवर्णत्वं हीयते न कदाचन ॥ १२ ॥
एवं सत्यपि दृष्टीनां विभेदे दर्शनादिषु ।
तत्त्वं स्वरूपतः स्थायि कूटस्थं चैव वर्त्तते ॥ १३ ॥
एकस्यैव प्रमेयस्य परिभाषान्तरं यथा ।
क्रियते शास्त्रभेदेन तथा तत्त्वेऽपि दृश्यताम् ॥ १४ ॥
सत्यं ब्रह्म परं धाम कर्म 'धर्म्मं' प्रजापतिः ।
शक्तिर्माता शिवो विष्णू राम ओंकार एव च ॥ १५ ॥

प्रेमेत्यादि पदं मूलतत्त्ववाचि न संशयः ।
तदेव तत्त्वं गीतायामहंशब्देन कथ्यते ॥ १६ ॥

( प्राज्ञगीतायाः

सर्वमेतत्पश्यतां वै मनीषिणां सांप्रदायिक्यसहिष्णुता मूर्खताया अज्ञानस्यैव च विजृम्भितम् ।

ततश्च राष्ट्रस्यैक्यमेकस्या भारतीयसंस्कृतेश्च भावनायाः मभिवाञ्छद्भिः सांप्रदायिक्यसहिष्णुता समूलमुन्मूलनीया ॥

---

( ४० )

# गीतायाः कर्मणो यज्ञस्य च स्वरूपम्

कर्तव्याकर्तव्यशास्त्रं कर्मशास्त्रं वा गीतेति प्रायेण सर्वस सिद्धान्तः । तस्या एष एव विशिष्टप्रतिपाद्यविषयो यन्मनु कर्म, न केवलं कर्तव्यबुद्ध्यैव अनासक्तबुद्ध्यैव वा, किन्तु रार्पणबुद्ध्या अथवा भक्तिभावनयापि विधेयमिति । तथा हि

तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥
कर्मणैव हि संसिद्धिमास्थिता जनकादयः । ( ३।१९-२
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ ( ९।२७ )

एवमनासक्तबुद्धया तथेश्वरार्पणबुद्धया विहितस्य कर्मणो महिमा गीतायामसकृद् वर्णितः। किञ्च,

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्॥ (३।१०)
यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम॥ (४।३१)

एवं यज्ञस्यापि गुणगरिम्णो भूयो भूयः संकीर्तनं तत्र क्रियते।

परंतु गीताया मौलिकसिद्धान्तो याथार्थ्येन बुद्धयारूढो भवेदित्येतदर्थं कर्मणो यज्ञस्य च वास्तविकस्वरूपस्यावबोधोऽत्यन्तमावश्यकः। शब्दविषयकरूढिवादस्य प्रभावेणैव तपोदानदयास्वर्गवर्णाश्रद्धाप्रभृतिशब्दानामिव कर्मयज्ञेतिशब्दयोरप्यर्थविषयेऽस्माकं समाजो वास्तविकताया अतिदूरं नीतो वर्तते। अस्माकं धर्मशास्त्राण्यपि नात्र विषयेऽपवादाः। रूढिमूलकस्यैतस्यैव परम्पराप्राप्तस्य भ्रमस्यापाकरणार्थं गीतायां श्रद्धादानतपःप्रभृतिशब्दैः सह कर्मयज्ञेतिशब्दयोरपि वास्तविकमर्थं स्पष्टयितुं सुमहत् प्रयतितम्।

तत्र कर्मविषये गीता स्पष्टमुद्घोषयति—

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः। (४।१६)

अर्थात्, कर्मणोऽकर्मणश्च वास्तविकस्वरूपस्यावगमे कवयो विद्वांसोऽपि भ्रान्ता दृश्यन्ते, सामान्यजनानां तु का कथा।

सामान्यरूपेण कर्मशब्दो यज्ञादिकर्मकाण्डस्य देवार्चनादि-

कर्मणो वा वाचकत्वेनैव गृह्यते। परन्तु गीतायां यस्य क
स्वरूपं विचार्यते तेन तु जीवनस्य विभिन्नक्षेत्रेषु पिता
जायापति-गुरुशिष्य- सेव्यसेवक - नागरिकतादिसांसारिकसं
प्रेरितेन मनुष्येण क्रियमाणानां सर्वविधकर्मणां संग्र
भीप्सितः। यज्ञादिकर्मकाण्डं तु तस्यैव व्यापकजीवनस्य सा
रूपः संभारः, अथवा प्रतीकमेव। यथा ह वै स्वल्पकाल
प्रत्यहं कृतः शारीरिको व्यायामो यावद्दिवसं कर्मकरणाय शरीर
स्वास्थ्यसंरक्षणद्वारैवोपयोगी, एवमेव खलु सर्वस्यापि धार्मि
कर्मकाण्डस्योपयोगः साफल्यं च मनुष्यस्योच्चभावनानां परिपु
तद्द्वारा च जीवनस्य पवित्रतासच्चरित्रयोः संपादन एव विद्य
एतादृश्या भावनया विरहितं हि कर्मकाण्डं देवार्चनादि
स्वयमेव जीवनस्य लक्ष्यं सत्, बाहुल्येन दम्भमानलोभपाषण
परप्रतारणाभावैः संचालितम्, शनैःशनैरादर्शहीनजटिल-क्रियाकला
रूपेण च परिणमत्, व्यक्तिगतानां समाजगतानां वा उदात्तभा
नानां नैतिकतायाश्च नैव परिपोषकं भवितुमर्हति, किन्तु घातकं
संजायते। तस्यामवस्थायां हि किञ्चिन्मात्रेणैव पूजापाठादि
मनुष्यः कृतकृत्यतामासादयितुं शक्नोति, तस्य प्रात्यहिकजीवन
कर्तव्यकर्मणामाध्यात्मिकेन नैतिकेन वा जीवनेन नहि कोऽपि संब
इत्येष विचार एव जनतायाः संजायते। एतादृशमेवादर्शहीं
यज्ञादिकर्मकाण्डं गीतायां तामसत्वेन राजसत्वेन वा वर्ण्यते, नैव
प्रकारेण च तस्य भर्त्सना क्रियते। एतादृश एव निरुद्देश्यके क
काण्डे रतानां विषय उच्यते—

नैनं छन्दांसि वृजिनात्तारयन्ति
मायाविनं मायया वर्तमानम् ।
नीडं शकुन्ता इव जातपक्षाश्
छन्दांस्येनं प्रजहत्यन्तकाले ॥

( विदुरनीतौ ३।४२ )

सर्वस्यापि, लौकिकस्य धार्मिकस्य वा, कर्तव्यस्य कर्मणो महत्त्वं केवलं तस्मिन् कर्मणि प्रवृत्तस्य मनुष्यस्य भावनाधीनम् । कर्मकरणे प्रवृत्तो हि मनुष्यो विद्वान् वा, पण्डितो वा, ब्राह्मणो वा, संपत्तिशाली वा, साधारणातिसाधारणकार्यकरः शूद्रो वा, 'हरिजनो' वा भवतु, तस्योच्चताया नीचतायाश्च निर्णयो गीतयैतयैव दृष्ट्या विधास्यते । नूनं धर्मव्याधादिकथानामस्मत्पुराणादिसाहित्य उपवर्णितानामेष एवाभिप्रायः ।

समानैव कथा यज्ञशब्दस्यापि वर्तते । तस्यापि वास्तविकमर्थं विस्मृत्य वयं चिराय संकुचित एवार्थे तस्य प्रयोगं कुर्मः । अग्नावाहुतीनां प्रक्षेप एव नहि तस्य मौलिकोऽर्थः । वास्तविकयज्ञभावनायाः समयभेदेन केवलमेकं प्रतीकं तत्कामं भवतु । यज्ञस्य नानाभेदान् प्रदर्शयन्ती गीतैव स्वयमाह—

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥
श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन् विषयानन्य इन्द्रियाग्निषु जुह्वति ॥

सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥
द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥
अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥
अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति ।
.....................................
एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ॥
(४।२५-३०, ३२)

अल्पज्ञस्य स्वभावत इन्द्रियपरायणस्य तथा स्वार्थसाधं तत्परस्य मनुष्यस्य स्वकीयनिम्नप्रवृत्तीनां विजयोद्देश्येन जगत पोषणकर्त्रीभिः स्वभावतः परार्थप्रवृत्ताभिर्दैवीभिः शक्तिभिरथव दैव्या शक्त्या स्वसंपर्कस्य स्थापनमेव यज्ञस्य वास्तविकोऽर्थः

"यज देवपूजासंगतिकरणदानेषु" इत्येषामर्थानामप्यत्र संगति संजायते। दानेन खलु महत्याः शक्तेः समक्षमात्मनः समर्पण मेवाभिप्रेयते। उपर्युक्तसंपर्कश्च निःस्वार्थलोकसेवाद्वारैव स्थापयित् शक्यते। अयमेवार्थो गीतायामेवमुपवर्ण्यते—

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥

देवान् भावयतानेन ते देवा भावयन्तु वः।
परस्पर भावयन्तः श्रेयः परमवाप्स्यथ ॥ ३।१०–११

ऐतरेयब्राह्मणादिग्रन्थेषु अस्मिन्नेवार्थे 'भावनायज्ञ' इति शब्दः प्रयुक्तो दृश्यते। भवति चात्र श्लोकः—

भावनाकुसुमैरीडे तत्तेजः शाश्वतं महत्।
सवितृरूपेणात्मा वै जगतस्तस्थुषश्च यत् ॥
(प्राज्ञगीतायाः)।

एतादृशेन हि यज्ञेन गीताया मतेन

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्। (५।२९)
श्रेयान् द्रव्यमयाद् यज्ञाज् ज्ञानयज्ञः परन्तप। (४।३३)

इत्यनुसारं यज्ञतपसां भोक्तुर्भगवतः परमेश्वरस्य भक्तिः पूजा च कर्तुं शक्येते। वस्तुतस्तु गीतानुसारं कर्तव्यबुद्ध्या ईश्वरार्पणबुद्ध्या च कृतं कर्मैव तात्त्विको यज्ञः ॥ॐ

———

१ प्रबन्धप्रकाशस्य द्वितीयभागे प्रकाशिताद् "भगवद्गीतायाः स्वरूपम्" इत्याख्यनिबन्धादुद्धृतोऽयं लेखः।

( ४१ )

# ❀जैनविद्वांसः संस्कृतसाहित्यं च ।

संस्कृतभाषाया अभ्युन्नतिः कथं भवेदित्येष विचारोऽद्य सर्वेषां संस्कृतभाषानुरागिणां मनःसु जागर्त्ति। नानादृष्टिभिरस्य प्रश्नस्य विषये विचारः कर्तुं शक्यते। परन्नात्र तदवसरः। केवलः कामेव दृष्टिं पुरस्कृत्य किंचिदत्र विचार्यते। सा चेयं यत्संस्कृ भाषानुरागिभिः संस्कृतस्य पठनपाठनविषये सांप्रतिक्या विचा संकीर्णतायाः परित्यागो विधेयः। अन्यथावनतिगर्ते पतित जीर्णशीर्णशरीरा सा संस्कृतभाषास्मिन् सर्वथाननुकूले का कदाचिदपि भूयोऽभ्युन्नतिमुखी भविष्यतीति दुराशामात्रमेव

भारतीयार्यधर्म इव संस्कृतभाषापि सर्वेषामप्यस्माकमार्यधम वलम्बिनां वरिष्ठः शेवधिर्गर्वस्य च विषयः। एको हि आर्यधर्मवृक्षो ऽसंख्यशाखाप्रशाखारूपेणातिविस्तृतः. "सहस्रशीर्षा पुरुष सहस्राक्षः सहस्रपात्। स भूमिं सर्वतः स्पृत्वात्यतिष्ठद् दशाङ्गुलम्॥" ( यजुर्वेदे ३१।१ ) इत्यादिश्रुतिभिर्गीयमानविराट्पुरुष इव, नाना रूपैः पल्लवितः पुष्पितः फलितश्च साम्प्रतं समन्ताद्भारतभूमिमलं करोति। एतद्दृष्ट्या हि सोऽपि "एकोऽश्वत्थः सनातनः" ( भग

---

❀ जैनाचार्यात्मानन्दजन्मशताब्दीस्मारकग्रन्थादुद्धृतो ग्रन्थकृतो लेखः।

चद्गीतायाम् ) इत्येवं वर्णयितुं शक्यते। शैव-वैष्णव-जैन-बौद्ध-सिक्खप्रभृतयः सर्वेऽपि भारतीयधर्मास्तस्यैव शाखाप्रशाखा-रूपाः। भारतीयसंस्कृतीत्यपरनामा एक एव जीवनरसस्तान् सर्वानाप्याययति परिपोषयति च, तेषां सर्वेषामन्यधर्मेभ्यः किञ्चिदनिर्वचनीयं वैशिष्ट्यं च संपादयति।

तस्य खलु भारतीयसंस्कृतीत्यपरनामधेयस्य भारतीयजीवना-यामृतकल्पस्य जीवनरसस्य सर्वकामदुघा दोग्ध्रीवेयमस्माकं मातृरूपा देववाणी। अत एव तस्याः परिपोषणेनैव भारतीय-संस्कृतेः परिपुष्टिः, तदनुयायिनां सर्वेषामार्यधर्मावलम्बिनामस्माकं सर्वाङ्गीणा समुन्नतिश्च संभवति।

कस्यैतदविदितं यत्प्रायः सर्वेषामप्यार्यधर्मावलम्बिनां धार्मिकं साहित्यं प्राचुर्येण संस्कृतभाषायां वर्तते। प्रायः सर्वेषामप्यार्य-धर्माणामनुयायिभिराचार्यैरस्याः साहित्यभाण्डारस्य परिपूर्त्तिः प्राचीनकालादेव कृतास्ति। ततश्चास्याः समुन्नतिविषये सर्वैरप्यार्य-धर्मानुयायिभिः प्रयत्नो विधेय इत्यर्थादापद्यते।

तत्र संस्कृतसाहित्यस्याभिवृद्धये जैनधर्मस्याचार्यवर्यैर्यत्कृतं न तत्कस्यापि तिरोहितम्। स्वसंप्रदायपरिपुष्टये यत्तावत् तेषां दर्श-नादिविषयकमत्यद्भुतं विपुलं च वाङ्मयं तत् सहसैव तात्त्विक-विदुषां साधुवादानामभ्यर्हणायाश्च पात्रम्। तदाधारेण परस्परस्पर्ध-येव समुन्नतमन्यदपि नो दर्शनशास्त्रं परम्परया तदृणि। नात्र तद्विषये किञ्चिद्वक्तुमभीप्सितम्। परन्तु सामान्यसाहित्यविषयेऽपि

जैनाचार्यैः संस्कृतभाषाया यन्महदुपकृतं तदपि अत्यद्भुतं सर्वथ प्रशंसास्पदं च ।

व्याकरणविषय एव तावत् कस्याविदितं यन्माधवाचार्यहरदत्त मिश्रकैयटसदृशानां वैदिकधुरन्धराणामपि चिराय बहुमता काशिकेति सुप्रथिता अष्टाध्यायीसूत्रवृत्तिर्वामनजयादित्ययोर्जैनाचार्ययोरेव कृतिः । सुप्रसिद्धा न्यासेतिनाम्नी तट्टीका च जिनेन्द्रबुद्धेर्जैनाचार्यस्यैव कृतिः । दिगन्तविश्रान्तकीर्त्तेः श्रीहेमचन्द्राचार्यस्य कृतेर्हेमचन्द्रशब्दानुशासनस्य वा नाम केन न श्रुतम् ?

कोषविषयेऽपि अर्वाचीनानां नानाकोषानामुपजीव्यस्य दिष्ट्या सांप्रतमपि संस्कृताध्येतृभिः सबहुमानमनवरतमभ्यस्यमानस्य अमरकोषस्य जैनाचार्यकर्तृकत्वं कस्याविदितम् ? श्रीहेमचन्द्राचार्यविरचिता वा नानाकोषाः केन न श्रुताः ?

गद्यपद्यकाव्यविषयेऽपि मान्यैरुदात्तचरितैर्जैनाचार्यैः प्रणीतानि "आत्मानुशासनम्", "धर्मशर्माभ्युदयः", "सुभाषितरत्नसंदोहः" "क्षत्रचूडामणिः", "विदग्धमुखमण्डनम्", "यशस्तिलकचम्पूः" "जीवन्धरचम्पूः" इत्यादीनि शब्दसौन्दर्येण रचनाचातुर्येणार्थप्रौढ्या च विद्वन्मनांस्यावर्जयन्ति । कादम्बर्यादिकाव्यनिबन्धानां जैनाचार्यकृताष्टीका अपि सर्वेषामतीवोपयोगिन्यः कैर्नाम नितरां नाद्रियन्ते ?

अलंकारशास्त्रेऽपि "अलंकारचिन्तामणि" प्रभृतयस्तेषां कृतयः कृतिना केन नाकर्णिताः ?

तदेतेन दिङ्मात्रप्रदर्शनेनैवानुमातुं शक्यते यत्सामान्यसाहित्य-विषयेऽपि जैनाचार्यैः कीदृशी संस्कृतभाषायाः सेवा कृता। तदर्थं हि ते सर्वेषामपि संस्कृतप्रणयिनां धन्यवादार्हाः।

एवं प्राचीनकालादेव संस्कृतभाषायाः समुन्नतिविषयेऽस्माकं पूर्वाचार्याणां सद्भावनया परस्परं संभूयैव कार्यकारिणामत्युदारा प्रवृत्तिरासीत्। सा चेयं प्रवृत्तिर्भूयोऽपि यथा पुष्टिं समश्नुते, यथा च संस्कृतपठनपाठनविषये विदुषां छात्राणां च विचाराः संकीर्णतां विहाय उदारतां लभन्ते तथैवास्माभिरनवरतं प्रयतनीयम्॥

इति प्रवन्धप्रकाशस्य प्रथमभागे
निवन्धनिदर्शनं नाम
द्वितीयोल्लासः॥

---

( १ )

## कृशे कस्यास्ति सौहृदम् ?

लोकवृत्तविदः प्रायः सर्वस्यापि जनस्यायमनुभवो यद् दुर्ब कस्यापि सौहृदं न भवति। तथा चोच्यते—

वनानि दहतो वह्नेः सखा भवति मारुतः।
स एव दीपनाशाय कृशे कस्यास्ति सौहृदम् ॥
अश्वं नैव गजं नैव व्याघ्रं नैव च नैव च।
अजापुत्रं बलिं दद्याद् देवो दुर्बलघातकः ॥

"तिमींस्तिमिङ्गिलो गिलति।"

"दुर्बलान् बलिनो भक्षयन्ति पीडयन्त्येष वै मात्स्यन्यायः।"

नास्ति खलु जगति दुर्बलताया गुरुतरं पातकम्। अत ए मनुष्येण सर्वथा शक्तिसंपन्नेन, बलवता, तेजस्विना, आत्मरक्ष समर्थेन, शत्रुसाहेनारिमर्दनेन च भवितव्यमित्यसकृद् मन्त्रवर्णान माघोषः। तथा हि—

तेजोऽसि तेजो मयि धेहि, वीर्यमसि वीर्यं मयि धेहि, बलमसि बलं मयि धेहि, ओजोऽस्योजो मयि धेहि, मन्युरसि मन्युं मयि धेहि सहोऽसि सहो मयि धेहि ॥ ( यजुर्वेद० १९।९ )

धूर्व धूर्वन्तं, धूर्व तं योऽस्मान् धूर्वति ॥ ( यजु० १।८ ) ( धुर्वी हिंसार्थः । धूर्वन्तम् = हिंसन्तम् । धूर्व = विनाशय हिन्धि । )

अत एव च "इन्द्रस्य नु वीर्याणि प्रवोचम्" ऋग्वेद० १।३२।१) इत्यादिमन्त्रेषु पौरुषमुखेनैव इन्द्रप्रमुखा देवाः स्तूयन्ते ।

अत एव च भारते गृहे गृहे—

या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

इत्येवं शक्तेर्महादेव्या नमस्कारैरावाहनं जागर्ति ।

---

( २ )

## आर्जवं हि कुटिलेषु न नीतिः

आध्यात्मिकदृष्ट्या हि आर्जवस्य परमं माहात्म्यमिति नाविदितं विदुषाम् । तथापि सत्यानृतव्यवहारमयेऽपूर्णेऽस्मिन् जगति तस्यापि प्रदर्शनेऽवसरस्य औचित्यानौचित्यविचार आवश्यक इति वै नीतिविदां सिद्धान्तः । अत एवोच्यते—

"आर्जवं हि कुटिलेषु न नीतिः" ।

एष एवार्थः "मायाचारो मायया वर्त्तितव्यः साध्वाचारः साधुना प्रत्युपेयः", "कण्टकेनैव कण्टकम्", "दुष्टे दुष्टं समाचरेत्", 'बिल्वं बिल्वेन हन्यताम्" इत्येवं शब्दान्तरैः प्रतिपाद्यते । भवन्ति चात्र विषये कवीनामुक्तयः—

सत्सु सज्जनता कार्या शठे शाठ्य समाचरेत् ।
त्वया मे लुञ्चिता केशा मया ते मुण्डित शिर ॥

व्रजन्ति ते मूढधिय पराभव भवन्ति मायाविषु ये न मायिन
प्रविश्य हि घ्नन्ति शठास्तथाविधानसवृताङ्गान्निशिता इवेषव ।

विधाय वैर सामर्षे नरोऽरौ य उदासते ।
प्रक्षिप्योदर्चिष कक्षे शेरते तेऽभिमारुतम् ॥
शाम्येत् प्रत्युपकारेण नोपकारेण दुर्जन ॥
पय पान भुजङ्गाना केवल विषवर्धनम् ॥

"ये यथा मा प्रपद्यन्ते तास्तथैव भजाम्यहम् ।" भगवद्गीतार भगवत एषा उक्तिरपि प्रकारान्तरेण प्रकृत सिद्धान्तमे समर्थयति ॥

---

( ३ )

## ज्यौतिषशास्त्रस्य महत्त्वम्

"प्रत्यक्ष ज्योतिष शास्त्र चन्द्रार्कौ यत्र साक्षिणौ" इत्युक्त नुसार प्रत्यक्षसिद्ध ज्योतिषशास्त्रस्य महत्त्व नैव विशेषतः प्रतिपादन मपेक्षते ।

न केवलं लौकिके व्यवहार एव तस्य निरन्तरमपेक्षा, किन्तु तत्तद्धार्मिककृत्येष्वपि पदे पदे तस्योपयोगो दृश्यते। अत एव तस्य वेदाङ्गत्वं वेदाङ्गेषु च मुख्यत्वं स्मर्यते। तथा हि—

शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः।
छन्दसां लक्षणं चैव षडङ्गो वेद उच्यते॥ (बृहत्संहिता)।

क्रतुक्रियार्थं श्रुतयः प्रवृत्ताः कालाश्रयास्ते क्रतवो निरुक्ताः।
शास्त्रादमुष्मात्किल कालबोधो वेदाङ्गता मुख्यतरा प्रसिद्धा॥
छन्दः पादौ शब्दशास्त्रं च वक्त्रं कल्पः पाणी ज्योतिषं चक्षुषी च।
शिक्षा घ्राणं श्रोत्रमुक्तं निरुक्तं वेदस्याङ्गान्याहुरेतानि षट् च॥
वेदचक्षुः किलेदं स्मृतं ज्योतिषं मुख्यता चाङ्गमध्येऽस्य तेनोच्यते।
संयुतोऽपीतरैः कर्णनासादिभिश्चक्षुषाङ्गेन हीनो न किञ्चित्करः॥
(वसिष्ठः)

तस्माद् द्विजैरध्ययनीयमेतत्पुण्यं रहस्यं परमं च तत्त्वम्।
यो ज्योतिषं वेद नरः स सम्यग् धर्मार्थमोक्षं लभते यशश्च॥
(भास्करः)

किञ्च, गणितं हि ज्योतिषस्य मुख्यमालम्बनं तत्प्राणा एव वा। तस्य च सर्वविधव्यापारेषु महती अपेक्षा कस्य तिरोहिता। तथा च स्मर्यते—

यथा शिखा मयूराणां नागानां मणयो यथा।
तद्वद्वेदाङ्गशास्त्राणां गणितं मूर्धनि स्थितम्॥ (सूर्यसिद्धान्तः)
लौकिके वैदिके वापि तथा सामयिकेऽपि वा।
व्यापारस्तत्र सर्वत्र संख्यानमुपयुज्यते॥

बहुभिर्विप्रलापैः किं त्रैलोक्ये सचराचरे।
यत्किञ्चिद्वस्तु तत्सर्वं गणितेन विना नहि॥
(गणितसारसंग्रहः)

खेदस्यावसरो यदद्यत्वे भारतेऽस्य शास्त्रस्य प्रगतिरवरुद्ध दृश्यते। समुन्नतेषु अमरीकाप्रभृतिदेशेषु पुनस्तस्य विविधाङ्गा प्रतिदिनमधिकाधिको विकासः क्रियमाणः श्रूयते। भारतेऽ यथा स सपद्यते तथास्माकं शासकैः प्रयतनीयम्॥

— —

( ४ )

## दानम्।

दानस्य खलु महान् महिमा। सर्वेषु धर्मेषु धर्मशास्त्रेषु तस्य माहात्म्यमुपवर्ण्यते। ऋग्वेदीया दानस्तुतयः केन न श्रुताः "त्रयो धर्मस्कन्धाः, यज्ञोऽध्ययनं दानमिति" (छान्दोग्योपनिषा २।२३।१), "श्रद्धया देयम्। श्रिया देयम्। ह्रिया देयम्... (तैत्तिरीयोपनिषदि १।११।३) इत्यादिश्रुतिषु दानस महत्त्वमाख्यायते।

स्वभावेन स्वार्थसंपादन एव निरतो मनुष्यः। परार्थकार प्रवृत्तिरपि तस्मिन् उद्बोधं पुष्टिं च लभेतेत्येव सर्वतः प्रथममभीष सर्वेषां धर्माणाम्। सर्वेषामपि लोकव्यवहाराणां सुचारूरूपे

प्रवृत्तिरेतदधीनैव। दानमेव तस्य प्रथमं सोपानम्। अत एवोच्यते—

दाने सर्वमिदं विश्वं प्रतितिष्ठति सर्वदा॥

किञ्च। दानेन प्राप्यते स्वर्गो दानेन सुखमश्नुते।
इहामुत्र च दानेन पूतो भवति मानवः॥

परं दानविषये पात्रापात्रविवेकस्य दानकर्त्रा स्वकीयभावनानामन्तःपरीक्षणस्य च महती आवश्यकता। एतदन्तरेण कुपात्रे निहितं भोजनमिव औषधमिव वा तदात्मनो विनाशायैव जायते। अत एव भगवद्गीतासु दानस्य—

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्॥

इत्यादिरूपेण त्रैविध्यं प्रतिपादितम्। अत एव चोच्यते—

पात्रे दानं स्वल्पमपि काले दत्तं युधिष्ठिर।
मनसा हि विशुद्धेन प्रेत्यानन्तफलं स्मृतम्॥
पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम्।
केवलं त्यागबुद्ध्या यद्धर्मदानं तदुच्यते॥

किञ्च। सुक्षेत्रे च सुपात्रे च ह्युप्तं दत्तं न नश्यति।

भवन्ति चात्र विषये कवीनां सूक्तयः। तद्यथा—

मरुस्थल्यां यथा वृष्टिः क्षुधार्त्ते भोजनं यथा।
दरिद्रे दीयते दानं सफलं पाण्डुनन्दन!॥
आश्वास्य पर्वतकुलं तपनोष्णतप्तम्
उद्दामदावविधुराणि च काननानि।

नानानदीनदशतानि च पूरयित्वा
रिक्तोऽसि यज्जलद सैव तवोत्तमा श्रीः ॥

---

( ५ )

# न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे।
# चिन्तनीया हि विपदामादावेव प्रतिक्रियाः

"कस्यापदोऽस्तं गताः", "नीचैर्गच्छत्युपरि च दशा चक्रने
क्रमेण" इत्याद्युक्त्यनुरूपं हि नास्ति कोऽप्येतादृशो मानवो ज
यस्यापदो नोपतिष्ठन्ते, यस्य वा दशा कदाचिन्नीचैः कदाचिच्चोच
याति। एवं च सति प्रेक्षावतो मनुष्यस्य प्रथममेतत्कर्तव्यं र
आपदामुपस्थितेः प्रागेव तासां प्रतिक्रियां कुर्यात्। न तु ता
मुपस्थितावेव प्रतीकारः करिष्यत इति चिन्तयित्वा निर्वि
स्तिष्ठेत्।

बुद्धिमता हि मनुष्येण अनागतविधात्रा भवितव्यं न
यद्भविष्येणेत्येव खलु नीतिविदः प्राहुः।

पिपीलिकासदृशेषु क्षुद्रेष्वपि जन्तुषु एषा स्वाभाविकी प्रवृ
रुपलभ्यते यत्ते आगामिनो वर्षादिकालात्पूर्वमेव स्वकीयखाद
संचयं कुर्वन्ति। तत्र तत्तत्कार्यकारणभावं द्रष्टुं समर्थया अनाग
वेदिन्या च बुद्ध्या स्वभावत एव संयुक्तो मनुष्यो यदि यद्भवि

भूत्वैव तिष्ठति तर्हि तन्न केवलं तदर्थं लज्जास्पदमेव किन्तु तस्य सर्वनाशकरमपि संपद्यते ।

मनुष्याणामुपरिनिर्दिष्टाया आत्मघातिन्याः प्रवृत्तेर्मूलकारणं तु प्रायेण तेषामालस्यं प्रमाद एव वा । आलस्येनाभिभूतो हि मानवः 'अद्य करणीयं श्वः करिष्ये' इत्येवं प्रायेण चिन्तयन् आगामिन्या आपदः कालेन प्रतीकारमकृत्वा शोकमापद्यते ।

कालेन कृतं वै कार्यं फलेग्रहितां लभते । कालवर्षी वै पर्जन्यो जनैरभिनन्द्यते । काल एवोप्तं बीजं सफलतामश्नुते । अत एव

"न कार्यकालमतिपातयेत्",

काले खलु समारब्धाः फलं बध्नन्ति नीतयः ।
कालो हि सकृदभ्येति यन्नरं कालकाङ्क्षिणम् ।
दुर्लभः स पुनस्तेन कालकर्माचिकीर्षता ॥

आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति संपदः ॥

इत्येवं बहुविधा नीतिविदामुक्तयो जाग्रति । एवमेव कालेन आपदां प्रतीकारमकुर्वन् नरो नूनमनुतापेन तपति ।

तामेतां प्रेक्षावतामनागतावेक्षिणीं प्रवृत्तिमभिलक्ष्यैव शास्त्रेष्वसकृदुपदिश्यते—

अनित्यानि शरीराणि विभवो नैव शाश्वतः ।
नित्यं सन्निहितो मृत्युः कर्तव्यो धर्मसंग्रहः ॥

किञ्च—

यावद्दिवसेन तत्कुर्याद् येन रात्रौ सुखं वसेत्।
अष्टमासेन तत्कुर्याद् येन वर्षाः सुखं वसेत्।
पूर्वे वयसि तत्कुर्याद् येन वृद्धः सुखं वसेत्।
यावज्जीवेन तत्कुर्याद् येन प्रेत्य सुखं वसेत्॥

अपरं च—

यावत्स्वस्थमिदं शरीरमरुजं यावच्च दूरे जरा
यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः।
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्
संदीप्ते भवने च कूपखननं प्रत्युद्यमः कीदृशः॥

---

( ६ )

## हारं वक्षसि केनापि दत्तमज्ञेन मर्कटः।
## लेढि जिघ्रति संक्षिप्य करोत्युन्नतमाननम्।

"अविवेकः परमापदां पदम्" इत्येष वै सर्वमान्यः सिद्धान्त अविवेकेन हि क्रियमाणं कर्म न केवलं निरर्थकमेव, न केवलमु हासकारणमेव, किन्तु हानिकरमपि संपद्यते।

एष एवार्थः प्रतिपाद्यतेऽन्योक्तिविधया "हारं वक्षसि इत्यादिना पद्येन।

केनापि सह व्यवहारे तस्य पात्रत्वापात्रत्वविचार इव, अधिकारित्वानधिकारित्वविचार इव च, तद्विषये योग्यत्वायोग्यत्वविवेकोऽपि नितरामावश्यकः।

एतदेव कारणं यद् भारतीयशास्त्रेषु तदधिकारित्वानधिकारित्वविचारपुरःसरमेव स्वविषयप्रतिपादनं क्रियते। ग्रन्थारम्भेऽपेक्ष्यमाणोऽनुबन्धचतुष्टयेऽधिकारिविचारोऽप्यन्तर्गच्छति।

कस्या अपि विद्याया अध्यापने शिष्यस्य योग्यत्वायोग्यत्वपरीक्षा अवश्यं करणीया। सा च न केवलं बुद्धिदृष्ट्यैव, किन्तु चरित्रदृष्ट्यापि। अत एवोच्यते—"नानुपसन्नाय (गुरुर्निर्ब्रूयात्)। अनिदंविदे वा। नित्यं ह्यविज्ञातुर्विज्ञानेऽसूया। उपसन्नाय तु निर्ब्रूयात्। यो वाऽलं विज्ञातुं स्यात्। मेधाविने तपस्विने वा" (निरुक्ते)।

न केवलं विद्यायाः प्रदान एव, सामान्येन सात्त्विकदानमात्रस्य विषये पात्रत्वापात्रत्वविचार आवश्यकः। तथा च स्मर्यते—

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्॥ इति।

वस्तुतोऽयोग्याय अपात्राय वा वितीर्णा विद्या दानं वा नैव कस्यापि श्रेयसे भवति। यथा पिपासिताय पानीयं बुभुक्षिताय वा अन्नमेवं वै पात्राय दत्तं दानं सफलम्। अन्यथा तु अन्धस्य दीप इव, बधिरस्य गीतमिव, महिष्याः पुरो वीणावादनमिव वा तन्निष्फलमुपहासास्पदं च।

एव मेव कस्यापि कस्मिन्नप्यधिकारपदे नियोजने तस्य तद्वि-

षयकयोग्यताया विचारः परमावश्यकः। तदभावे न केवलं त कार्यस्य व्यतीपात एव, किन्तु योजयितुर्वंचनीयतापि भवति।

भवन्ति चात्र विषये नीतिविदामुक्तयः। तथा हि—

व्योमनि वासं कुरुते चित्रं निर्माति यत्नतः सलिले।
स्नपयति पवनं सलिलैर्यः क्षुद्रे चरति सत्कारम्॥

तथा। न वेत्ति यो यस्य गुणप्रकर्षं
स तस्य निन्दां सततं करोति।
यथा किराती करिकुम्भजातां
मुक्तां परित्यज्य बिभर्त्ति गुञ्जाम्॥

ततश्च सत्यमेतद् यदनधिकारिणोऽयोग्याय वा कृतस्य प्रसाद तेन दुरुपयोग उपेक्षा एव वा क्रियते। न च तेन प्रसादकर्तुर्य प्राप्तिर्भवति॥

---

( ७ )

# परीक्ष्यकारिणो हि कुशला भवन्ति

( चरके )

अथवा

# संस्कृतज्ञेषु वस्तुतत्त्वज्ञानस्योपेक्षा

❀ कस्याविदितमेतद् यदद्यत्वे जगति येयमभूतपूर्वा नानावि

---

१ प्रबन्धप्रकाशस्य द्वितीयभागस्य पृष्ठानि ५२—५५ अत्र द्रष्टव्यानि

समुन्नतिर्दृश्यते, नानारूपा आविष्काराश्चानवरतं क्रियमाणाः सर्वानाश्चर्यचकितान् कुर्वन्ति, विविधविद्यासंबन्धिविज्ञानानां च यः समुत्कर्षो दृष्टिपथमायाति तस्य सर्वस्य मूलकारणं तत्त्वज्ञानदृष्ट्या तत्तत्प्रमेयाणां वास्तविकी जिज्ञासा, "मूढः परप्रत्ययनेयबुद्धिः" इत्यभियुक्तोक्त्यनुसारं परम्परागतानां तत्तद्विषयकविश्वासानां स्वयमनुभवेन प्रायोगिकपरीक्षापुरःसरं विनिर्णयस्य च प्रवृत्तिरेव विद्यते। सैषा प्रवृत्तिः सुतरामासीदस्मद्देशेऽपि प्राचीनकाले। स्वानुभवेन प्रयोगपूर्वकं च वस्तुस्वरूपविनिर्णयप्रवृत्तिकारणादेव प्राभवन्नस्मत्पूर्वजा नानाविधपदार्थविषयकपरिज्ञानपूर्णानि भारतीयनदीदेशनगरग्रामकूपारण्यप्रभृतिभूगोलेतिहासादिविशिष्टज्ञानपुरःसरं कौटिल्यार्थशास्त्र-पाणिनीयाष्टाध्यायीसदृशान्यसाधारणानि लोकविदितानि ग्रन्थरत्नानि निर्मातुम्। वैशेषिके, आयुर्वेदे, ज्यौतिषे, गणिते, अन्येषु चैवंविधेषु प्रायोगिकपरीक्षणसापेक्षेषु शास्त्रेषु स्वानुभवेन वस्तुतत्त्वपरीक्षणपुरःसरं या तेषां समुन्नतिरद्यापि सास्माकं भारतीयानां गर्वस्यास्पदम्।

"परीक्ष्यकारिणो हि कुशला भवन्ति", "नापरीक्षितमभिनिविशेत", "सम्यक्प्रयोगनिमित्ता हि सर्वकर्मणां सिद्धिरिष्टा। व्यापच्चासम्यक्प्रयोगनिमित्ता" (इत्यादि चरके), "आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा। साक्षात्करणमर्थस्याप्तिस्तया प्रवर्तत इत्याप्तः। ऋष्यार्यम्लेच्छानां समानं लक्षणम्। तथा च सर्वेषां व्यवहाराः

प्रवर्तन्ते" (इति न्यायसूत्रवात्स्यायनभाष्ये शब्दलक्षणप्रकरणे "मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् को न ऋषिर्भवि तीति। तेभ्य एतं तर्कमृषिं प्रायच्छन्" (इति निरुक्ते)—सर्वा चैतानि प्रमाणानि तमेव पूर्वोक्तमर्थं द्रढयन्ति। किं बहु धर्मविषयेऽपि तेषामासीदियं धारणा यत्—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः॥

वस्तुतः शब्दप्रमाणस्य प्रामाण्यमनुभवपूर्वकपरीक्षास कृतमेवेति पूर्वनिर्दिष्टवात्स्यायनवचनेन "अनुभवेन वस्तु त्त्वस्य कात्स्न्र्येन याथार्थ्यज्ञानवानाप्तः" इत्याप्तलक्षणं च प्रतीयते।

परं चिरकालादेवैषा स्वयमनुभवेन वस्तुतत्त्वपरीक्षणमु प्रवृत्तिस्तिरोहितेव संस्कृतज्ञेषु इति प्रतीयते। अद्यत्वे तु तस्य प्रतिकूला प्रवृत्तिरेव चरमां सीमां यातेति कस्याविदितं भवेत् भवतु नामावश्यकी शब्दैकप्रमाणपरता श्रुत्यादिविहिते पारलौकिकेष्वदृष्टेषु विषयेषु। परन्त्वनुभवगम्येषु प्रायोगि परीक्षणसहेषु लौकिकेषु विषयेषु तु सा सर्वथैवाक्षम्या।

वर्तमानकाले संस्कृतपठनपाठनपद्धतेरयमेको महान् दो यत्प्रथमं तु छात्रेषु कस्मिन्नपि विषये स्वाभाविकविशि जिज्ञासाबुद्धेरनुदय एव। उदयेऽपि अभ्यस्यमानग्रन्थप्रमाण बलादेव सबलात्कारं तस्या उपशमः क्रियते। अभ्यस्यमान

ग्रन्थोक्ताः पदार्थास्तत्तद्ग्रन्थेषु यथा प्रतिपादितास्तथैव वस्तुतत्त्वज्ञाननिरपेक्षया ग्राह्यन्ते। व्याकरणे उदाहरणरूपेणान्यथा वा समागतानां शब्दानां केऽर्थाः, काव्यादिषूपवर्णितानां तत्तत्पदार्थानां वा वस्तुतो लोके किं स्वरूपम्, पुराणेतिहासादिषु वर्णितानां पर्वतानां देशानां नद्यादीनां च वस्तुतः कुत्र स्थितिः कानि च तन्नामानि इदानीन्तने भारतेऽन्येषु वा देशेषु, ज्यौतिषे वा सविस्तरमुपवर्णितानां नक्षत्राणां वस्तुतः खगोले कुत्र कीदृशी स्थितिरित्येवंविधानां जिज्ञासानामनुदय एवाद्यत्वे संस्कृतज्ञेषु। उदयेऽपि कति नाम ताः समाधातुं प्रयत्नपरा दृश्यन्ते। दर्शनशास्त्रेषु अंशतोऽनूदितान् दर्शनान्तरपदार्थान् यथाकथंचित्पठित्वैव सन्तुष्टा नहि चेष्टन्ते केऽपि प्रायेण वस्तुतस्तत्तद्दर्शनान्तरपदार्थैस्तान् संवादयितुम्।

सैषातिमात्रं शब्दप्रमाणपरता अस्थाने प्रयुक्ता नूनं देववाण्या अवनतावेकतमद् मुख्यं कारणम्। एषैवास्माकं विचारसंकीर्णताया नूतनविज्ञानानां संग्रहेऽनुदारताया अपि मुख्यं कारणम्। "नीचादप्युत्तमां विद्याम्" इति वचने सत्यपि, भारतीयज्यौतिषे यवनाचार्याणां, प्रासादनिर्माणविद्यायां मयासुरादीनां च प्रभावे स्पष्टेऽपि एषास्माकमनुदारता सर्वथैव गर्हणीया। उपरिनिर्दिष्टप्रवृत्तिवशादेव संस्कृतज्ञा अस्मिन्समुन्नतिमुखे काले असामयिका गण्यन्ते॥

---

( ८ )

## अशनेरमृतस्य चोभयो-
## र्वशिनश्चाम्बुधराश्च योनयः ॥

कर्तव्याकर्तव्यविवेकबुद्धिमपहाय केवलमवसरमपेक्ष्यैव कार्यस्य कर्तारः प्रायेण मानवा लोके दृष्टिपथमायान्ति । चारित्र्यस्य दुर्बलतैव तत्र तेषामल्पसत्त्वानां कारणम् ।

ये पुनः शमिनो दान्ताशया जितेन्द्रियास्तपोधनास्ते वै तेषां सर्वथा प्रतिकूलाः । अम्बुधरा यथा सममेव वज्रस्य जलस्य च प्रभवा भवन्ति, तथैव शमिनोऽपि तपस्विनोऽशनेर्नाम कार्कश्यस्य दृढताया वा एवममृतस्य नाम मृदुतायाः सरलतायाः कारुण्यस्य वा स्थानं भवन्ति । तेषु खलु गङ्गायमुनयोः प्रयाग इव, अग्नीषोमयोर्ज्योतिष्टोमयाग इव वा मार्दवकठोरतयोरपूर्वः संगमो दृष्टिपथमायाति ।

नैव ते स्वार्थलोलुपाः । अत एव केवलमवसरवादिता नैव तेषु पदं लभते । "अद्यैव वा मरणमस्तु युगान्तरे वा, न्याय्यात्पथः प्रविचलन्ति पदं न धीराः" इत्युक्त्यनुरूपं कदाचिदपि चारित्र्यादविच्युतास्ते सर्वथा न्याय्यमेवाचरन्ति ।

साधारणलोकदृष्ट्या तेषां कार्येषु निष्ठुरतायाः कारुण्यस्य च परस्परविरुद्धत्वेन प्रतीयमानः संगमो वस्तुतो विरोधाभास एव;

यत एकस्यां लोककल्याणभावनायां न्याय्याचरणप्रवणप्रवृत्तावेव वा तयोरुभयोरप्युद्गमः ।

अयमेवार्थस्तैस्तैः प्रकारैरभियुक्तोक्तिषु प्रतिपादितो दृश्यते। तथा हि—

दुर्गासप्तशत्यामेव तावद्भगवतीं महाशक्तिं संबोध्य कथ्यते—

केनोपमा भवतु तेऽस्य पराक्रमस्य
रूपं च शत्रुभयकार्यतिहारि कुत्र ।
चित्ते कृपा समरनिष्ठुरता च दृष्टा
त्वय्येव देवि वरदे भुवनत्रयेऽपि ॥

अपि च—

सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते ।
यानि चात्यर्थघोराणि तै रक्षास्मांस्तथा भुवम् ॥

एवं भगवतो रामस्य विषये भवभूतिरप्याह—

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥

अयमेवार्थः कालिदासेन दिलीपस्य वर्णन एवमुट्टङ्कितो दृश्यते—

भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम् ।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः ॥

इति ॥

———

( ९ )

## अपथे पदमर्पयन्ति हि
## श्रुतवन्तोऽपि रजोनिमीलिताः ।

यथा हि खलु दृश्यते लोके यच्चक्षुष्मन्तोऽपि रजसा निमीलितनयना अन्धा इव अपथे पदमर्पयन्ति, एवमेव श्रुतवन्तोऽधीतशास्त्रा अपि अज्ञानतिमोहितधियः कदाचिदकार्यमनुतिष्ठन्ति ।

"सत्यमेव देवा अनृतं मनुष्याः" ( शतपथब्राह्मणे ),

यत्किं चेदं वरुण दैव्ये जनेऽ-
भिद्रोहं मनुष्याश्चरामसि ।
अचित्ती यत्तव धर्मा युयोपिम
मा नस्तस्मादेनसो देव रीरिषः ॥
( ऋ० ७।८९।५ )

( चरामसि = चरामः । अचित्ती = अचित्त्या अज्ञानेन । धर्मा = धर्म, धारकं कर्म । युयोपिम = वयं विमोहितवन्तः । मा रीरिषः = मा हिंसीः । ),

"मज्जन्त्यविचेतसः ।" ( ऋ० ९।६४।२१ )

इत्यादिश्रुतिवचोभिरज्ञानवशान्मनुष्यस्य अकार्यकरणोन्मुखत्वमेव प्रतिपाद्यते । अयमेवार्थः

बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ।

इत्यादिप्रकारेण धर्मशास्त्रेषु यत्र तत्र निगद्यते ।

श्रुतवन्तोऽपि रजोनिमीलिताः कथमपथे पदमर्पयन्तीत्येष एव प्रश्नस्तत्समाधानं च यथा हृदयंगमविधया भगवद्गीतायामुपलभ्यते तथान्यत्र प्रायेण दुर्लभमेव । तथा हि—

"अर्जुन उवाच ।

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥

श्री भगवानुवाच ।

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥
धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ।
यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥
आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।" इत्यादि ।
(भगवद्गीतायां ३।३६-३९)।

अत एव स्वचारित्र्यस्य कार्याकार्यविवेकबुद्धेश्च संरक्षणाय परिपुष्टतायै च मनुष्येण सततमप्रमत्तेन अमूढेन च भवितव्यमित्यसकृत् प्रतिपाद्यते शास्त्रेषु । अत एव च आत्मपरीक्षणस्य अन्तरवेक्षणस्य वा अनल्पं माहात्म्यमुद्घोष्यते वेदादिसच्छास्त्रेषु ।

यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः ।
स तु तत्पदमाप्नोति यस्माद् भूयो न जायते ॥
(कठोपनिषदि १।३।८)।

कश्चिद्धीरः प्रत्यगात्मानमैक्षद्
आवृत्तचक्षुरमृतत्वमिच्छन् ॥

(कठोपनिषदि २।१।१)

इत्यादिश्रुतीनामेष एवाभिप्रायो यदज्ञानवशाद्रागादिवशाद्वा आत्मनोऽकार्यकरणप्रवणतां समीक्ष्य मनुष्येण सर्वदा स्वकीय-कार्याणां परीक्षणे सावधानेन अमूढेन अप्रमत्तेन च भवितव्यम्। आत्मपरीक्षणमन्तरवेक्षणं वा एवात्र प्रथमोऽभ्युपायः ॥

---

(१०)

## स्त्री-शिक्षा

साम्प्रतं जगति चिराय उपेक्षितायाः स्त्रीजातेरुद्बोधनस्य शिक्षा-याश्च महान् प्रश्नः। मानवजातेश्चतुरस्रसमुन्नतौ पुरुषाणां स्त्रीणां च परस्परं बुद्धिपूर्वकस्य सहयोगस्यापरिहार्यत्वेन आवश्यकता केन नानुभूयते। यथा एकेन चक्रेण रथस्य गतिर्न भवति, तथैव स्त्रीणां सहयोगेन विना सा समुन्नतिः साधयितुं न शक्यते।

उक्तकारणादेव वर्तमानभारतेऽप्येष प्रश्नो जागर्तितराम्। तत्रास्मिन् विषये बहवोऽवान्तरप्रश्नाः समुत्तिष्ठन्ति।

स्त्रीणां शिक्षाया आवश्यकताविषये दिष्ट्या नहि सांप्रतं कश्चि-द्विवादः। "स्त्रीशूद्रौ नाधीयाताम्" एतादृशप्रमाणाभासेषु श्रद्धावतां

पण्डितंमन्यानां बाहुल्येन विलोप एव संजातः सांप्रतिक-भारते ।

"मातृमान् पितृमानाचार्यवान् पुरुषो वेद", "सहस्रं तु पितॄन् माता गौरवेणातिरिच्यते" इत्यादिप्रमाणानुरूपं बालकानां बालिकानां च, विशेषतः शैशवावस्थायां, शिक्षायै, गार्हस्थ्यकार्याणां सुचारुरूपेण संपादनार्थम्, अथ च गृहवातावरणे स्वर्गीयसुखशान्त्योरानयनाय स्त्रीणां शिक्षाया आवश्यकता प्रायः सर्वैरप्यभ्युपगम्यते ।

तथापि, स्त्रीणां शिक्षा कथं भवेत् कीदृशी च भवेदित्यस्मिन् विषये विद्यते मतबाहुल्यं विदुषाम् ।

सा शिक्षा कथं भवेदित्यस्मिन् विषये तावत् कन्यानां कुमाराणां च सहैव शिक्षा भवेदित्येके मन्यन्ते । परस्परं समुचितसंमानभावनायाः पोषणार्थम्, स्वाभाविकसामाजिकजीवने चारित्र्यस्य दृढतायै च सहशिक्षाया उपयोगित्वमित्येव तैः प्रतिपाद्यते । बाल्यकाले सहशिक्षायाः कथंचिदुपयोगित्वेऽपि तदनन्तरं सा लाभापेक्षया सुतरां हानिकरी इत्यपर आतिष्ठन्ते ।

स्त्रीणां शिक्षा कीदृशी भवेदित्यस्मिन् विषयेऽपि वैमत्यं विदुषां संलक्ष्यते ।

पुरुषाणां स्त्रीणां च कार्यकरणशक्तयः समाना इति तेषामधिकारा अपि समाना एव । अत एव जीवनयात्रायां स्वकीयस्वाभाविक-

सत्प्रवृत्तीनां समुचितविकासार्थं, तदर्थं चावसराणां समानत्वेन लाभार्थं, पुरुषाणामिव स्त्रीणामपि शिक्षाविषयकः कश्चिदपि प्रतिबन्धोऽवाञ्छनीय इत्येव केचिन्मन्यन्ते शिक्षाविशारदाः।

अपरे पुनरेतन्नाभ्युपगच्छन्ति। तेषां चैष युक्तिवादः। पुरुषाणां स्त्रीणां च तावत् प्रातिस्विको भेदः केन न स्वीक्रियेत। प्रकृत्यैव तेषां प्रातिस्विकं कार्यं विभिन्नम्। अत एव नैव तेषामाधिकारिकसमानतया परस्परमविरोधः स्थापनीयः, किन्तु परस्परापेक्षावत्त्वेनैव। जायां लब्ध्वा हि आत्मनः संपूर्णताया अनुभवो यथा पुरुषस्य भवति, एवं वाव पतिं लब्ध्वा जायाया अपि। एतदेव तयोः परस्परापेक्षावत्त्वम्। अयमेवार्थः "पुरुषो जायां वित्त्वा कृत्स्नतरमिवात्मानं मन्यते" (ऐतरेयारण्यके १।३।५) इत्यनया श्रुत्या सुतरां प्रतिपाद्यते। एवं चेत्, स्त्रीणां प्रातिस्विकीनां प्रवृत्तीनां शक्तीनां च विकास एव तासां शिक्षायाः प्रधानं लक्ष्यं भवेदित्येव तेषामभिप्रायः।

अनेनैवाभिप्रायेण श्रुतिराह "जायेदस्तम्" (ऋ० ३।५३।४) (=जाया इत् अस्तम्=जायैव गृहं भवतीत्यर्थः)। लौकिका अप्याहुः "गृहिणी गृहमुच्यते" इति।

ततश्च गार्हस्थ्यजीवनस्यैव दृष्ट्या स्त्रीणां शिक्षायास्तत्तद्विषयाणां च विचारो विधेयः। नानाविधसंघर्षैर्नितरां विसंष्ठुले विषमे च संसारे जीवनं यापयतां स्वकीयगृहाभ्यन्तरजीवन एव सुखशान्त्योराशा भवितुमर्हति। जीवनस्य यावान् कालः स्वगृहाभ्य-

न्तरे याप्यते जनेन न हि तावान् बाह्यसंसारे। बाल्यकाले च मातृसंपर्केण बद्धमूलाः संस्कारा यावज्जीवनं स्थायिनो भवन्ति। तदेवं गार्हस्थ्यर्जीवनस्य सुमहद् माहात्म्यम्। तच्चान्ततः स्त्रीषु अवतिष्ठते। ततश्च तस्यैतस्य वैशिष्ट्यस्य रक्षा पुष्टिश्च यथा संपद्यते तादृशी एव शिक्षा स्त्रीणां विशेषतोऽपेक्षिता।

इत्येवं 'स्त्रीशिक्षा' इति विषयो विशेषतो विदुषां विचारणामपेक्षते॥

——

## (११)

# भारतीयार्यधर्मस्य आशावादः

कस्यैतदविदितं यदाशावाद एवार्यधर्मस्य मौलिकः सिद्धान्तः। ओतप्रोतं हि वैदिकं वाङ्मयमाशावादस्य सिद्धान्तेन।

कृधी न ऊर्ध्वाञ्चरथाय जीवसे (ऋ० १।३६।१४) (अर्थात्, भगवन्! अस्मान् सफलजीवनयात्रायै समुन्नतान् विधेहि)।

विश्वदानीं सुमनसः स्याम पश्येम नु सूर्यमुच्चरन्तम्।

(ऋ० ६।५२।५)

(अर्थात्, सर्वदैव प्रसन्नचेतसः सन्तो वयमुद्यन्तं सूर्यं पश्येम)।

पश्येम शरदः शतम्। जीवेम शरदः शतम्।

बुध्येम शरदः शतम्। रोहेम शरदः शतम्।

पूषेम शरदः शतम् । भवेम शरदः शतम् ।
भूषेम शरदः शतम् । भूयसीः शरदः शतात् ।
( अथर्व० १६।६७।१–८ )

( अर्थात्, शतं वर्षाणि ततोऽपि चाधिकं कालं यावद् व पश्येम, जीवनयात्रां कुर्वीमहि, ज्ञानं संपादयेमहि, उत्तरोत्तरामुन्नति माप्नुयाम, पुष्टिं समृद्धिमैश्वर्यं चाधिगच्छेम ) ।

मनुष्यजीवने विद्युतः संचारमिव नूतनां स्फूर्तिमुत्पादय रेताद्दशैः प्राणसंजीवनैर्वचनामृतैरापूर्णामिव वै वैदिकं वाङ्मयम् ।

ईश्वरप्रदत्तशक्तीनां परस्परं सामञ्जस्येन विकासः, तद्द्वारा जीवनस्य सर्वाङ्गीणा संपूर्णता, एतद् वै मानवजीवनस्य प्रधा लक्ष्यम् । भगवता विश्वबन्धुना सृष्टमेतद्धि जगदस्माकं तस्य सर्वाङ्गीणायाः समुन्नतेः साधकमेव, न तु बाधकम् । अत एवा धर्मानुयायिनो जनस्य दृष्ट्या जीवनमेतत्प्रार्थनाया विषयः, न ग्लानेः । एषा चोदात्तभावना नूनं प्रकृतिनियमानुकूलं संय जीवनं यापयतो निष्पापस्य स्वच्छहृदयस्य च जनस्यैव संभवति ।

दौर्भाग्येण एतद्विपरीतमेव वृत्तं चिराय दृश्यते भारती समाजस्य । नैकशताब्दीतोऽन्धकारस्यावनतेश्च गर्ते पतितो समाजः खलु निराशावादसिद्धान्तैः परिप्लुतः । 'संसारोऽयमसा सर्वथैव हेयः, स्वप्न इव, पान्थशालेव वा विद्यते । तत्र वै अस्म स्थितिर्नद्यां निमज्जतो मनुजस्येव वर्तते । नूनमीश्वरेण स संस केवलं कारागारस्थानीयत्वेनास्मत्कृते विनिर्मितः ।' एतद्रूपै

निराशामयसिद्धान्तैर्भारतीयसमाजश्चिराय निरुत्साहो निःसत्त्वो निस्तेजस्कश्च संवृत्तः।

उपरिनिर्दिष्टसिद्धान्तैः प्रभावितानामेव जनानां नूनं रौरवादिनरकाणां कल्पना। "मूर्खः कामी खलश्चाहम्" (="मैं मूरख खल कामी"), तथा "संसारसागरस्येयं पारं गच्छति नौर्यथा" (="नैया मेरी पार लगाओ") एतादृश्यो दैन्यभावनयोपेताः प्रार्थनास्तस्या एव विचारधारायाः प्रतीकम्।

ततश्चास्माकं प्रथममेतत्कर्तव्यं भवतु यद्वयमेनं प्राणघातकं नैराश्यवादं समूलघातं निहत्य आशामयीभिरुदात्तभावनाभिरस्मत्समाजमापूरयेम। किञ्च

मह्यं नमन्तां प्रदिशश्चतस्रः (ऋ० १०।१२८।१)।

अहमस्मि सहमान उत्तरो नाम भूम्याम्

(अथर्व० १२।१।५४)।

एतादृशीनामुदात्तभावनानामनुरूपम्, न केवलं समाजस्य यूनामेव, किन्तु प्रत्येकं जनस्य समक्षं लक्ष्यमेतत्स्थापयेम यत् 'स्वकीयोन्नतिविरोधिनीनामखिलानां शक्तीनां प्रवृत्तीनां च निरासायैवास्माकं जन्म, यस्यामपि दिशि अस्माकमुद्योगस्य गतिस्तस्यामेव नूनं विजयलक्ष्मीरस्मानुपैष्यति। वयं खलु अमृतस्य ज्योतीरूपस्य परमात्मनः पुत्राः, अत एव स्वकीयं जीवनं प्रकाशमयं कुर्वाणा वयमन्येषामपि जीवनं प्रकाशमयं करिष्यामः' इति। स एष भारतीयस्यार्यधर्मस्य आशावादः॥

---

( १२ )

# अयोध्यापुरीवर्णनम्

समस्तेऽपि भारते पुण्यपुरीष्वेकतमा केन न श्रुता भवेदयोध्या नाम नगरी। भारतीयार्यधर्मस्य लालनपालनभूमेः पवित्रस्योत्तरप्रदेशस्यालंकारभूतायास्तस्याः सर्वोत्कृष्टं वैशिष्ट्यं तु एतदेव यत्सा मर्यादापुरुषोत्तमस्य भगवतो रामचन्द्रस्य जन्मभूमिरिति। एतदेव तस्या आबालवृद्धम् आसेतुहिमालयम् आपूर्वापरसमुद्रं च व्याप्तस्य पुण्यपुरीत्वयशसः संपादकम्। एतत्कारणादेव भारतीयं धार्मिकं वाङ्मयं तस्या गुणगणवर्णनाभिरापूर्णम्। अत एव च तत्तत्प्रदेशेभ्यः प्रतिवर्षं परःसहस्रा भारतवर्षीयास्तस्यास्तीर्थयात्रां कृत्वा धन्यं पूतं चात्मानं मन्यन्ते।

दौर्भाग्येण राजनीतिकपरिवर्तनैश्चिराय राजनीतिकशक्त्या उपेक्षिता, अत एव च स्वकीयप्राचीनगौरवपदात्प्रच्याविता सा, प्राकृतिकदृष्ट्या सांस्कृतिकदृष्ट्या धार्मिकदृष्ट्या च, अद्यापि स्वकीयं किञ्चिदनिर्वचनीयं महत्त्वमावहति। तथा हि—

परितो हृद्योद्यानमालावलयितायाः, अनेकैर्मनोहारिघट्टैरुपशोभिताया रिङ्गत्तरङ्गायाः पुण्यतोयायाः सरय्वास्तटे संस्थितायाः, सर्वर्तुसुखदायास्तस्याः प्राकृतिकसुषमासंपत्तेर्वर्णनं पुनरुक्तिरेव।

परस्परश्रियमतिशयानैरिव विचित्रैरपि सचित्रैः शतशो रम्यातिरम्यैर्दिव्यदेवकुलैरलंकृतायाः, सततं जनकनन्दिनीनन्दनस्य

राक्षसराजधूमकेतोः ऋषिमुनिगणैरुपगीतगुणगरिम्णः पापशमनस्य भगवतो रामस्य गुणनाम्नोः कीर्तनैरापूरितदिगन्तरायाः, त्यक्तसर्वस्वैर्विस्मृतसंसारसंभारैरात्मारामै रामभक्तैः साधुवर्यैरुपसेवितायाः, नानादेशीयैः श्रद्धानिर्भरमानसैर्गृहीतमुनिव्रतैर्यात्रिनिवहैर्निचितप्रदेशायास्तस्या धार्मिकदृष्ट्या माहात्म्यं नैव वर्णनामपेक्षते ।

एवं दर्शकानां हृदयेषु कामप्यपूर्वामवर्णनीयां स्फूर्त्तिमुत्पादयद्भिरनेकैरितिहाससंबद्धैः प्राचीनस्थानैः संगतायाः; नानाविधभोजनाच्छादनादिकष्टजातं सहमानैरकिञ्चनैस्तपस्यामूर्त्तिभिर्विद्याध्ययनपरायणैः शतशश्छात्रैः, भारतीयसंस्कृतेरभिमानः स्वधर्मपरायणता कर्मनिष्ठता आस्तिक्यबुद्धिः शुचिता देवभक्तिः इत्यादिविशिष्टगुणान् बिभ्रद्भिः सततमध्ययनाध्यापननिरतैरध्यापकैश्चाध्यासितायाः; भारतीयपरम्परागतसंस्कृतेः रक्षणबुद्ध्यैव धार्मिकवर्यैर्विद्यादानार्थं संस्थापिताभिः पाठशालाभिर्विद्यालयैश्च मण्डितायास्तस्याः सांस्कृतिकं महत्त्वं सुतरां स्पष्टमेव ।

सत्यप्येवं तस्याः सांप्रतिकी परिस्थितिर्विवेचकानां मनःसु काञ्चिद् व्यथां जनयति । नूनमरुन्तुदमिवैतद् वृत्तं यत्परम्पराप्रवाहबलादेव कथमपि नीयमानं तस्याः पूर्वोक्तं सर्वं महत्त्वं संप्रति ह्रासोन्मुखं जराजीर्णं च प्रतीयते । स्वराज्यलक्ष्म्याभिनन्दितेऽभिनवे भारते सांप्रतिकजगतः परिस्थितेरपेक्षया नूनं साद्य यावत् सर्वथोपेक्षितेव दृश्यते । तस्या अभिनवीकरणे नैव जनतया नापि शासकैः कश्चिद् दृष्टिलवोऽपि पात्यते । परं कस्यात्र संदेहो यत्तस्याः

सर्वं रूपमभिनवं परिष्कारं संस्कारं चापेक्षते। न केवलं तस्या बहिरङ्गरूपम्—तद्यथा वसतिः, मार्गाः, गृहनिर्माणव्यवस्थैव वा—किन्तु तस्या अन्तरङ्गरूपमपि—तद्यथा देवकुलसंस्थाः, पाठशालाः, विद्यालयाः, पीठानि, मठा वा—उपयोगिताया आकर्षकतायाः स्वच्छताया भव्यतायाश्च दृष्ट्या, जनतायै स्फूर्तेर्दात्रीं सर्वथा नूतनां व्यवस्थामपेक्षते॥

---

( १३ )

# प्रगतिवादो रूढिवादश्च

कस्यापि मनुष्यस्य समाजस्य वा सर्वाङ्गीणायाः समुन्नतेः पूर्णविकासस्य चात्यन्तं बाधिका प्रवृत्तिस्तस्य रूढिवाद एव। तस्य रूढिवादस्योत्पत्तेः पुष्टेश्च कारणानि तान्येव येभ्यः खलु निराशावादस्य प्रवृत्तिर्जायते। अवरुद्धोन्नतिविकासमार्गो हि जनः समाजो वा स्वभावत एव नैराश्यवादेन आत्मन्यविश्वासेन च ग्रस्तो जायते। पादमात्रप्रचलन एव कदाचिन्मम गर्ते कूपे वा पतनं संभवतीति भयाद्भीतोऽन्ध इव स स्वस्थान एव स्थितिं वरं मन्यमानः पदात्पदमपि प्रगतिं नैव करोति, रूढिवादस्य ग्राहेण वा ग्रस्तो जायते।

तद्विपरीतम्, यस्य जनस्य समाजस्य वा समक्षमुन्नतेर्मार्गा अनवरुद्धाः प्रशस्ताश्च भवन्ति, आशायाश्च प्रकाशो विद्यते,

अत एव च य आत्मविश्वासेन समुपेतः, नूनं स्वभावत एव स प्रगतिशीलो दृश्यते। कोऽपि चक्षुष्मान् प्रकाशस्य विद्यमानताया-मात्मविश्वासेन वै कुत्रापि स्वेच्छया गन्तुमर्हति। अत एव यथैव प्रगतिवादः प्रकाशस्य आशामयस्य विश्वासमयस्य च जीवनस्य लक्षणम्, तथैव खलु रूढिवादोऽन्धकारस्य नैराश्योपेतस्य आत्म-विश्वासविरहितस्य च जीवनस्य प्रतीकम्। शब्दान्तरेषु, यथैव खलु रूढिवादः पृथ्व्या उदरे शिलीभूतानां वृक्षादीनामिव निश्चेष्टाया जीवनरहितायाश्च स्थितेः प्रख्यापकः, तथैव प्रगतिवादो जीवनक्रियया सम्पन्नस्य सचेष्टस्य च प्राणिनः स्थितेः परिचायकः।

अयमेव रूढिवादो भारतीयसमाजस्यात्यन्त महती समस्या। पादयोर्बद्धो निगड इव, एष एव समाजस्य नानारूपैः प्रगतिमवरु-णद्धि। एतस्य हि दुष्प्रभावः, नितरां सूक्ष्मेणादृश्येन च प्रकारेण, भयानका राजयक्ष्मकीटाणवः शरीर इव, अस्माकं समाजे प्रविष्टस्तं जीर्णं शीर्णं च विधातुं सद्यस्तत्परो विद्यते।

अस्य खलु प्रवृत्तिर्जीवनस्य विभिन्नक्षेत्रेषु दृश्यते। शब्दाना-मर्थविषये तावदयमेव रूढिवादस्तेषामन्तस्तलप्रवेशेऽस्माकं बाधकः, प्रायेण च मानसिकस्य पाषण्डस्य छद्मनश्च पोषको जायते। अयमेव मनुष्याणां हीनस्वार्थैर्निम्नप्रवृत्तिभिश्च प्रेरितानां कार्याणां वास्त-विकं स्वरूपमाच्छाद्य जनतायाः प्रतारणायै आवरणायते। भक्तिः, तपः, दानम्, दया, यज्ञः, स्वर्गः, सन्तोषः, श्रद्धा इत्यादिशब्दानां प्रयोगविषयको योऽयं लोके विप्लवस्तस्य मूलकारणमेष शब्दगतो

रूढिवाद एव। भगवद्गीतायां यज्ञ-तपो-दानादिविषये यदिदं सात्त्विकराजसतामसभेदप्रदर्शनं तदप्यस्यैव रूढिवादस्य निराकरणाय प्रयत्नः। प्रायेण जनैरनवगतमहत्त्वाया: श्रीस्वामिदयानन्दाचार्यैर्निर्मिताया यज्ञ-स्वर्ग-नरक-तीर्थादिशब्दार्थनिरूपणप्रवृत्ताया आर्योद्देश्यरत्नमालाया अपि वस्तुतोऽस्यैव शब्दगतरूढिवादस्य निरास एव प्रयोजनम्।

पूर्वोक्तस्य रूढिवादमूलकस्य मानसिकपाषण्डस्य च्छद्मनो वा कारणादेव नैक उद्भटा अपि विद्वांसः, भारतीयेतिहासस्य विभिन्नकालेषु, प्राचीनग्रन्थान् स्वसिद्धान्तानुकूल्येनैव व्याख्यातुं सप्रयत्ना दृश्यन्ते। नूनमद्यत्वेऽपि विद्यत एव सा प्रवृत्तिरस्मद्देशे। एतदेव कारणं यद्देशेऽस्मिन् विभिन्नकालेषु समाजस्य परिष्कार (=सुधार)-प्रगत्योरुद्देश्येन महापुरुषैः प्रचालितान्यान्दोलनानि संप्रदायाश्च स्वप्रधानलक्ष्याच्च्युतानि रूढिवादस्य कच्छे पतितानि विनाशमगच्छन्। नैतत्तिरोहितं प्राचीनस्य सामयिकस्य वा इतिहासस्य विशेषविदाम्।

रूढिवादिनामेष स्वभावो यत्ते, परभोजिनो वृक्षा वृक्षान्तराणीव, प्रगतिशीलान्यान्दोलनानि कथमप्यात्मसात्कृत्वा निष्प्राणतां निःसत्त्वतां चापादयन्ति। एतदर्थं च ते समाजे समादृतानां शब्दानां भावनानां च रूपेण परम्परया समागतानां रूढीनामेवोपयोगं पूर्णत्वेनादृश्यविधयैव विदधति।

रूढिवादस्य पूर्वोक्ताभ्योऽदृश्याभ्यो घातकप्रवृत्तिभ्य आत्मनः

स्वसमाजस्य च रक्षणार्थमैकान्तिकसत्यनिष्ठाया आत्मपरीक्षणस्य अमूढबुद्धेश्च सततं प्रयोगस्य महत्यावश्यकता। मनस्यन्यत्क्रियायां चान्यदित्येतद्द्वयं येषामस्ति त एव वञ्चका 'द्वयाविनः'[१] इत्येवं वेदेषु गर्हणीयत्वेन प्रोक्ताः।

"मनुष्या वा ऋषिपूत्क्रामत्सु देवानब्रुवन् को न ऋषिर्भविष्यतीति। तेभ्य एतं तर्कमृषिं प्रायच्छन्" (निरुक्तपरिशिष्टे) इत्यत्र प्रतिपादितस्य 'तर्क एव ऋषिः' इत्येतस्य सिद्धान्तस्य वै उपयोगो न तावदपरेषां सिद्धान्तानां खण्डनाय विधेयो यावदात्मन एव परीक्षणाय। आत्मपरीक्षणं हि नाम मनुष्यस्य प्रथमं समुन्नतेर्मूलम्। ऐकान्तिकी शब्दप्रमाणपरता वा, परम्परागता "अन्धेनैव नीयमाना यथान्धाः" इत्येवंरूपा अन्धभक्तिरेव वा रूढिवादः। अत एव स सर्वतः प्रथमं बुद्धेर्जडताया लक्षणम्।

तद्वैपरीत्येन, वेदेषु पुनः "भद्रादभि श्रेयः प्रेहि" (तैत्तिरीयसंहिता १।२।३।३) (अर्थात्, हे भगवन् प्रापयतु भवान् न उत्कृष्टादुत्कृष्टतरं पदम्), "कृधी न ऊर्ध्वाञ्चरथाय जीवसे" (ऋ० १।३६।१४) (अर्थात्, भगवन्, विधेहि न उन्नतान् प्रगतिशीलांश्च जीवनयात्रायाम्) इत्यादिमन्त्रैः प्रगतिवादस्यैव गुणगानं क्रियते।

---

१ तु० "त्वं तस्य द्वयाविनोऽघशंसस्य कस्य चित्" (ऋ० १।४२।४)। द्वयमस्यास्तीति द्वयावी द्वयवादी वञ्चक इति यावत्।

वेदेष्वसकृद् गीयमान आशावादोऽपि वस्तुतः प्रगतिवादस्यैव रूपान्तरम्। स च जीवनस्य मुख्यं लक्षणम्।

अतीतस्यैव चिराय गीतगानपरा वयमभूम। समयोऽयं भविष्यस्य गीतानां गानस्य। वास्तविकदृष्ट्या आदर्शो भविष्य एव तिष्ठति, नैवातीते। संभवति यदतीतस्य गीतगानेनास्माकं जीवनस्य मन्दायां गतौ किमपि परिवर्तनं न भवेत्। परं भविष्यस्य गीतगानमस्मदीयं जीवनं स्फूर्तिमयं विधास्यतीति नात्र संदेहः। "परिमितं वै भूतम्...अपरिमितं भव्यम्" (ऐ०ब्रा० ४।६) (भव्यं भविष्यमित्यर्थः) कथनमेतत्सुतरां सत्यमेव। वस्तुतस्तु अतीतस्य महत्त्वं तावदेव यावत्तदस्माकं भविष्यस्य निर्माणे साहाय्यकृत्। श्रेयःप्रेयोमार्गयो रहस्यमस्मिन्नेव सिद्धान्ते निहितम्। यथा प्रेयोमार्गस्य संबन्धोऽस्माकं जीवनस्यातीतकालसंबन्धिनीभिर्भावनाभिर्भवति, तथैव श्रेयोमार्गस्य संबन्ध आदर्शैः सह विद्यते। वास्तविकोन्नतेः रहस्यं तूभयोरपि समन्वये सामञ्जस्ये च तिष्ठति॥

---

(१४)

# गीताया भक्तेः स्वरूपम्

प्रायेण सर्वैर्भक्तिशास्त्रत्वेन समादृतायां भगवद्गीतायां भक्तिरिति शब्दस्यातिमहत्त्वम्। परमत्रावधीयतां यद् भक्तिशब्दस्य

प्रचलितादर्थाद् गीताया भक्तिर्नितरां भिन्ना। गीतानुसारं हि योऽसौ विश्वप्रपञ्चस्य संचालकः सर्वेषां प्रेरकः सर्वस्योत्तारको यज्ञतपसामुपभोक्ता सर्वलोकमहेश्वरो भगवान् तस्य प्रीत्यर्थमेव कर्मकरणं परमा भक्तिः। तथा चोच्यते—

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥

(गी० १८।४६)

एतदनुसारं मनुष्यजीवनस्य सफलताया रहस्यं कर्मद्वारा ईश्वरभक्तावेव विद्यते। उपयुक्तं चैतत्, यतो व्यष्टेर्व्यक्तेर्वा कर्तव्यस्य समाप्तिः पर्यवसानं वा समष्ट्या सह तस्याः सामञ्जस्य एवास्ते। एवंप्रकारेण भक्तिवादः कर्तव्यबुद्धेरादर्शवादस्यैव वा परा काष्ठा। एष भक्तिवादः कर्तव्यबुद्धेर्भावनायां नूतनमाधुर्यरसस्य संचारं करोति। न हि तस्मिन्वर्तते कश्चिदवकाशो दैन्यस्य, आलस्यस्य, प्रमादस्य, अकर्मण्यताया वा। न स प्रकृतेर्विरुद्धं पुरुषं स्त्रीवदाचरणं शिक्षयति, नाप्यत्याचारिणोऽत्याचारस्य सहनमुपेक्षां वा। "वज्रादपि कठोराणि मृदूनि कुसुमादपि" इत्युक्तिमनु नम्रतायाः शौर्यस्य चादृष्टपूर्वं सामञ्जस्यमत्र विद्यते। किं बहुना, गीताया भक्तिवादस्य दृष्ट्या स्वकर्तव्यपालनार्थं सर्वस्वमप्यर्पयन्तो महाराणाप्रताप-गुरुगोविन्दसिंह-प्रभृतयस्तादृशा एव भक्ता यादृशा गोस्वामी तुलसीदासो महात्मा नानकः कबीरो वा।

गीताया भक्तेरादर्शमनुसरन् हि भक्त आशाया आत्मविश्वासस्य च प्रतिमूर्त्तिरेव भवति। महत्स्वपि संकटेषु समापतितेषु

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ।।

( गी० ६।५ )

इति सिद्धान्ते विश्वसन्नविचलितधैर्यः स तेषां स्वागतमेव करोति। तस्य मानसिकावस्थायाः सुन्दरं वर्णनं गीतायामेवं दृश्यते—

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ।।

( २।३२ )

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ।।

( २।३८ )

वास्तवेन, गीताया एव प्रक्रियाया अनुसारेण यज्ञदानतपआदिवद् भक्तिरपि सात्त्विकराजसतामसभेदेन त्रिविधेति व्याख्यातुं शक्यते। तथा हि—

( १ )

योऽन्तरात्मा जगत् साक्षी सृष्टवानिदमद्भुतम् ।
कल्याणार्थाय जीवानां, तत्प्रसादाय केवलम् ।।१।।
कर्तव्यमिति यत्कर्म क्रियते नियतात्मभिः ।
सिद्ध्यसिद्ध्योः समैर्भूत्वा भक्तिः सा सात्त्विकी मता ।।२।।
मनःप्रसादः सौम्यत्वं समुत्साहः स्वकर्मसु ।
श्रेयोऽभ्युदयसिद्धिश्च तस्याः फलमिहोच्यते ।।३।।

( २ )

सत्कारमानपूजार्थं प्रतार्य सकलं जगत् ।
जीविकासाधनार्थं वा प्रेयोमार्गपरायणैः ॥४॥
लोकेशस्य प्रसादार्थमेवमुद्घोष्य सर्वतः ।
क्रियते यः समारम्भो भक्तिः सा राजसी मता ॥५॥
दम्भो दर्पोऽभिमानश्च समुद्वेगः स्वकर्मसु ।
चित्तचञ्चलता चैव तस्याः फलमिहोच्यते ॥६॥

( ३ )

समुत्सृज्य स्वकं कर्म मोहालस्यपरायणैः ।
कर्मण्यकर्म पश्यद्भिरकर्मणि च कर्म यत् ॥७॥
नाम्नः संकीर्तनेनैव न तु कर्मसमाश्रयात् ।
पूज्यते भगवान्नित्यं भक्तिः सा तामसी मता ॥८॥
निरुद्यमा निरुत्साहा हीनसत्त्वपराक्रमाः ।
अनार्यजुष्टमार्गस्था जायन्ते तां समाश्रिताः॥९॥

( प्राज्ञगीतायाः )

## व्याख्या

जगतः साक्षिभूतो योऽन्तरात्मा भगवानिदमद्भुतं भुवनं जीवानां कल्याणार्थमेव सृष्टवान् केवलं तस्य प्रसन्नतायै कार्यस्य सिद्धिमसिद्धिं च समं जानद्भिः संयतात्मभिर्यत्कर्म कर्तव्यमेतदिति बुद्ध्यैव क्रियते सा वै सात्त्विकी भक्तिरुच्यते । तया च भक्त्या मनःप्रसादः सौम्यत्वं स्वकर्मसु समुत्साहो निःश्रेयसस्याभ्युदयस्य च प्राप्तिरित्येतानि फलरूपेण भवन्ति ।

केवलं स्वार्थसाधनतत्परैः, 'ईश्वरस्य प्रसन्नतायै एव कार्यमिदं क्रियते' प्रत्यक्षत एवं सर्वत्र घोषयित्वा, वस्तुतस्तु आत्मन एव सत्कारमानपूजार्थं जीविकाप्राप्त्यै वा, जगत्प्रतार्य यत्कार्यं क्रियते सा राजसी भक्तिरुच्यते। तया च मनुष्ये केवलं दम्भस्य दर्पस्याभिमानस्य स्वकार्येष्वशान्तेश्चित्तचञ्चलतायाश्च वृद्धिरेव फलरूपेण दृश्यते।

कर्मण्यकर्मेति अकर्मणि च कर्मेति पश्यद्भिः, सर्वदा मोहालस्यपरैर्जनैः स्वकर्तव्यस्योपेक्षया केवलं भगवन्नामसंकीर्तनेन, न तु स्वार्थरहितकर्मद्वारा, यल्लोकेशस्य पूजा क्रियते सा तामसी भक्तिरुच्यते। तामसीं भक्तिमाश्रिता हि जना निरुद्यमा निरुत्साहा हीनसत्त्वपराक्रमा अनार्यसेवितमार्गगामिनश्च जायन्ते।

तदेवं भक्तेः सात्त्विकराजसतामसरूपेण विवेकः॥

---

( १५ )

# जीवेम शरदः शतम्। भूयश्च शरदः शतात्॥

( यजुर्वेदे ३६।२४ )

आसीत् स समयो भारते यदा खलु, मातुरुत्सङ्गं गताः शिशव इव, भगवत्याः प्रकृतिदेव्याः क्रोडे क्रीडन्त इवास्माकं पूर्वजा विधातुर्मूर्त्तं प्रसादमिव जीवनमिदं मन्यमानाः सततं सोल्लासहृदया

जीवनयात्रां कुर्वन्ति स्म। सर्वं जीवनं तेषां कृते संगीतमयमिवासीत्।

अत एव

विश्वं चिदायुर्जीवसे (ऋ० १।३७।१५) (जीवसे = जीवनार्थम्)।

भद्रं जीवन्तो जरणामशीमहि ( ऋग्० १०।३७।६ ) (जरणाम् = वृद्धावस्थाम् )।

मा भेः, मा संविक्थाः ( यजु० १।२३ ) ( = त्वं मा भैषीः। मा च त्वमुद्विग्नतां यासीः )।

अस्माकं सन्त्वाशिषः, सत्या नः सन्त्वाशिषः (यजु० २।१०)।

भद्रं भद्रं न आभर ( साम० पू० २।८।९ )।

जीवा ज्योतिरशीमहि ( साम० पू० ३।७।७ )।

स नो जीवातवे कृधि ( साम० उ० ६।२।११ )।

तस्य नो धेहि जीवसे ( साम० उ० ६।२।११ )।

माता भूमिः पुत्रो अहं पृथिव्याः ( अथर्व० १२।१।१२ )।

जीवेम शरदः शतम्।
बुध्येम शरदः शतम्।
रोहेम शरदः शतम्।
पूषेम शरदः शतम्।
भवेम शरदः शतम्।
भूषेम शरदः शतम्।
भूयसीः शरदः शतात्॥

( अथर्व० १९।६७।२-८ )

इत्यादिरूपाभिर्जीवनसंबन्धिनीभिरुदात्तभावनाभिरापूर्णं हि नो वैदिकं वाङ्मयम् ।

अत एव च "मह्यं नमन्तां प्रदिशश्चतस्रः" (ऋ० १०।१२८।१), "अहमिन्द्रो न परा जिग्ये" ( ऋ० १०।४८।५ ) ( न परा जिग्ये = पराजयं न प्राप्नोमि ), "अहमस्मि सपत्नहा, इन्द्र इवारिष्टो अक्षतः" ( ऋ० १०।१६६।२ ), "जयेम सं युधि स्पृधः" ( ऋ० १।८।३ ) ( स्पृधः = स्वकीयोन्नतेर्बाधकान् शत्रून्, बाधिकाः शक्तीर्वा ) इत्यादिरूपास्तात्कालिकानामस्मत्पूर्वपुरुषाणां विजयिनामार्याणामोजस्विनो भावा अस्मान् अजय्येन उत्साहेन संपन्नान् विदधति ।

परं हन्त ! तदेव भारतं किञ्चित्कालानन्तरं विविधकारणवशादनार्यभावनाभिः परितः समाक्रान्तं बभूव । येन खलु पूर्वमुपवर्णिता जीवनसंबन्धिन्योऽस्माकमुदात्तभावनाः सपदि विपरीततां गताः । तदानीन्तना एव 'असारः संसारः, सर्वथैव हेयः, कारागारसदृशो बन्धस्थानम्, जीवनं दुःखमयं क्षणभङ्गुरं च' इत्यादिसदृशा हृदुल्लासहरा नैराश्यपूर्णा भावा अस्मत्समाजं प्रायेणाकर्मण्यमुत्साहहीनं कर्तव्यपराङ्मुखं च विदधति । अत एव च

असारसंसारसमुद्रमध्ये
निमज्जतो मे शरणं किमस्ति ?

इत्येवं दैन्यभावनाभिर्भावितं नो जीवनं भार इव प्रतीयते ।

वस्तुतो जीवनं प्रति एतादृश्या अनास्थायाः प्रकटीकरणमात्म-

घातसदृशमेव। आत्मन उत्तरोत्तरोन्नतिर्विकासश्चैव सर्वेषामस्माकं प्रथमं लक्ष्यम्। तच्च जीवनेनैव साध्यम्। करुणावरुणालयस्य भगवतो जगदीश्वरस्यापि अस्या विविधसृष्टेर्निर्माणस्यायमेवाभिप्रायः। मा न भूवं भूयासम्[1]—एतादृशी वै जीवनविषयिणी नैसर्गिकी आशीः सर्वस्यापि प्राणिनः कस्य न विदिता। ततश्च जीवनविषयिणी अनास्था न केवलमात्मघातिन्येव, किन्तु प्रकृतेरपि विरोधिनी।

अत एव प्राचीना ऋषयो मुनय आचार्याश्च नानारसायनैर्योगाद्युपायैश्च दीर्घस्यायुषः कृते सप्रयत्ना अभूवन्।

ततश्च आत्मनः सर्वस्याः समुन्नतेर्मूलं जीवनं प्रति अनास्थाया भावान् समूलमुन्मूलयित्वा आशामयभावनायाः पुनरुज्जीवनमस्माकं समाजस्य राष्ट्रस्य च मुख्यावश्यकता। तदत्र हृदयंगमतामापादनीयमधस्तनं जीवनस्य संगीतकद्वयम्—

( १ )

## संयतस्व जीवनाय

प्राप्य मानवीयजन्म पुण्यकर्मसंचयेन।
दीनदुःखिरक्षणेन संयतस्व जीवनाय॥ १॥

---

१ तु० "सर्वस्य प्राणिन इयमात्माशीर्नित्या भवति—मा न भूवं भूयासमिति" ( योगभाष्ये २।९ )। भूयासम् = जीव्यासम्।

सत्पथानुवर्तनेन भव्यभावभावनेन ।
लोकशप्रसारणेन सयतस्व जीवनाय ।। २ ।।
दैन्यभावभञ्जनेन धैर्यधर्मधारणेन ।
वीरतासमाश्रयेण सयतस्व जीवनाय ।। ३ ।।

जीवन त्विद मुधेति
पामरा जना वदन्ति ।
नैव तत्तथा, ततोऽत्र
सयतस्व जीवनाय ।। ४ ।।

( २ )

## जयन्ति के जना भुवि ?

परोपकारतत्परा स्वदेशभक्तिवत्सला ।
अमत्सरास्तथापि ये जयन्ति ते जना भुवि ।।१।।
उदात्तकर्मशालिनो न दैन्यभावधारिण ।
तथापि सन्ति प्रश्रिता जयन्ति ते जना भुवि ।।२।।
विहातुमुद्यता सदा परार्थमात्मनो हितम् ।
अथाभिमानवर्जिता जयन्ति ते जना भुवि ।।३।।
विसृष्टकीर्तिकामना स्वधर्मपालने रता. ।
तथापि ये यशस्विनो जयन्ति ते जना भुवि ।।४।।
विरागमूर्त्तयोऽपि ये स्वदेशरागशोभिता. ।
अरण्यवासनि.स्पृहा जयन्ति ते जना भुवि ।।५।।

अमायिनो दृढव्रतास्तपस्विनो जितेन्द्रियाः ।
सदाशया महाशया जयन्ति ते जना भुवि ॥६॥

ततश्चार्यभावनाभावितानामस्माकं कर्तव्यमेतद् यत्सर्वथैव जीवनं प्रति

"मरणं प्रकृतिः शरीरिणां विकृतिर्जीवनमुच्यते बुधैः ।"

एतादृशीरनार्यभावनास्तिरस्कृत्य जीवनस्य रहस्यमवगच्छद्भि-स्तन्महत्त्वमवधार्यताम् । भवन्ति चात्र श्लोका जीवनरहस्यविषये—

## जीवनस्य रहस्यम्

जीवनस्य रहस्यं ये
विदुस्ते तत्त्वदर्शिनः ।
'जीवनस्य भयं मृत्योर्
मरणान्तं च जीवितम् ॥ १ ॥
आ जन्मनः क्रमेणायु-
र्ह्रासो मृत्युपथानुगः ।'
इत्येवं नैकधानर्थ-
गाथा या जीवनं प्रति ॥ २ ॥
परम्परागता लोकान्
विदधाति भयार्दितान् ।
निराशावादिनो मन्दा
मोहावर्त्तेऽत्र दुस्तरे ॥ ३ ॥

निमग्ना अवसीदन्ति
पङ्के गावो यथाऽवशा· ।
तेषामेवानुकम्पार्थ-
मभिधत्तेऽसकृच्छ्रुति ॥ ४ ॥
'कर्मैव जीवन, नित्य
विकासस्तस्य भास्वर ।
उत्तरोत्तरलोकेषु
कर्तव्यत्वेन मन्यताम् ॥ ५ ॥
'उत्तरोत्तरमुत्कर्षि
जीवन शाश्वत हि न ।
अस्पृष्ट तमसा चापि
मोहरूपेण सर्वथा ॥ ६ ॥'
( प्राज्ञगीताया )

अत एव श्रुतिराह—
जीवेम शरदः शतमित्यादि ॥

**इति प्रबन्धप्रकाशस्य प्रथमभागे**
**निबन्धदिग्दर्शनं नाम**
**तृतीयोल्लास· ॥**

---

# सुभाषितरत्नसंदोहः

—:०:—

सुभाषितमयद्रव्यसंग्रहं न करोति यः ।
स तु प्रस्तावयज्ञेषु कां प्रदास्यति दक्षिणाम् ॥१॥

कथमिह मनुष्यजन्मा
संप्रविशति सदसि विबुधगमितायाम् ।
येन न सुभाषितामृत-
माह्लादि निपीतमा तृप्तेः ॥२॥

द्राक्षा म्लानमुखी जाता शर्करा चाश्मतां गता ॥
सुभाषितरसस्याग्रे सुधा भीता दिवं गता ॥३॥

पृथिव्यां त्रीणि रत्नानि
जलमन्नं सुभाषितम् ।
मूढैः पाषाणखण्डेषु
रत्नसंज्ञा विधीयते ॥४॥

———

# १—सुभाषितपद्यावली

नियतिर्विधाय पुंसां प्रथमं सुखमुपरि दारुणं दुःखम् ।
कृत्वालोकं तरला तडिदिव वज्रं निपातयति ॥ १ ॥
अङ्गणवेदी वसुधा कुल्या जलधिः स्थली च पातालम् ।
वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य वीरस्य ॥ २ ॥
भवति सुभगत्वमधिकं विस्तारितपरगुणस्य सुजनस्य ।
वहति विकासितकुमुदो द्विगुणरुचिं हिमकरोद्योतः ॥ ३ ॥
हस्त इव भूतिमलिनो यथा यथा लङ्घयति खलः सुजनम् ।
दर्पणमिव तं कुरुते तथा तथा निर्मलच्छायम् ॥ ४ ॥
मरणं प्रकृतिः शरीरिणां विकृतिर्जीवनमुच्यते बुधैः ।
क्षणमप्यवतिष्ठते श्वसन्यदि जन्तुर्ननु लाभवानसौ ॥ ५ ॥
स्वशरीरशरीरिणावपि श्रुतसंयोगविपर्ययौ यदा ।
विरहः किमिवानुतापयेद्वद बाह्यैर्विषयैर्विपश्चितम् ॥ ६ ॥
अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः ॥ ७ ॥
सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥ ८ ॥
स्पृहणीयगुणैर्महात्मभिश्चरिते वर्त्मनि यच्छतां मनः ।
विधिहेतुरहेतुरागसां विनिपातोऽपि समः समुन्नतेः ॥ ९ ॥

यशोऽधिगन्तु सुखलिप्सया वा मनुष्यसख्यामतिवर्त्तितुं वा ।
निरुत्सुकानामभियोगभाजा समुत्सुकेवाङ्कमुपैति सिद्धि ॥ १० ॥

शरदम्बुधरच्छायागत्वर्यो यौवनश्रिय. ।
आपातरम्या विषया. पर्यन्तपरितापिन' ॥ ११ ॥

तावदाश्रीयते लक्ष्म्या तावदस्य स्थिर यश ।
पुरुषस्तावदेवासौ यावन्मानान्न हीयते ॥ १२ ॥

सम्पदा सुस्थिरमन्यो भवति स्वल्पयापि य ।
कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥ १३ ॥

प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥ १४ ॥

अवश्यभव्येष्वनवग्रहग्रहा यया दिशा धावति वेधस स्पृहा ।
तृणेन वात्येव तयानुगम्यते जनस्य चित्तेन भृशावशात्मना ॥ १५ ॥

निषिद्धमप्याचरणीयमापदि क्रिया सती नावति यत्र सर्वथा ।
घनाम्बुना राजपथे हि पिच्छिले क्वचिद् बुधैरप्यपथेन गम्यते ॥१६॥

भवन्ति नम्रास्तरव फलोद्गमै-
नवाम्बुभिर्दूरविलम्बिनो घना. ।
अनुद्धताः सत्पुरुषा समृद्धिभि
स्वभाव एवैष परोपकारिणाम् ॥ १७ ॥

पुराणमित्येव न साधु सर्वं
न चापि काव्य नवमित्यवद्यम् ।
सन्त परीक्ष्यान्यतरद्भजन्ते
मूढ परप्रत्ययनेयबुद्धिः ॥ १८ ॥

सुखं हि दुःखान्यनुभूय शोभते
　　घनान्धकारेष्विव दीपदर्शनम् ।
सुखात्तु यो याति नरो दरिद्रतां
　　धृतः शरीरेण मृतः स जीवति ॥ १९ ॥
छायार्थं ग्रीष्मसंतप्तो यामेवाहं समाश्रितः ॥
अजानता मया सैव पत्रैः शाखा वियोजिता ॥ २० ॥
यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ २१ ॥
पतति व्यसने दैवाद्दारुणाद्दारुणात्मनि ।
संवर्मयति वज्रेण धैर्येण महतां मनः ॥ २२ ॥
आरोप्यते शिला शैले यत्नेन महता यथा ।
निपात्यते क्षणेनाधस्तथात्मा गुणदोषयोः ॥ २३ ॥
यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् ।
न हि कस्तूरिकामोदः शपथेन विभाव्यते ॥ २४ ॥
गुणेषु क्रियतां यत्नः किमाटोपैः प्रयोजनम् ।
विक्रीयन्ते न घण्टाभिर्गावो दुग्धविवर्जिताः ॥ २५ ॥
आशाया ये दासास्ते दासाः सर्वलोकस्य ।
आशा येषां दासी तेषां दासायते लोकः ॥ २६ ॥
आशा नाम मनुष्याणां काचिदाश्चर्यशृङ्खला ।
यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति पङ्गुवत् ॥ २७ ॥
अद्यापि दुर्निवारं स्तुतिकन्या वहति कौमारम् ।
सद्भ्यो न रोचते साऽसन्तस्तस्यै न रोचन्ते ॥ २८ ॥

नात्यन्तं सरलैर्भाव्यं गत्वा पश्य वनस्थलीम् ।
छिद्यन्ते सरलास्तत्र कुब्जास्तिष्ठन्ति सर्वदा ॥ २९ ॥
नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत् ।
विश्वस्मिन्नधुनान्यः कुलव्रतं पालयिष्यति कः ॥ ३० ॥
वनानि दहतो वह्नेः सखा भवति मारुतः ।
स एव दीपनाशाय कृशे कस्यास्ति सौहृदम् ॥ ३१ ॥
अधोऽधः पश्यतः कस्य महिमा नोपचीयते ।
उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ॥ ३२ ॥
न संशयमनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनरारुह्य यदि जीवति पश्यति ॥ ३३ ॥
गते शोको न कर्तव्यो भविष्यं नैव चिन्तयेत् ।
वर्तमानेन कालेन वर्तयन्ति विचक्षणाः ॥ ३४ ॥
कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ३५ ॥
यदि समरमपास्य नास्ति मृत्यो-
भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः क्रियेत ॥ ३६ ॥
लोभः प्रतिष्ठा पापस्य प्रसूतिर्लोभ एव च ।
द्वेषक्रोधादिजनको लोभः पापस्य कारणम् ॥ ३७ ॥
शरीरनिरपेक्षस्य दक्षस्य व्यवसायिनः ।
बुद्धिप्रारब्धकार्यस्य नास्ति किञ्चन दुष्करम् ॥ ३८ ॥

अतिदाक्षिण्ययुक्तानां शङ्कितानां पदे पदे ।
परापवादभीरूणां दूरतो यान्ति संपदः ॥ ३९ ॥
किन्नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।
इति संचिन्त्य मनसा प्राज्ञः कुर्वीत वा न वा ॥ ४० ॥
उचितमनुचितं वा कुर्वता कार्यजातं
परिणतिरवधार्या यत्नतः पण्डितेन ।
अतिरभसकृतानां कर्मणामाविपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ४१ ॥
अप्रगल्भस्य या विद्या कृपणस्य च यद्धनम् ।
यच्च बाहुबलं भीरोर्व्यर्थमेतत्त्रयं भुवि ॥ ४२ ॥
पण्डिते चैव मूर्खे च बलवत्यपि दुर्बले ।
ईश्वरे च दरिद्रे च मृत्योः सर्वत्र तुल्यता ॥ ४३ ॥
अवज्ञास्फुटितं प्रेम समीकर्तुं क ईश्वरः ।
संधिं न याति स्फुटितं लाक्षालेपेन मौक्तिकम् ॥ ४४ ॥
बहूनामल्पसाराणां समवायो दुरत्ययः ।
तृणैर्विधीयते रज्जुर्बध्यन्ते तेन दन्तिनः ॥ ४५ ॥
तदेवास्य परं मित्रं यत्र संक्रामति द्वयम् ।
दृष्टे सुखं च दुःखं च प्रतिच्छायेव दर्पणे ॥ ४६ ॥
इक्षोरग्रात् क्रमशः पर्वणि पर्वणि यथा रसविशेषः ।
तद्वत्सज्जनमैत्री विपरीतानाञ्च विपरीता ॥ ४७ ॥
आत्मायत्ते गुणग्रामे नैर्गुण्यं वचनीयता ।
दैवायत्तेषु वित्तेषु पुंसां का नाम वाच्यता ॥ ४८ ॥

प्रत्यहं प्रत्यवेक्षेत नरश्चरितमात्मनः ।
किं नु मे पशुभिस्तुल्यं किं नु सत्पुरुषैरिति ॥ ४९ ॥
यो यमर्थं प्रार्थयते यदर्थं घटतेऽपि च ।
अवश्यं तदवाप्नोति न चेच्छ्रान्तो निवर्तते ॥ ५० ॥
धनमस्तीति वाणिज्यं किञ्चिदस्तीति कर्षणम् ।
सेवा न किञ्चिदस्तीति भिक्षा नैव च नैव च ॥ ५१ ॥
व्रजत्यधः प्रयात्युच्चैर्नरः स्वैरेव चेष्टितैः ।
अधः कूपस्य खनक ऊर्ध्वं प्रासादकारकः ॥ ५२ ॥
उत्क्षिप्य टिट्टिभः पादावास्ते भङ्गभयाद्दिवः ।
स्वचित्तकल्पितो गर्वः कस्य नात्रापि विद्यते ॥ ५३ ॥
सकृत्कन्दुकपातेन पतत्यार्यः पतन्नपि ।
तथा पतति मूर्खस्तु मृत्पिण्डपतनं यथा ॥ ५४ ॥
सिद्धं वा यदि वाऽसिद्धं चित्तोत्साहो निवेदयेत् ।
प्रथमं सर्वजन्तूनां तत्प्राज्ञो वेत्ति नेतरः ॥ ५५ ॥
कालो हि सकृदभ्येति यन्नरं कालकाङ्क्षिणम् ।
दुर्लभः स पुनस्तेन कालकर्माचिकीर्षता ॥ ५६ ॥
आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥ ५७ ॥
दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारितार्धासनो
गाढालिङ्गनतत्परः प्रियकथाप्रश्नेषु दत्तादरः ।
अन्तर्गूढविषो बहिर्मधुमयश्चातीव मायापटुः
को नामायमपूर्वनाटकविधिर्यः शिक्षितो दुर्जनैः ॥ ५८ ॥

अफलानि दुरन्तानि समव्ययफलानि च ।
अशक्यानि च वस्तूनि नारभेत विचक्षणः ॥ ५६ ॥

सुहृदिव प्रकटय्य सुखप्रदः प्रथममेकरसामनुकूलताम् ।
पुनरकाण्डविवर्तनदारुणो विधिरहो विशिनष्टि मनोरुजम् ॥ ६० ॥

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति ॥ ६१ ॥

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ ६२ ॥

विषमावस्थिते दैवे पौरुषेऽफलतां गते ।
विषादयन्ति नात्मानं सत्त्वापाश्रयिणो नराः ॥ ६३ ॥

चलन्तु गिरयः कामं युगान्तपवनाहताः ।
कृच्छ्रेऽपि न चलत्येव धीराणां निश्चितं मनः ॥ ६४ ॥

भो दारिद्र्य ! नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः ।
पश्याम्यहं जगत्सर्वं न मां पश्यति कश्चन ॥ ६५ ॥

गुरुषु मिलितेषु शिरसा प्रणमसि लघुषून्नता समेषु समा ।
उचितज्ञासि तुले ! किं तुलयसि गुञ्जाफलैः कनकम् ॥ ६६ ॥

लक्ष्मीवन्तो न जानन्ति प्रायेण परवेदनाम् ।
शेषे धराभराक्रान्ते शेते नारायणः स्वयम् ॥ ६७ ॥

अपि मुदमुपयान्तो वाग्विलासैः स्वकीयैः
परभणितिषु तोषं यान्ति सन्तः सुशान्ताः ।

निजघनमकरन्दस्यन्दपूर्णालिवालः
कलशसलिलसेकं नेहते किं रसालः ॥ ६८ ॥
इयमुन्नतसत्त्वशालिनां महतां कापि कठोरचित्तता ।
उपकृत्य भवन्ति दूरतः परतः प्रत्युपकारशङ्कया ॥ ६९ ॥
शरदि न वर्षति गर्जति, वर्षति वर्षासु निःस्वनो मेघः ।
नीचो वदति न कुरुते, वदति न साधुः करोत्येव ॥ ७० ॥
यन्त्रे निवेश्य सुतरामपि पीड्यमान-
स्तृष्णागृहीतहृदयैः सहसे त्वमिक्षो !
यच्छन्नसं मधुरमेव नितान्तमेषि
मृत्युं ततस्त्वदपरः क इवात्र धन्यः ॥ ७१ ॥
कस्यापि कोऽप्यतिशयोऽस्ति स तेन लोके
ख्यातिं प्रयाति न हि सर्वविदस्तु सर्वे ।
किं केतकी फलति किं पनसः सुपुष्पः
किं नागवल्ल्यपि च पुष्पफलैरुपेता ॥ ७२ ॥
रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजालिः ।
इत्थं विचिन्तयति कोशगते द्विरेफे
हा हन्त हन्त ! नलिनीं गज उज्जहार ॥ ७३ ॥
जीवन्तु मे शत्रुगणाः सदैव
येषां प्रसादात्सुविचक्षणोऽहम् ।
यदा यदा मे विकृतिं लभन्ते
तदा तदा मां प्रतिबोधयन्ति ॥ ७४ ॥

यदि नामास्य देहस्य यदन्तस्तद् बहिर्भवेत् ।
दण्डमादाय लोकोऽयं शुनः काकांश्च वारयेत् ॥ ७५ ॥
दुःखमेवास्ति न सुखं यस्मात्तदुपलक्ष्यते ।
दुःखार्तस्य प्रतीकारे सुखसंज्ञा विधीयते ॥ ७६ ॥
उद्घाटितनवद्वारे पञ्जरे विहगोऽनिलः ।
यत्तिष्ठति तदाश्चर्यं प्रयाणे विस्मयः कुतः ॥ ७७ ॥
अकारणाविष्कृतवैरदारुणादसज्जनात्कस्य भयं न जायते ।
विषं महाहेरिव यस्य दुर्वचः सुदुःसहं संनिहितं सदा मुखे ॥७८॥
वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः ।
करणं परोपकरणं येषां केषां न ते वन्द्याः ॥ ७९ ॥
रविरपि न दहति तादृग्यादृक्संदहति वालुकानिकरः ।
अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति ॥ ८० ॥
वस्तुनि चिराभिलषिते कथमपि दैवात्प्रसक्तसङ्घटने ।
प्राक्प्राप्तान्यपि बहुशो दुःखानि परं सुखानि जायन्ते ॥ ८१ ॥

आदाय वारि परितः सरितां मुखेभ्यः
किं तावदर्जितमनेन दुरर्णवेन ।
क्षारीकृतं च वडवादहने हुतं च
पातालकुक्षिकुहरे विनिवेशितं च ॥ ८२ ॥

नैवाकृतिः फलति नैव कुलं न शीलं
विद्यापि नैव न च यत्नकृतापि सेवा ।
भाग्यानि पूर्वतपसा खलु सञ्चितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ८३ ॥

दुष्प्राप्याणि च वस्तूनि लभ्यन्ते वाञ्छितानि च ।
पुरुषैः संशयारूढैरलसैर्न कदाचन ॥ ८४ ॥
दुरधिगमः परभागो यावत्पुरुषेण साहसं न कृतम् ।
जयति तुलामधिरूढो भास्वानिह जलदपटलानि ॥ ८५ ॥
प्राथमिकी घनवृष्टिः प्राप्ता शिखिनो निदाघतप्तस्य ।
आकस्मिकेन सा पुनरपनीता क्वापि पवनेन ॥ ८६ ॥
दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम् ।
अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥ ८७ ॥
माता निन्दति नाभिनन्दति पिता भ्राता न संभाषते
भृत्यः कुप्यति नानुगच्छति सुतः कान्ता च नालिङ्गते ।
अर्थप्रार्थनशङ्कया न कुरुते संभाषणं वै सुहृत्
तस्माद् द्रव्यमुपार्जय शृणु सखे द्रव्येण सर्वे वशाः ॥८८॥
किं कुलेनोपदिष्टेन शीलमेवात्र कारणम् ।
भवन्ति नितरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः ॥ ८९ ॥
गुणानर्चन्ति जन्तूनां न जातिं केवलं क्वचित् ।
स्फाटिकं भाजनं भग्नं काकिण्यापि न गृह्यते ॥ ९० ॥
न किञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ ९१ ॥
सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता ।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥ ९२ ॥
बलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः ।
गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ ९३ ॥

धनेषु जीवितव्येषु स्त्रीषु भोजनवृत्तिषु ।
अतृप्ता मानवा सर्वे याता यास्यन्ति यान्ति च ॥ ९४ ॥
अकृत्वा परसन्तापमगत्वा खलमन्दिरम् ।
अनुत्सृज्य सता वर्त्म यत्स्वल्पमपि तद् बहु ॥ ९५ ॥
आत्माधीनशरीराणा स्वपता निद्रया स्वया ।
कदन्नमपि मर्त्यानाममृतत्वाय कल्पते ॥ ९६ ॥
सर्वत्र सम्पदस्तस्य सन्तुष्ट यस्य मानसम् ।
उपानद्गूढपादस्य ननु चर्मावृतैव भू ॥ ९७ ॥
अचिन्तितानि दु खानि यथैवायान्ति देहिनाम् ।
सुखान्यपि तथा मन्ये दैन्यमत्रातिरिच्यते ॥ ९८ ॥
अम्भोजिनीवननिवासविलासमेव
हसस्य हन्ति नितरा कुपितो विधाता ।
न त्वस्य दुग्धजलभेदविधौ प्रसिद्धा
वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थ ॥ ९९ ॥
नाल्पीयसि निबध्नन्ति पदमुन्नतचेतस ।
येषा भुवनलाभेऽपि नि सीमानो मनोरथा ॥ १०० ॥
सम्पदो महतामेव महतामेव चापद ।
वर्धते क्षीयते चन्द्रो न तु तारागण क्वचित् ॥ १०१ ॥
आपत्स्वेव हि महता शक्तिरभिव्यज्यते न सम्पत्सु ।
अगुरोस्तथा न गन्ध प्रागस्ति यथाग्निपतितस्य ॥ १०२ ॥
उपचरितव्या सन्तो यद्यपि कथयन्ति नैकमुपदेशम् ।
यास्तेषा स्वैरकथास्ता एव भवन्ति शास्त्राणि ॥ १०३ ॥

हस्ती स्थूलतनुः स चाङ्कुशवशः किं हस्तिमात्रोऽङ्कुशो
वज्रेणाभिहताः पतन्ति गिरयः किं शैलमात्रः पविः ।
दीपे प्रज्वलिते विनश्यति तमः किं दीपमात्रं तमस्
तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः ॥ १०४ ॥

एकोऽहमसहायोऽहं कृशोऽहमपरिच्छदः ।
स्वप्नेऽप्येवंविधा चिन्ता मृगेन्द्रस्य न जायते ॥ १०५ ॥

कुसुमस्तवकस्येव द्वे गती स्तो मनस्विनाम् ।
मूर्द्धनि वा सर्वलोकस्य विशीर्येत वनेऽथवा ॥ १०६ ॥

सर्वे यत्र विनेतारः सर्वे पण्डितमानिनः ।
सर्वे महत्त्वमिच्छन्ति तद् वृन्दमवसीदति ॥ १०७ ॥

काष्ठादग्निर्जायते मथ्यमानो भूमिस्तोयं खन्यमाना ददाति ।
सोत्साहानां नास्त्यसाध्यं नराणां मार्गारब्धाः सर्वयत्नाः
फलन्ति ॥ १०८ ॥

उद्यमः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः ।
षडेते यत्र वर्तन्ते तत्र देवः सहायकृत् ॥ १०९ ॥

धृतिः क्षमा दया शौचं कारुण्यं वागनिष्ठुरा ।
मित्राणां चानभिद्रोहः सप्तैताः समिधः श्रियः ॥ ११० ॥
जलमभ्यासयोगेन शैलानां कुरुते क्षयम्
कर्कशानां मृदुस्पर्शं किमभ्यासान्न साध्यते ॥ १११ ॥
जनापवादमात्रेण न जुगुप्सेत चात्मनि ।
जानीयात्स्वयमात्मानं यतो लोको निरङ्कुशः ॥ ११२ ॥

गीतसूक्तिरतिक्रान्ते स्तोता देशान्तरस्थिते ।
प्रत्यक्षे तु कवौ लोकः सावज्ञः सुमहत्यपि ॥ ११३ ॥
प्रत्यक्षकविकाव्यं च रूपं च कुलयोषितः ।
गृहवैद्यस्य विद्या च कस्मैचिद्यदि रोचते ॥ ११४ ॥
मासि मासि समा ज्योत्स्ना पक्षयोः शुक्लकृष्णयोः ।
तत्रैकः शुक्लतां यातो यशः पुण्यैरवाप्यते ॥ ११५ ॥
अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च ।
पुरुषविशेषं प्राप्ता भवन्त्ययोग्याश्च योग्याश्च ॥ ११६ ॥
पात्रविशेषन्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥ ११७ ॥
महाजनस्य संपर्कः कस्य नोन्नतिकारकः ।
पद्मपत्रस्थितं तोयं धत्ते मुक्ताफलश्रियम् ॥ ११८ ॥
परोपकारैकधियः स्वसुखाय गतस्पृहाः ।
जगद्धिताय जायन्ते तत्समाः साधवो भुवि ॥ ११९ ॥
नालसाः प्राप्नुवन्त्यर्थं न क्लीबा न च मानिनः ।
न च लोकरवाद्भीता न च शश्वत्प्रतीक्षिणः ॥ १२० ॥
नालम्बते दैष्टिकतां न निषीदति पौरुषे ।
शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥ १२१ ॥
उत्साहसम्पन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।
शूरं कृतज्ञं दृढसौहृदं च लक्ष्मीः स्वयं याति निवासहेतोः ॥ १२२ ॥
कुचैलिनं दन्तमलोपधारिणं
बह्वाशिनं निष्ठुरभाषिणञ्च ।

सूर्योदये चास्तमिते शयानं
विमुञ्चति श्रीरपि चक्रपाणिम् ।। १२३ ।।
न धर्मकाल पुरुषस्य निश्चितः
न चापि मृत्यु पुरुष प्रतीक्षते ।
सदा हि धर्मस्य क्रियैव शोभना
सदा नरो मृत्युमुखेऽभिवर्तते ।। १२४ ।।

नगरी नगरस्येव रथस्येव रथी सदा ।
स्वशरीरस्य मेधावी कृत्येष्ववहितो भवेत् ।। १२५ ।।
न कञ्चिदवमन्येत सर्वस्य शृणुयान्मतम् ।
बालस्याप्यर्थवद्वाक्यमुपयुञ्जीत पण्डित ।। १२६ ।।
सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
सर्व॰ कामानवाप्नोतु सर्व सर्वत्र नन्दतु ।। १२७ ।।
सर्वे भवन्तु सुखिन सर्वे सन्तु निरामया॰ ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दु॰खभाग्भवेत् ।। १२८ ।।

## प्राज्ञगीतायाः

### दुःखमीमांसा

उद्वेगजनक दु॰खं
सर्वेषामेव प्राणिनाम् ।
सेयमापाततो बुद्धि-
स्तत्त्वदृष्ट्या विविच्यते ।। १२९ ।।

न चैवाकस्मिक दु·ख
न चाप्यस्त्यप्रयोजनम् ।
न चैवावश्यक, दु खं
दु खमित्येव गृह्यताम् ॥ १३० ॥

कार्यकारणसूत्रेण
सूत्रधारेण केनचित् ।
चाल्यमाने जगत्यस्मिन्
कथ दु खमहेतुकम् ॥ १३१ ॥

गर्भावस्था समारभ्य
या यावस्थानुभूयते ।
प्राणिना, तद्धितायैव
स्पष्ट तस्या· प्रयोजनम् ॥ १३२ ॥

एवं स्थावरलोकेऽपि
वृक्षादीना समुद्भवे ।
नानावस्थास्तु बीजस्य
जायन्ते सप्रयोजना· ॥ १३३ ॥

तत्रैवं सति लोकेऽस्मिन्
दुःखावस्थेति या मता ।
सप्रयोजनता तस्या
नून, नैवात्र सशय· ॥ १३४ ॥

सहेतुकत्वमित्येवं
सप्रयोजनतां तथा ।

दु खस्यावेद्य तत्त्वज्ञो
न ततो विजुगुप्सते ॥ १३५ ॥

अन्धकारगत कश्चिद्
यथाकस्माद् भयातुर ।
भवेत्तथैव दु खेभ्यो
मन्दानां जायते भयम् ॥ १३६ ॥

उत्तरोत्तरमुत्कृष्ट-
प्रगतावुत्सुकस्तु य ।
दु खाना स्वागत कुर्वस्-
तत्त्वज्ञो नावसीदति ॥ १३७ ॥

यथा छात्रस्य कस्यापि
तापसस्य धनार्थिनः ।
कष्टाना महतामङ्गी-
कारो दृष्ट फलार्थिनः ॥ १३८ ॥

विधातु सर्वलोकस्या-
भिप्रायो ह्येष दृश्यते ।
यत्कार्यसिद्धित पूर्वं
कष्टस्वीकरणं मतम् ॥ १३९ ॥

अत एव सिस्टन्नु सन्
लोकानेतान् प्रजापति. ।
तपोऽतप्यत, नैकत्र
श्रूयते ब्राह्मणादिषु ॥ १४० ॥

शिवस्य नीलकण्ठस्य
विषपानं यदुच्यते ।
व्याख्यानमस्य तेनापि
सिद्धान्तस्य विधीयते ॥ १४१ ॥

रामस्य तस्य भीष्मस्य
बुद्धस्यापि महात्मनः ।
क्राइस्टस्य जिनस्यापि
गान्धिनश्च महात्मनः ॥ १४२ ॥

जीवनेषु तथान्येषां
लोकोत्तरयशस्विनाम् ।
स्वेच्छयैव सुखं त्यक्त्वा
कष्टस्वीकरणं मतम् ॥ १४३ ॥

आपेक्षिकी मता तस्माद्
भावना सुखदुःखयोः ।
नैकान्तिकं तयो रूप-
मित्येवमवधार्यताम् ॥ १४४ ॥

---

# सुभाषितपद्यावल्या

## विषयसूची

# २—सुभाषितपद्यखण्डमाला

## रघुवंशात्

हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥ १ । १० ॥

न पादपोन्मूलनशक्तिरंहः शिलोच्चये मूर्च्छति मारुतस्य ॥ २ । ३४ ॥

क्रिया हि वस्तूपहिता प्रसीदति ॥ ३ । २९ ॥

यशस्तु रक्ष्यं परतो यशोधनैः ॥ ३ । ४८ ॥

पदं हि सर्वत्र गुणैर्निधीयते ॥ ३ । ६२ ॥

आदानं हि विसर्गाय सतां वारिमुचामिव ॥ ४ । ८६ ॥

पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥ ५ । १६ ॥

उष्णत्वमग्न्यातपसम्प्रयोगाच्छैत्यं हि यत्सा प्रकृतिर्जलस्य ॥ ५ । ५४ ॥

भिन्नरुचिर्हि लोकः ॥ ६ । ३० ॥

रत्नं समागच्छतु काञ्चनेन ॥ ६ । ७९ ॥

प्रतिकारविधानमायुषः सति शेषे हि फलाय कल्पते ॥ ८ । ४० ॥

अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥ ८ । ४३ ॥

विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥ ८ । ४६ ॥

धिगिमां देहभृतामसारताम् ॥ ८ । ५१ ॥

अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः ॥ ९ । ७४ ॥

तेजसां हि न वयः समीक्ष्यते ॥ ११ । १ ॥

अपि स्वदेहात्किमुतेन्द्रियार्थाद्यशोधनाना हि यशो गरीय ॥१४।३५॥

आज्ञा गुरूणां ह्यविचारणीया ॥ १४ । ४३ ॥

---

## कुमारसम्भवात्

क्षुद्रेऽपि नून शरण प्रपन्ने ममत्वमुच्चै.शिरसा सतीव ॥ १ । १२ ॥

विकारहेतौ सति विक्रियन्ते येषा न चेतासि त एव धीरा. ॥१ ।५६॥

प्रायेण सामग्र्यविधौ गुणाना पराङ्मुखी विश्वसृज प्रवृत्ति ॥३।२८॥

अशनेरमृतस्य चोभयोर्वशिनश्चाम्बुधराश्च योनय ॥ ४।४३ ॥

क ईप्सितार्थस्थिरनिश्चय मन पयश्च निम्नाभिमुख प्रतीपयेत्
॥ ५ । ५ ॥

शरीरमाद्य खलु धर्मसाधनम् ॥ ५ । ३३ ॥

न रत्नमन्विष्यति मृग्यते हि तत् ॥ ५ । ४५ ॥

अलोकसामान्यमचिन्त्यहेतुक द्विषन्ति मन्दाश्चरित महात्मनाम्
॥ ५ । ७५ ॥

प्राय. प्रत्ययमाधत्ते स्वगुणेषूत्तमादर · ॥ ६ । २० ॥

## मेघदूतात्

याञ्चा मोघा वरमधिगुणे नाधमे लब्धकामा ॥ १ । ६ ॥

आशाबन्ध कुसुमसदृश प्रायशो ह्यङ्गनाना
सद्य पाति प्रणयि हृदय विप्रयोगे रुणाद्धि ॥ १ । १० ॥

रिक्त· सर्वो भवति हि लघु पूर्णता गौरवाय ॥ १ । २० ॥

आपन्नार्त्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम् ॥ १ । ५३ ॥

कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ २ । ४६ ॥

---

## किरातार्जुनीयात्

...नहि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः ॥ १ । २ ॥
हितं मनोहारि च दुर्लभं वचः ॥ १ । ४ ॥
व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः ॥ १ । ३० ॥
विचित्ररूपाः खलु चित्तवृत्तयः ॥ १ । ३७ ॥
परैरपर्यासितवीर्यसम्पदां पराभवोऽप्युत्सव एव मानिनाम् ॥ १ । ४१ ॥
ननु वक्तृविशेषनिःस्पृहा गुणगृह्या वचने विपश्चितः ॥ २ । ५ ॥
निवसन्ति पराक्रमाश्रया न विषादेन समं समृद्धयः ॥ २ । १५ ॥
सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ॥ २ । ३० ॥
स क्षत्रियस्त्राणसहः सतां यः ॥ ३ । ४८ ॥
न ह्रीङ्गितज्ञोऽवसरेऽवसीदति ॥ ४ । २० ॥
किमिवावसादकरमात्मवताम् ॥ ६ । १९ ॥
सा लक्ष्मीरुपकुरुते यया परेषाम् ॥ ७ । २८ ॥
आत्मवर्गहितमिच्छति सर्वः ॥ ९ । ६४ ॥
प्रेम पश्यति भयान्यपदेऽपि ॥ ९ । ७० ॥
उपनतमवधीरयन्त्यभव्याः ॥ १० । ५१ ॥
विमलं कलुषीभवच्च चेतः कथयत्येव हितैषिणं रिपुं वा ॥ १३ । ६ ॥
प्रकृत्यमित्रा हि सतामसाधवः ॥ १४ । २१ ॥
सहापकृष्टैर्महतां न संगतं भवन्ति गोमायुसखा न दन्तिनः ॥ १४ । २२ ॥

## शिशुपालवधात्

श्रेयसि केन तृप्यते ॥ १ । २९ ॥

ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः ॥१।३८॥

सदाभिमानैकधना हि मानिनः ॥ १ । ६७ ॥

ज्ञातसारोऽपि खल्वेकः संदिग्धे कार्यवस्तुनि ॥ २ । १२ ॥

महीयांसः प्रकृत्या मितभाषिणः ॥ २ । १३ ॥

इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम् ॥ २ । २३ ॥

अनिर्लोडितकार्यस्य वाग्जालं वाग्मिनो वृथा ॥ २ । २७ ॥

बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः ॥ २ । ३८ ॥

कथापि खलु पापानामलमश्रेयसे यतः ॥ २ । ४० ॥

मा जीवन्यः परावज्ञादुःखदग्धोऽपि जीवति ॥ २ । ४५ ॥

सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ॥ २ । ६२ ॥

सर्वः स्वार्थं समीहते ॥ २ । ६५ ॥

उपायमास्थितस्यापि नश्यन्त्यर्थाः प्रमाद्यतः ॥ २ । ८० ॥

अयथाबलमारम्भो निदानं क्षयसम्पदः ॥ २ । ९४ ॥

बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति ॥ २ । १०० ॥

क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः ॥ ४ । १७ ॥

समय एव करोति बलाबलम् ॥ ६ । ४४ ॥

स्फुटमभिभूषयति स्त्रियस्त्रपैव ॥ ७ । ३८ ॥

...अस्तसमयेऽपि सतामुचितं खलूच्चतरमेव पदम् ॥ ९ । ५ ॥

जितरोषरया महाधियः सपदि क्रोधजितो लघुर्जनः ॥ १६ । २६ ॥

अथवाभिनिविष्टबुद्धिषु व्रजति व्यर्थकतां सुभाषितम् ॥ १६ । ४३ ॥

## नैषधात्

कार्यं निदानाद्धि गुणानधीते ॥ ३ । १७ ॥

अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा ॥३।९३॥

पित्तेन दूने रसने सितापि तिक्तायते...॥ ३।९४ ॥

तदुदितः स हि थो यदनन्तरः ॥ ४ । ३ ॥

कर्म कः स्वकृतमत्र न भुङ्क्ते ॥ ५ । ६ ॥

आर्जवं हि कुटिलेषु न नीतिः ॥ ५ । १०३ ॥

मितं च सारं च वचो हि वाग्मिता ॥ ६ । ८ ॥

चकास्ति योग्येन हि योग्यसङ्गमः ॥ ६ । ५६ ॥

दैवे निरुन्धति निबन्धनतां वहन्ति

हन्त प्रयासपरुषाणि न पौरुषाणि ॥ ११ । ५५ ॥

देवा हि नान्यद्वितरन्ति किन्तु प्रसद्य ते साधुधियं ददन्ते ॥ १४।६ ॥

प्रेत्यास्मि कीदृग्भवितेति चिन्ता

सन्तापमन्तस्तनुते हि जन्तोः ॥ १४ । ७४ ॥

अदोषतामेव सतां विवृण्वते द्विषां मृषादोषकणाधिरोपणाः ॥१५।४॥

---

## कथासरित्सागरात्

अकाण्डपातोपनता न कं लक्ष्मीर्विमोहयेत् ।

अकालमेघवद्वित्तमकस्मादेति याति च ।

अचिन्त्यो बत दैवेनाप्यापातः सुखदुःखयोः ।

अन्तरापाति हि श्रेयः कार्यसम्पत्तिसूचकम् ।

अप्राप्यं नाम नेहास्ति धीरस्य व्यवसायिनः ।

अश्नुते स हि कल्याणं व्यसने यो न मुह्यति ।
असारेऽस्मिन्भवे तावद्भावाः पर्यन्तनीरसाः ।
अहो अतीव भोगाशा कं नाम न विडम्बयेत् ।
अहो दैवाभिशप्तानां प्राप्तोऽप्यर्थः पलायते ।
आपदि स्फुरति प्रज्ञा यस्य धीरः स एव हि ।
आरब्धा ह्यसमाप्तैव किं धीरैस्त्यज्यते क्रिया ।
एकचित्ते द्वयोरेव किमसाध्यं भवेदिति ।
कदर्याणां परे प्राणाः प्रायेण ह्यर्थसञ्चयाः ।
करुणार्द्रा हि सर्वस्य सन्तोऽकारणबान्धवाः ।
कष्टा हि कुटिलश्वश्रूपरतन्त्रवधूस्थितिः ।
कस्य नोच्छृङ्खलं बाल्यं गुरुशासनवर्जितम् ।
कामं व्यसनवृक्षस्य मूलं दुर्जनसङ्गतिः ।
को हि वित्तं रहस्यं वा स्त्रीषु शक्नोति गूहितुम् ।
जितक्रोधेन सर्वं हि जगदेतद्विजीयते ।
ज्ञानमार्गे ह्यहङ्कारः परिघो दुरतिक्रमः ।
त्यजन्त्युत्तमसत्त्वा हि प्राणानपि न सत्पथम् ।
ददाति तीव्रसत्त्वानामिष्टमीश्वर एव हि ।
दुःखान्धा हि पतन्त्येव विपच्छ्वभ्रेषु कातराः ।
दैवमेव हि साहाय्यं कुरुते सत्त्वशालिनाम् ।
न काचस्य कृते जातु युक्ता मुक्तामणेः क्षतिः ।
न स्वेच्छं व्यवहर्तव्यमात्मनो भूतिमिच्छता ।
पङ्को हि नभसि क्षिप्तः क्षेप्तुः पतति मूर्धनि ।

प्राणिना हि निकृष्टापि जन्मभूमिः परा प्रिया ।
प्राणेभ्योऽप्यर्थमात्रा हि कृपणस्य गरीयसी ।
यो यद्वपति बीज हि लभते सोऽपि तत्फलम् ।
रत्नव्ययेन पाषाण को हि रक्षितुमर्हति ।
वक्ति जन्मान्तरप्रीति मन स्निह्यदकारणम् ।
सत्त्वानुरूप सर्वस्य धाता सर्व प्रयच्छति ।
सर्वश्चित्तप्रमाणेन सदसद्वाभिवाञ्छति ।
हितोपदेशो मूर्खस्य कोपायैव न शान्तये ।

---

## पञ्चतन्त्रात्

इह लोके हि धनिना परोऽपि स्वजनायते ।
किं तया क्रियते धेन्वा या न सूते न दुग्धदा ।
कृषि क्लिष्टा, विद्या गुरुविनयवृत्त्यातिविषमा ।
न स्वल्पस्य कृते भूरि नाशयेन्मतिमान्नर. ।
अरक्षित तिष्ठति दैवरक्षित सुरक्षित दैवहत विनश्यति ।
जठर को न बिभर्ति केवलम् ।
अप्रकटीकृतशक्ति. शक्तोऽपि जनैस्तिरस्क्रिया लभते ।
उत्तरादुत्तर वाक्य वदता सम्प्रजायते ।
प्राकाश्य स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मना ।
षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्ण स्थिरो भवेत ।
पैशुन्याद्भिद्यते स्नेह ।
तृणानि नोन्मूलयति प्रभञ्जनो मृदूनि नीचै प्रणतानि सर्वत. ।

महान् महत्स्वेव करोति विक्रमम् ।
तुल्ये बले तु बलवान् परिकोपमेति ।
उपायेन हि यत्कुर्यात् तन्न शक्यं पराक्रमैः ।
यस्य बुद्धिर्बलं तस्य निर्बुद्धेस्तु कुतो बलम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ।
कृपणानुसारि च धनम् ।
मेघो गिरिदुर्गवर्षी च ।
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ।
मृदुना सलिलेन खन्यमानान्यववृष्यन्ति गिरेरपि स्थलानि ।
दीर्घौ बुद्धिमतो बाहू ।
तातस्य कूपोऽयमिति ब्रुवाणाः क्षारं जलं कापुरुषाः पिबन्ति ।
यद्भविष्यो विनश्यति ।
अनिर्वेदः श्रियो मूलम् ।
बहूनामप्यसाराणां समवायो हि दुर्जयः ।
नष्टं मृतमतिक्रान्तं नानुशोचन्ति पण्डिताः ।
गतानुगतिको लोको न लोकः पारमार्थिकः ।
घातयितुमेव नीचः परकार्यं वेत्ति न प्रसाधयितुम् ।
नाश्मनि स्यात् क्षुरक्रिया ।
पयःपानं भुजङ्गानां केवलं विषवर्धनम् ।
अत्यादरः शङ्कनीयः ।
पण्डितोऽपि वरं शत्रुर्न मूर्खो हितकारकः ।
अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ।

अकुतोपद्रवः कश्चिन्महानपि न पूज्यते ।

सम्पत्तौ च विपत्तौ च महतामेकरूपता ।

कालः सर्वजनान् प्रसारितकरो गृह्णाति दूरादपि ।

सुतप्तमपि पानीयं शमयत्येव पावकम् ।

सतां साप्तपदं मैत्रम् ।

कोऽतिभारः समर्थानाम् ?

किं दूरं व्यवसायिनाम् ?

को विदेशः सुविद्यानाम् ?

कः परः प्रियवादिनाम् ?

हेतुरत्र भविष्यति ।

ऊष्मापि वित्तजो वृद्धिं तेजो नयति देहिनाम् ।

सकृदपि दृष्ट्वा पुरुषं विबुधा जानन्ति सारतां तस्य ।

हस्ततुलयापि निपुणाः पलप्रमाणं विजानन्ति ।

यदस्मदीयं न हि तत्परेषाम् ।

आच्छादिते रवौ मेघैराच्छन्नाः स्युर्गभस्तयः ।

वाञ्छाविच्छेदनं प्राहुः स्वास्थ्यं शान्ता महर्षयः ।

प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ।

क्षते प्रहारा निपतन्त्यभीक्ष्णम् ।

छिद्रेष्वनर्था बहुलीभवन्ति ।

नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति ।

निर्वाते ज्वलितो वह्निः स्वयमेव प्रशाम्यति ।

तुषैरपि परिभ्रष्टा न प्ररोहन्ति तण्डुलाः ।

कृशे कस्यास्ति सौहृदम् ।

आत्मनः प्रतिकूलानि परेषां न समाचरेत् ।

बलीयसा हीनबलो विरोधं न भूतिकामो मनसापि वाञ्छेत् ॥

भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्धते ।

अनागतं यः कुरुते स शोभते ।

स शोच्यते यो न करोत्यनागतम् ।

सन्तापयन्ति कमपथ्यभुजं न रोगाः ?

कं श्रीर्न दर्पयति ?

कं न निहन्ति मृत्युः ?

लुब्धस्य नश्यति यशः, पिशुनस्य मैत्री,
नष्टक्रियस्य कुलमर्थपरस्य धर्मः,
विद्याफलं व्यसनिनः, कृपणस्य सौख्यम् ।

कण्टकेनैव कण्टकम् ।

अपि शत्रुं प्रणम्यापि रक्षेत् प्राणान् धनानि च ।

सर्वनाशे समुत्पन्ने अर्द्धं त्यजति पण्डितः ।

यस्मिन्कुले त्वमुत्पन्नो गजस्तत्र न हन्यते ।

मौनं सर्वार्थसाधनम् ।

अभिमतसिद्धिरशेषा भवति हि पुरुषस्य पुरुषकारेण ॥

वरं बुद्धिर्न सा विद्या विद्याया बुद्धिरुत्तमा ।

उदारचरितानां तु वसुधैव कुटुम्बकम् ।

दुष्टे दुष्टं समाचरेत् ।

अपि कापुरुषो मार्गे द्वितीयः क्षेमकारकः ।

यादृशी भावना यस्य सिद्धिर्भवति तादृशी ।

---

## हितोपदेशात्

यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत् ।

उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।

काचः काञ्चनसंसर्गाद्धत्ते मारकतीद्युतीः ।

न व्यापारशतेनापि शुकवत्पाठ्यते बकः ।

ज्ञानं भारः क्रियां विना ।

न गणस्याग्रतो गच्छेत् ।

अल्पानामपि वस्तूनां संहतिः कार्यसाधिका ।

निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ।

धनाशा जीविताशा च गुर्वी प्राणभृतां सदा ।

अन्धस्य किं हस्ततलस्थितोऽपि प्रकाशयत्यर्थमिह प्रदीपः ?

कायः सन्निहितापायः ।

जलबिन्दुनिपातेन क्रमशः पूर्यते घटः ।

काचः काचो मणिर्मणिः ।

अनुहुङ्कुरुते घनध्वनिं न हि गोमायुरुतानि केसरी ।

अशेषदोषदुष्टोऽपि कायः कस्य न वल्लभः ।

(स्वेदितो मर्दितश्चैव रज्जुभिः परिवेष्टितः । )

मुक्तो द्वादशभिर्वर्षैः श्वपुच्छः प्रकृतिं गतः ।

नलिकागतमपि कुटिलं न भवति सरलं शुनः पुच्छम् ।

क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ।
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ?

---

## चरकसंहितायाः

धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् ।
सम्यक्प्रयोगं सर्वेषां सिद्धिराख्याति कर्मणाम् ।
सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ।
आत्मानमेव मन्येत कर्तारं सुखदुःखयोः ।

## सुश्रुतसंहितायाः

एकशास्त्रमधीयानो न विद्याच्छास्त्रनिश्चयम् ।
शरीरे चैव शास्त्रे च दृष्टार्थः स्याद्विशारदः ।
दृष्टश्रुताभ्यां सन्देहमवापोह्याचरेत् क्रियाः ।

---

## सामान्यसंग्रहः

स्वर्णाद्रिशृङ्गाग्रमधिष्ठितोऽपि
काको वराकः खलु काक एव ।
कातरा एव जल्पन्ति यद्भाव्यं तद्भविष्यति ।
महतामाश्रयः कार्यः फलं भाग्यानुसारतः ।
**गद्यं कवीनां निकषं वदन्ति ।**

अनाक्रम्य जगत्सर्वं नो सध्या भजते रवि· ।

यस्यागम केवलजीविकायै
    तं ज्ञानपरायं वणिज वदन्ति ।

कीर्तिर्यस्य स जीवति ।

शास्त्राण्यधीत्यापि भवन्ति मूर्खा
    यस्तु क्रियावान् पुरुष स एव ।

गुणा पूजास्थानं गुणिपु न च लिङ्ग न च वयः ।

स्वार्थात्सता गुरुतरा प्रणयिक्रियैव ।

अत्यारूढिर्भवति महतामप्यपभ्रशनिष्ठा ।

नाधर्मश्चिरमृद्धये ।

निसर्गतोऽन्तर्मलिना ह्यसाधव. ।

नित्य सनिहितो मृत्यु कर्तव्यो धर्मसग्रहः ।

---

# ३—सुभाषितगद्यावली

## दशकुमारचरितात्

जलबुद्बुदसमाना विराजमाना संपत् तडिल्लतेव सहसैवोदेति, नश्यति च।

अवज्ञासोढ्यं दारिद्र्यम्।

आत्मानमात्मनानवसाद्यैवोद्धरन्ति सन्तः।

न ह्यलमतिनिपुणोऽपि पुरुषो नियतिलिखितां लेखामतिक्रमितुम्।

सेयमाकृतिर्न व्यभिचरति शीलम्।

इह जगति हि न निरीहदेहिनं श्रियः संश्रयन्ते।

श्रेयांसि च सकलान्यनलसानां हस्ते नित्यसांनिध्यानि।

दिव्यं हि चक्षुर्भूतभवद्भविष्यत्सु व्यवहितविप्रकृष्टादिषु च विषयेषु शास्त्रं नामाप्रतिहतवृत्ति।

दैव्याः शक्तेः पुरो न बलवती मानवी शक्तिः।

---

## हर्षचरितात्

निसर्गविरोधिनी चेयं पयःपावकयोरिव धर्मक्रोधयोरेकत्र वृत्तिः।

अतिरोषणश्चक्षुष्मानप्यन्ध एव जनः।

कुपितस्य प्रथममन्धकारीभवति विद्या, ततो भ्रुकुटिः।

जनयन्ति च विस्मयमतिधीरधियामप्यदृष्टपूर्वा दृश्यमाना जगति स्रष्टुः सृष्ट्यतिशयाः ।

सतां हि प्रियंवदता कुलविद्या ।

न किंचिन्न कारयत्यसाधारणी स्वामिभक्तिः ।

न सन्त्येव ते येषां सतामपि सतां न विद्यन्ते मित्रोदासीन-शत्रवः ।

स्वैरिणो विचित्राश्च लोकस्य स्वभावाः प्रवादाश्च ।

धनोष्मणा म्लायत्यलं लतेव मनस्विता ।

भुजे वीर्यं निवसति न वाचि ।

संपत्कणिकामपि प्राप्य तुलेव लघुप्रकृतिरुन्नतिमायाति ।

सोऽयं कुरङ्गकैः कचग्रहः केसरिणः ।

हरिणार्थमतिह्रेपणः सिंहसंभारः ।

न च स्वप्नदृष्टनष्टेष्विव क्षणिकेषु शरीरेषु निबध्नन्ति बन्धुबुद्धिं प्रबुद्धाः ।

स्थायिनि यशसि शरीरधीर्वीराणाम् ।

सज्जनमाधुर्याणामभृतदास्यो दश दिशः ।

उपयोगं तु न प्रीतिर्विचारयति ।

अतिद्रुतवाहिनी चानित्यतानदी ।

---

## कादम्बर्याः

अतिकष्टास्वप्यवस्थासु जीवितनिरपेक्षा न भवन्ति खलु जगति सर्वप्राणिनां प्रवृत्तयः ।

सर्वथा न कंचिन्न खलीकरोति जीविततृष्णा।

प्रायेणाकारणमित्राण्यतिकरुणार्द्राणि च सदा खलु भवन्ति सतां चेतांसि।

अपुत्राणां किल न सन्ति लोकाः शुभाः।

जन्मान्तरकृतं हि कर्म फलमुपनयति पुरुषस्येह जन्मनि।

नहि शक्यं दैवमन्यथाकर्तुमभियुक्तेनापि।

धर्मपरायणानां सदा समीपसंचारिण्यः कल्याणसंपदो भवन्ति।

आवेदयन्ति हि प्रत्यासन्नमानन्दमग्रपातीनि शुभानि निमित्तानि।

सत्योऽयं लोकवादो यत्संपत्संपदं विपद्विपदमनुबध्नातीति।

आत्मकृतानां हि दोषाणां नियतमनुभवितव्यं फलमात्मनैव।

अहो जगति जन्तूनामसमर्थितोपनतान्यापतन्ति वृत्तान्तान्तराणि।

अहो दुर्निवारता व्यसनोपनिपातानाम्।

सर्वथा न कश्चन न स्पृशन्ति शरीरधर्माणमुपतापाः।

अयत्नेनैव खलूपहासास्पदतामीश्वरो नयति जनम्।

सर्वथा दुर्लभं यौवनमस्खलितम्।

सुखमुपदिश्यते परस्य।

नास्ति खल्वसाध्यं नाम भगवतो मनोभुवः।

बहुप्रकाराश्च संसारवृत्तयः।

प्रायेण च निसर्गत एवानायतस्वभावभङ्गुराणि सुखानि, आयतस्वभावानि च दुःखानि।

दुर्लभो हि दाक्षिण्यपरवशो निर्निमित्तमित्रमकृत्रिमहृदयो विदग्धजनः ।

स्वप्न इवाननुभूतमपि मनोरथो दर्शयति ।

बहुभाषिणो न श्रद्धाति लोकः ।

आजन्मक्रमाहितो बलवान् जननीस्नेहः ।

केन कदावलोकितो ज्योत्स्नारहितश्चन्द्रमाः ।

एतत्खलु प्रदीपेनाग्नेः प्रकाशनम् ।

मिथ्यापि तत्तथा यथा गृहीतं लोकेन ।

यस्यामेव वेलायां चित्तवृत्तिः, सैव वेला सर्वकार्येषु ।

भृत्या अपि त एव ये संपत्तेर्विपत्तौ सविशेषं सेवन्ते ।

अनतिक्रमणीया हि नियतिः ।

लोकेऽपि च प्रायः कारणगुणभाञ्ज्येव कार्याणि दृश्यन्ते ।

---

## अभिज्ञानशाकुन्तलात्

सर्वः कान्तमात्मीयं पश्यति ।

स्निग्धजनसंविभक्तं खलु दुःखं सह्यवेदनं भवति ।

अतिस्नेहः पापाशङ्की ।

अहो सर्वास्ववस्थासु रमणीयत्वमाकृतिविशेषाणाम् ।

न कदापि सत्पुरुषाः शोकपात्रात्मानो भवन्ति ।

न खलु धीमतां कश्चिदविषयो नाम ।

क उष्णोदकेन नवमल्लिकां सिञ्चति ।

गुर्वपि विरहदु खमाशाबन्ध· साहयति ।

ननु प्रवातेऽपि निष्कम्पा गिरय ।

---

## विक्रमोर्वशीयात्

अनुत्सेक खलु विक्रमालङ्कार ।

नास्त्यगतिर्मनोरथानाम् ।

छिन्नबन्धे मत्स्ये पलायिते निर्विण्णो धीवरो भणति धर्मो मे भविष्यति ।

सर्वमप्यौदरिकाणामभ्यवहार एव पर्य्यवस्यति ।

लोप्त्रेण[१] सूचितस्य कुम्भिलकस्य नास्ति वाचा प्रतिविधानम् ।

सर्वत्र खल्वात्मानुमानेन वर्तितु युक्तम् ।

---

## उत्तररामचरितात्

एते हि हृदयमर्मच्छिद ससारभावा येभ्यो बीभत्समाना सन्त्यज्य सर्वान्कामानरण्ये विश्राम्यन्ति मनीषिण ।

प्रसव· खलु प्रकर्षपर्यन्त स्नेहस्य, पर चैतदन्योन्यसश्लेषण पित्रो· ।

स्नेहश्च निमित्तसव्यपेक्षश्चेति विप्रतिषिद्धमेतत् ।

साक्षात्कृतधर्म्माणो महर्षयस्तेषामृतम्भराणि भगवता परोरजासि प्रज्ञानानि न क्वचिद्व्याहन्यन्त इत्यनभिशङ्कनीयानि ।

---

१ लोप्त्र चौर्येणाप्त धनम् ।

## मृच्छकटिकात्

गुणः खल्वनुरागस्य कारणं न बलात्कारः ।

साहसे श्रीः प्रतिवसति ।

न चन्द्रादातपो भवति ।

अहो धिग्वैषम्यं लोकव्यवहारस्य ।

पुरुषभाग्यानामचिन्त्याः खलु व्यापाराः ।

ईदृशो दासभावो यत्सत्यं कमपि न प्रत्याययति ।

---

## काव्यमीमांसायाः

प्रायः प्राणभृतां प्रेमाणमन्तरेण नान्यद् बन्धनमस्ति ।

अविच्छेदेन शीलनमभ्यासः । स हि सर्वगामी सर्वत्र निरतिशयं कौशलमाधत्ते ।

यादृश(शा)कारश्चित्रकरस्तादृशाकारमस्य चित्रमिति प्रायोवादः ।

पक्षपातो हि गुणदोषौ विपर्यासयति ।

न च दृप्येत् । दर्पलवोऽपि सर्वसंस्कारानुच्छिनत्ति ।

परैश्च परीक्षयेत् । यदुदासीनः पश्यति न तदनुष्ठातेति प्रायोवादः ।

अनियतकालाः प्रवृत्तयो विप्लवन्ते ।

सम्यक्स्वापो वपुषः परमारोग्याय ।

पुरुषरत्नानामेक एव राजोदन्वान् भाजनम् ।

महात्मनां हि संवादिन्यो बुद्धय एकमेवार्थमुपस्थापयन्ति ।

मतिदर्पणे कवीनां विश्वं प्रतिफलति ।

कथं नु वयं दृश्यामह इति महात्मनामहंपूर्विकयैव शब्दार्थाः पुरो धावन्ति ।

---

## निरुक्तात्

नैष स्थाणोरपराधो यदेनमन्धो न पश्यति। पुरुषापराधः स भवति ।

यथा जानपदीषु विद्यातः पुरुषविशेषो भवति, पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति ।

कस्तद्वेद यदभूतम् ?

बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजकाः ।

नित्यं ह्यविज्ञातुर्विज्ञानेऽसूया ।

एतद् वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृग्यजुर्वाभिवदति ।

साक्षात्कृतधर्माण ऋषयो बभूवुः । तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्संप्रादुः । उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च ।

आचार्य आचारं ग्राहयति ।

सैषा पुरुषगर्हा, न शास्त्रगर्हा ।

अप्येकः ( अविद्वान् ) पश्यन् न पश्यति वाचम्। अपि च शृण्वन् न शृणोत्येनाम् ।

अर्थं वाचः पुष्पफलमाह ।

पुत्रः पुरु त्रायते ।...।पुन्नरकं ततस्त्रायत इति वा ।

ऋषिर्दर्शनात् ।

पुरोहितः पुर एनं दधति ।

तद्यथा कितवाद्बिभीयादेवमेव दुरुक्ताद्बिभीयात् । न दुरुक्ताय स्पृहयेत् कदाचित् ।

पुराणं कस्मात् । पुरा नवं भवति ।

सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः ।

सुचक्षा अहमक्षीभ्यां भूयासम् । सुवर्चा मुखेन । सुश्रुत्कर्णाभ्यां भूयासम् ।

माहाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते ।

यद् यद्रूपं कामयते तत्तद्देवता भवति ।

अभ्यासे भूयांसमर्थं मन्यन्ते ।

मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन्को न ऋषिर्भविष्यतीति । तेभ्य एतं तर्कमृषिं प्रायच्छन् ।

यदेव किंचानूचानोऽभ्यूहत्यार्षं तद्भवति ।

---

# ४—वैदिकसूक्तिमञ्जरी

## ऋग्वेदसंहितायाः

सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते ।
त्वामभि प्र णोनुमो जेतारमपराजितम् ॥ ( १।११।२ ) ।

( मा भेम = शत्रुभ्यो भीता मा भूम । अभि प्र णोनुमः = सर्वतः प्रकर्षेण स्तुमः )

पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयः । ( १।११।३ ) ।

( रातयः = दानानि । पूर्वीः = प्रभूताः । ऊतयः = रक्षणानि । वि दस्यन्ति = उपक्षीयन्ते )

कृधी न ऊर्ध्वाञ्चरथाय जीवसे । ( १।३६।१४ ) ।

( ऊर्ध्वान् = उन्नतान् । चरणाय = लोके चरणाय, जीवनयात्रायै इति यावत् । जीवसे = जीवनाय ) ।

विश्वस्मा उग्रः कर्मणे पुरोहितः । ( १।५५।३ ) ।

( उग्र उद्‌गूर्णो हि मनुष्यो विश्वस्मै कर्मणे पुरोहितत्वेनावस्थाप्यत इति भावः ) ।

देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो नि वर्तताम् ।
देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्र तिरन्तु जीवसे ॥
( १।८९।२ )

( ऋजूयताम् = ऋजुमार्जवेन युक्तं वर्तनमात्मन इच्छन्तीति

ऋजूयन्तस्तेषामस्माकम्। अस्तु इति शेषः। रातिः = दानम्। नि = नितराम्। उपसेदिम = प्राप्नुयाम )।

भद्रं कर्णेभिः शृणुयाम देवा
भद्रं पश्येमाक्षभिर्यजत्राः। ( १।८९।८)

( अक्षभिः = अक्षिभिः। यजत्राः = हे यजनीया देवाः )।

यस्तन्न वेद किमृचा करिष्यति। ( १।१६४।३९ )

( यः = मनुष्यः। तत् = ऋक्प्रतिपाद्यं वस्तु, अर्थतत्त्वं वा )।

य इत्तद् विदुस्त इमे समासते। ( १।१६४।३९ )

( य एव वेदादिप्रतिपाद्यमर्थजातं विदुस्त एव सुखेन जीवन्तीत्यभिप्रायः )।

इन्द्रं मित्रं वरुणमग्निमाहु-
रथो दिव्यः स सुपर्णो गरुत्मान्।
एकं सद्विप्रा बहुधा वद-
न्त्यग्निं यमं मातरिश्वानमाहुः॥ ( १।१६४।४६ )

( तुलना विधेया—"माहाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते" निरुक्ते ७।४ )।

अन्यस्य चित्तमभि संचरेण्यम्। ( १।१७०।१ )

( संचरेण्यम् = संचारि )।

मिनाति श्रियं जरिमा तनूनाम्। ( १।१७९।१ )

( जरिमा = जरा। मिनाति = हिनस्ति )।

न मृषा श्रान्तं यदवन्ति देवाः। ( १।१७९।३ )

(=श्रान्त परिश्रम कुर्वाण जन देवा अवन्तीति यत्तद् न मृषेत्यर्थः)।

अपो सु म्यक्ष वरुण भियस मत्। (२।२८।६)

(भियसम्=भयम्। अपो म्यक्षग्रपगमय। मत्=मत्त)।

बल धेहि तनूषु नो बलमिन्द्रानळुत्सु न।

बल तोकाय तनयाय जीवसे त्व हि बलदा असि॥

(३।५३।१८)

नावाजिन वाजिना हासयन्ति

न गर्दभ पुरो अश्वान्नयन्ति। (३।५३।२३)

(वाजिना.=वाचामिना वाजिना। सर्वज्ञा'। अवाजिनम्=मूर्खजनम्। न हासयन्ति=हास्यास्पद न कुर्वन्ति। तेन सह स्पर्धा न कुर्वन्तीत्यर्थः। एवमेव गर्दभमश्वात्पुरो न नयन्ति।)।

ऋतस्य धीतिर्वृजिनानि हन्ति। (४।२३।८)

(धीति =प्रज्ञा स्तुतिर्वा। वृजिनानि=पापानि)।

नकिरिन्द्र त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन्।

नकिरेवा यथा त्वम्॥ (४।३०।१)

स्वस्ति पन्थामनु चरेम सूर्याचन्द्रमसाविव।

पुनर्ददताघ्नता जानता स गमेमहि॥ (५।५१।१५)

(पन्थाम्=कर्तव्यपथम्। ददता=साहाय्यकर्त्रा। अघ्नता=हितैषिणा। जानता=ज्ञानसपन्नेन। परोपकारिणा हितैषिणा च

विदुषां सङ्गेन प्रेरणां लभमाना वयं चन्द्रदिवाकराविव स्वकर्तव्य-पथादविच्युता भवेमेत्यर्थः )।

कृतं चिदेनो नमसा विवासे। ( ६।५१।८ )

( आ विवासे = विनाशयामि )।

जही न्यत्रिणं पणिं, वृको हि सः। ( ६।५१।१४ )

(जहि = विनाशय। अत्रिणम् = अदनशीलं परापकारिणम्। पणिम् = वणिजम्। वृकः = अपहरणशीलः )।

पुमान् पुमांसं परिपातु विश्वतः। ( ६।७५।१४ )

ब्रह्म वर्म ममान्तरम्। ( ६।७५।१९ )

नहि स्वमायुश्चिकिते जनेषु। ( ७।२३।२ )

( चिकिते = ज्ञायते। जनेषु केनापि स्वजीवितं न ज्ञायत इत्यर्थः )।

तस्य व्रतानि न मिनन्ति धीराः। ( ७।३१।११ )

(तस्य = परमेश्वरस्य। मिनन्ति = हिंसन्ति। धीराः = प्राज्ञाः)।

मा नो निद्रा ईषत मोत जल्पिः। ( ८।४८।१४ )

( निद्राः = प्रमादालस्यरूपाः। जल्पिः = जल्पनम्, जनप्रवादो लोकचर्चा वा। मा ईषत = बाधितुमीश्वरा मा भूवन्। प्रमादालस्यादिवशेन लोकप्रवादेन वा मनुष्यः स्वकर्तव्यमार्गाच्च्युतो न भवेदिति भावः )।

अस्ति रत्नमनागसः। ( ८।६७।७ )

( अपापस्य कृते रमणीयपदार्थानामुपस्थितिर्भवतीति भावः )।

इन्द्रं वर्धन्तो अप्तुरः
कृण्वन्तो विश्वमार्यम्।
अपघ्नन्तो अराव्णः॥ (९।६३।५)

( वर्धन्त = वर्धयन्त । अप्तुरः = उदकस्य प्रेरका, मद्भावनायाः प्रचारका इति यावत्। अराव्ण. = अदातॄन्। अपघ्नन्तः = विनाशयन्त । वय भवेम यद्वा जीवेमेति शेष )।

नानान वा उ नो धियो, वि व्रतानि जनानाम्। (९।११२।१)

( न = अस्माक जनानाम्। नानानम् = नानाजातीयका‧। व्रतानि = कर्माणि )।

तक्षा रिष्ट रुत भिषग् ब्रह्मा सुन्वन्तमिच्छति। (९।११२।१)

( तक्षा रिष्ट दारुतक्षणमिच्छति, भिषग् रुत रोगमिच्छति, ब्रह्मा ब्राह्मणश्च सुन्वन्तमिच्छति )।

अक्षैर्मा दीव्य कृषिमित्कृषस्व। (१०।३४।१३)

---

## ( आदर्शजीवनम् )

विश्वाहा त्वा सुमनस सुचक्षस.
प्रजावन्तो अनमीवा अनागसः।
उद्यन्त त्वा मित्रमहो दिवे दिवे
ज्योग्जीवा. प्रति पश्येम सूर्य॥ (१०।३७।७)

( अनमीवा. = रोगरहिता.। हे मित्रमहः = मित्ररूपं महो महत्त्व

यस्य तत्संबोधनम्, यद्वा मित्राणां पूजयितः। ज्योग्जीवाः = ज्योक् चिरं जीवाः जीवन्तः)।

---

गोभिष्टरेमामतिं दुरेवाम्। (१०।४२।१०)

(दुरेवाम् = दुष्टागमनाम्, दारिद्र्याद्दुद्भूताम्। अमतिम् = दुर्बुद्धिम्, मन्दां बुद्धिं वा)।

प्र तार्यायुः प्रतरं नवीयः। (१०।५९।१)

(प्र तारि = प्रवर्धताम्। प्रतरम् = प्रवृद्धतरम्। नवीयः = नवतरम्)।

ज्योक् पश्येम सूर्यमुच्चरन्तम्। (१०।५९।६)

(ज्योक् = चिरम्। उच्चरन्तम् – उद्गच्छन्तम्)।

उद्बुध्यध्वं समनसः सखायः। (१०।१०१।१)

## शुक्लयजुर्वेदसंहितायाः

इदमहमनृतात् सत्यमुपैमि। (१।५)

उर्वन्तरिक्षमन्वेमि। (१।७)

(अन्तरिक्षम् = अवकाशम्। अहमात्मनः समुन्नत्यै उरु विस्तीर्णमवकाशमवसरं वा लभे इति समुन्नतिपथेन गच्छतः स्वाभिप्रायाविष्करणम्)।

तनूपा अग्नेऽसि तन्वं मे पाहि;

आयुर्दा अग्नेऽस्यायुर्मे देहि;

वर्चोदा अग्नेऽसि वर्चो मे देहि।

अग्ने यन्मे तन्वा ऊनं तन्म आपृण ॥ ( ३।१७ )

( तन्वम् = शरीरम् । आपृण = आपूरय ) ।

तत्सवितुर्वरेण्यं
भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ॥ ( ३।३५ )

( वरेण्यम् = वरणीयम्, सर्वैः प्रार्थनीयम् । भर्गः = सर्वपापानां भर्जनसमर्थं तेजः । धीमहि = ध्यायामः । प्रचोदयात् = सत्कर्मानुष्ठानाय प्रेरयति ) ।

ऋतस्य पथा प्रेत । ( ७।४५ )

वाममद्य सवितर्वाममु श्वो
दिवे दिवे वाममस्मभ्यं सावीः । ( ८।६ )

( वामम् = यद् वननीयं संभजनीयं तत् । सावीः = प्रसूयाः ) ।

अनाधृष्टाः सीदत सहौजसः । ( १०।४ )

( सहौजसः = ओजसा सहिताः, बलयुक्ताः । अनाधृष्टाः = अनाधर्षिताः, अपराभूताः शत्रुभिः । सीदत = तिष्ठत ) ।

यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः ।
निन्दाद्यो अस्मान् धिप्साच्च सर्वं तं मस्मसा कुरु ॥ ( ११।८० )

(अरातीयात् = अरातिरिवाचरति । द्वेषते = द्वेष्टि । निन्दात् = निन्दयति । धिप्सात् = धिप्सति, दम्भितुमिच्छति, जिघांसति । मस्मसाकुरु = चूर्णीकुरु ) ।

सꣳशितं मे ब्रह्म सꣳशितं वीर्यं बलम् ।
सꣳशितं क्षत्रं जिष्णु ॥ ( ११।८१ )

( संशितम् = तीक्ष्णीकृतम् ) ।

रुचं नो धेहि ब्राह्मणेषु रुचꣳ राजसु नस्कृधि ।

रुचं विश्येषु शूद्रेषु मयि धेहि रुचारुचम् ॥ ( १८।४८ )

( रुचम् = दीप्तिम् । विश्येषु = वैश्येषु । रुचा सह रुचम् = अविच्छिन्नां रुचमित्यर्थः ) ।

तेजोऽसि तेजो मयि धेहि;
वीर्यमसि वीर्यं मयि धेहि;
बलमसि बलं मयि धेहि;
ओजोऽस्योजो मयि धेहि;
मन्युरसि मन्युं मयि धेहि;
सहोऽसि सहो मयि धेहि ॥ ( १९।९ )

यथेमां वाचं कल्याणीमावदानि जनेभ्यः । ब्रह्मराजन्याभ्याꣳ शूद्राय चार्याय च स्वाय चारणाय च ॥ ( २६।२ )

( अरणः = अपगतोदकः पर इत्यर्थः ) ।

वाचस्पतिर्वाचं नः स्वदतु । ( ३०।१ )

( स्वदतु = स्वादयतु । अस्मदुक्ता वाक् वाचस्पतये रोचतामित्यर्थः ) ।

आशिक्षायै प्रश्निनम्, उपशिक्षाया अभिप्रश्निनम् । ( ३०।१० )

भूत्यै जागरणम्, अभूत्यै स्वपनम् । ( ३०।१७ )

प्रियाय प्रियवादिनम् । ( ३०।१३ )

न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः । ( ३२।३ )

( तस्य पुरुषस्य । प्रतिमा = प्रतिमानम्, उपमानम् ) ।

स ओतः प्रोतश्च विभूः प्रजासु । ( ३२।८ )

स नो बन्धुर्जनिता स विधाता । ( ३२।१० )

---

## ( मेधायै प्रार्थना )

यां मेधां देवगणाः
पितरश्चोपासते ।
तया मामद्य मेधया-
ग्ने मेधाविनं कुरु स्वाहा ॥ ( ३२।१४ )

---

## ( मनसः पवित्रता )

यत्प्रज्ञानमुत चेतो धृतिश्च
यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान्न ऋते किं चन कर्म क्रियते
तन्मे मनः शिवसंकल्पमस्तु ॥ ( ३४।३ )

---

## ( हिरण्यस्तुतिः )

यो बिभर्त्ति दाक्षायणꣳ हिरण्यꣳ स देवेषु
कृणुते दीर्घमायुः, स मनुष्येषु कृणुते दीर्घमायुः ॥ ( ३४।५१ )

विश्वं तद्भद्रं यदवन्ति देवाः ( ३४।५८ )

---

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विचिकित्सति ॥
यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ( ४०।६-७ )
( वि चिकित्सति = संशेते ) ।

---

कविर्मनीषी परिभूः स्वयम्भूर्
याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः । ( ४०।८ )

( याथातथ्यतः = यथास्वरूपम् स्वभावानुरूपमिति यावत् । अर्थान् = कर्तव्यरूपानर्थान्, भोग्यपदार्थान् वा । शाश्वतीभ्यः = नित्याभ्यः । समाभ्यः = संवत्सरेभ्यः । परमात्मना भोग्यपदार्थानां कर्तव्यकर्मणां वा विभागः स्रष्टौ सर्वदा याथातथ्येनैव क्रियत इति भावः ) ।

---

अग्ने नय सुपथा राये अस्मान् । ( ४०।१६ )

---

## सामवेदसंहितायाः

पावका नः सरस्वती । ( पूर्वार्चिके २।१०।५ )
सदा गावः शुचयो विश्वधायसः । ( पू० ५।६।६ )
इन्द्रो विश्वस्य राजति । ( पू० ५।७।१० )
मदेम शतहिमाः सुवीराः । ( पू० ५।७।८ )
सूर्य आत्मा जगतस्तस्थुषश्च । ( पू० ६।१४।३ )

---

इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति । (उत्त० १।२।३)
साह्याम दस्युमव्रतम् । ( उ० ३।१।३ )
जनस्य गोपा अजनिष्ट जागृविः । ( उ० ३।१।६ )
वयं स्याम भुवनेषु जीवसे । ( उ० ३।२।१ )
भद्रा इन्द्रस्य रातयः : ( उ० ५।२।१४ )
( रातयः = दानानि )

---

## अथर्ववेदसंहितायाः

सं श्रुतेन गमेमहि, मा श्रुतेन वि राधिषि । ( १।१।४ )
वाचा वदामि मधुमद् भूयासं मधुसंदृशः । ( १।३४।३ )
आप इद्वा उभेषजीरापो अमीवचातनीः ।
आपो विश्वस्य भेषजीः । ( ३।७।५ )

---

( उत्तमशालायाः स्वरूपम् )
इहैव ध्रुवा प्रति तिष्ठ शालेऽश्वावती गोमती सूनृतावती ।
ऊर्जस्वती घृतवती पयस्वत्युच्छ्रयस्व महते सौभगाय ।। (३।१२।२)

---

त्वं नो देव दातवे रयिं दानाय चोदय । ( ३।२०।५ )
यथा नः सर्व इज्जनः संगत्यां सुमना असद्, दानकामश्च नो भुवत् ।
( ३।२०।६ )

---

सर्वं तद्राजा वरुणो वि चष्टे
यदन्तरा रोदसी यत्परस्तात् ॥ (४।१६।५)
युवं वायो सविता च भुवनानि रक्षथः। (४।२५।३)

## (वायोः सवितुश्च यक्ष्मनाशकत्वम्)

रयिं मे पोषं सवितोत वायुस्
तनू दक्षमा सुवतां सुशेवम्।
अयक्ष्मतातिं मह इह धत्तं
तौ नो मुञ्चतमंहसः ॥ (४।२५।५)
मह्यं नमन्तां प्रदिशश्चतस्रः। (५।३।१)
उत्परस्तात्सूर्य एति विश्वदृष्टो अदृष्टहा।
दृष्टांश्च घ्नन्नदृष्टांश्च सर्वांश्च प्रमृणन् क्रिमीन् ॥ (५।२३।६)
दैवीं नावं स्वरित्रामनागसो
अस्रवन्तीमा रुहेमा स्वस्तये। (७।६।३)
भद्रादधि श्रेयः प्रेहि। (७।८।१)

## (भद्रगृहाणि)

उपहूता भूरिधनाः सखायः स्वादुसंमुदः।
अक्षुध्या अतृष्या स्त गृहा मास्मद्बिभीतन ॥ (७।६०।४)

---

## (देवानां पूरयोध्या)

अष्टाचक्रा नवद्वारा
देवानां पूरयोध्या।

तस्यां हिरण्ययः कोशः
स्वर्गो ज्योतिषावृतः ॥ ( १०।२।३१ )

——

ये पुरुषे ब्रह्म विदुस्ते विदुः परमेष्ठिनम् । ( १०।७।१७ )

——

प्रेव पिपतिषति मनसा मुहुरा वर्तते पुनः । ( १२।२।५२ )
सुश्रुतौ कर्णौ भद्रश्रुतौ कर्णौ
भद्रं श्लोकं श्रूयासम् । ( १६।२।४ )

——

# ५—लौकिकन्यायाञ्जलिः

अजाकृपाणीयन्यायः।

यथा हि खलु कण्डूयनार्थं स्तम्भादौ ग्रीवां प्रसारयन्त्या अजाया यदृच्छया पतता कृपाणेन ग्रीवा छिद्येत, एवं यत्राकस्मादेवानर्थाद्यापतेत्तत्र, अकस्मादेवाश्चर्यमय्या घटनायाः स्थले वायं न्यायः।

अणुरपि विशेषोऽध्यवसायकरः।

अनिषिद्धं ह्यनुमतं भवति।

अन्धकवर्तकीयन्यायः ( अथवा—अन्धचटकन्यायः )।

हिन्दी—"अन्धे के हाथ बटेर"।

अन्धगजन्यायः।

यथैक एव गजः करपादादिरूपेण केनचिदवयवविशेषेण प्रज्ञापितोऽन्धैः सर्परूपः स्तम्भरूप इत्येवं नानारूपेण कल्प्यते। एवमेव यत्रैकमेव वस्तु अज्ञानवशाद् बहुशः कल्प्यते तत्रायं न्यायः।

अन्धपरम्परान्यायः ( अथवा—अन्धेनैव नीयमाना यथान्धाः।

यद्वा—अन्धस्येवान्धलग्नस्य विनिपातः पदे पदे। )

अन्धदर्पणन्यायः।

तथा हि। यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम्।

लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥

अन्धस्य दीपो बधिरस्य गीतम् ।

अयमपरो गण्डस्योपरि स्फोटः ।

अरण्यरोदनन्यायः ।

अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।

अयं भावः । अल्पान्महतश्च कर्मणः समं फलं जाये चेत्ततोऽल्पेनैव सिद्धे कार्ये महति न कश्चित्प्रवर्तेत ।

अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते ।

हिन्दी—"अङ्गूर खट्टे हैं ।"

तथा हि । दह्यमानाः सुतीव्रेण नीचाः परयशोऽग्निना ।

अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते ॥

अशक्तोऽहं गृहारम्भे शक्तोऽहं गृहभञ्जने ।

अथवा—घातयितुमेव नीचः परकार्यं वेत्ति न प्रसाधयितुम्

अस्त्रमस्त्रेण शाम्यति ( अथवा—वज्रं वज्रेण भिद्यते ) ।

आकाशमुष्टिहननन्यायः ।

मुष्टिभिर्व्योमताडनवन्निष्फलेऽसंभवे च कर्मणि न्याय स्यास्य प्रयोगः ।

आम्रसेकपितृतर्पणन्यायः ।

( अथवा—एका क्रिया द्व्यर्थकरी प्रसिद्धा । आम्राः सिक्ताः पितरश्च प्रीणिताः । ) हिन्दी—"एक पंथ दो काज" ।

आम्रान्पृष्टः कोविदारानाचष्टे ।

इतो भ्रष्टस्ततो भ्रष्टः ।

इतो व्याघ्र इतस्तटी।

उभयतःस्पाशा[1] रज्जुः।

कस्यचित्करणेऽकरणे च तथा भावेऽभावे च दोषापत्तिरित्यर्थः।

उत्सङ्गसङ्गिनि बालके तदन्वेषणम्।

काकतालीयन्यायः (= अजाकृपाणीयन्यायः)।

काकस्य कति वा दन्ता मेषस्याण्डं कियत्पलम्।
गर्दभे कति रोमाणि इत्येषा मूर्खकल्पना॥

काशकुशावलम्बनन्यायः।

नद्यादौ पतितस्य सन्तरणानभिज्ञस्य हि काशकुशावलम्बनमनर्थकं भवति।

कुड्यं विना न चित्रम्। अथवा - सति कुड्ये चित्रम्।

कूपमण्डूकन्यायः।

कूपयन्त्रघटिकान्यायः।

तथा हि—एष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधिः।

क्रिया हि विकल्प्यते न वस्तु।

अयं भावः। कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं हि कर्म। यथाश्वेन गच्छति, पद्भ्यामन्यथा वा, न वा गच्छतीति। न तु वस्त्वेवं नैवमस्ति नास्तीति वा विकल्प्यते।

---

१ उभयतःस्पाशेति। स्पश बाधनस्पर्शनयोरिति भौवादिकस्य, स्पश ग्रहणसंश्लेषणयोरिति चौरादिकस्य वा रूपमेतत् [ महाभाष्ये ( ६।१।६८) कैयटः ]।

कास्त: क्व निपतित: ।

क्षते क्षारमिव ।

खल्वाटबिल्वीयन्याय: (=काकतालीयन्याय: ) ।

गतानुगतिको लोको न लोकः पारमार्थिकः ।

घुणाक्षरन्यायः ।

तत्र वर्धमानः ( ३।१६५ )—घुणोत्किरणात्कथंचिन्निष्पन्नमक्षरं घुणाक्षरम्। तदिव यदकुशलेन दैवाद् निष्पद्यते तद् घुणाक्षरीयम् ।

चिन्तामणिं परित्यज्य काचमणिग्रहणन्यायः ।

तस्य तदेव हि मधुरं यस्य मनो यत्र संलग्नम् ।

तुष्यतुदुर्जनन्यायः ।

यत्र प्रतिवाद्युक्तपक्षं दुष्टमपि अङ्गीकृत्य वादी दूषणान्तरं ददाति तत्रायं न्यायः ।

त्यजेदेकं कुलस्यार्थे ।

अथवा—सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः ।

नष्टाश्वदग्धरथन्यायः ।

परस्परापेक्षावतोर्द्वयोः सहयोगेन यत्र कार्यं निष्पादयितुं शक्यते तत्रायं न्यायः ।

नहि कठोरकण्ठीरवस्य कुरङ्गशावः प्रतिभटो भवति ।

नहि भवति तरक्षुः प्रतिपक्षो हरिणशावकस्य ।

नहि वरविघाताय कन्योद्वाहः ।

नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते, न च मृगाः

सन्तीति यवा नोप्यन्ते ।

न हि सर्वः सर्वं जानाति ।

न हि करकङ्कणादर्शनायादर्शापेक्षा ।

हिन्दी—"हाथ कगन के आरसी क्या" ।

न हि गोधा सर्पन्ती सर्पणादहिर्भवति ।

न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद्भवतीत्यर्थः ।

न ह्येष स्थाणोरपराधो यदेनमन्धो न पश्यति ।

निरीक्षते केलिवन प्रविश्य क्रमेलकः कण्टकजालमेव ।

पङ्कप्रक्षालनन्याय ।

अथवा—प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शन वरम् ।

पङ्ग्वन्धन्याय. । (= नष्टाश्वदग्धरथन्याय. ) ।

पर्जन्यो यावदून पूर्णं च सर्वमभिवर्षति ।

अथवा—मेघो गिरिजलधिवर्षी च ।

पश्यस्यद्रौ ज्वलदग्निं न पुन पादयोरध ।

पिष्टपेषणन्यायः ।

प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ।

भक्षितेऽपि लशुने न शान्तो व्याधिः ।

भस्मन्याज्याहुति॰ । (= अरण्यरोदनन्याय ) ।

मारणाय गृहीतोऽङ्गच्छेदं स्वीकरोति ।

य एव करोति स एव भुङ्क्ते ।

योगाद्रूढिर्बलीयसी ।

यो यच्छ्रद्ध स एव स ।

लक्षणप्रमाणाभ्यां वस्तुसिद्धिः ।

लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ।

वरं सांशयिकान्निष्कादसांशयिकः कार्षापणः ।

वरमद्य कपोतः श्वो मयूरात् ।

विषकुम्भं पयोमुखम् ।

विषस्य विषमौषधम् ।

वृद्धिमिष्टवतो मूलमपि ते नष्टम् ।

वृश्चिकभिया पलायमान आशीविषमुखे निपतितः ।

शिरसि मसीपटलं दधाति दीपः ।

हिन्दी—"चिराग तले अँधेरा ।"

शीर्षे सर्पो देशान्तरे वैद्यः ।

श्वःकार्यमद्य कुर्वीत ।

सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ।

सूचीकटाहन्यायः ।

स्थालीपुलाकन्यायः ।

स्वभावो दुरतिक्रमः ।

हस्तकङ्कणं किं दर्पणे प्रेक्ष्यते ।

---

**इत्याचार्यश्रीमङ्गलदेवशास्त्रिविरचितस्य प्रबन्धप्रकाशस्य प्रथमभागे सुभाषितरत्नसंदोहो नामान्तिमश्चतुर्थोल्लासः ।**



# प्रबन्धप्रकाशः

## द्वितीयो भागः

अर्थात्

विशिष्टविद्वत्परिषत्सु ग्रन्थकर्त्रा प्रदत्तानां दीक्षान्तादि-
भाषणानां संग्रहात्मकः, ऐतरेयपर्यालोचनेन
महानिबन्धेन, वेदादिसच्छास्त्रेभ्यः
संकलितया सुविचारमाधुकर्या
च समुपेतो ग्रन्थः

स च


विद्यामार्तण्ड ( कां० वि० )

**डाक्टर श्री मङ्गलदेव शास्त्री,**

एम० ए०, डी० फ़िल० ( ऑक्सफ़ोर्ड ),

इत्येतेन विनिर्मितः


सुप्रसिद्धैर्महनीयकीर्त्तिभि-
र्महत्तरैश्चातितरां प्रशंसितः

The book mainly consists of convocation and other addresses in Sanskrit delivered By the author on special occasions.

It is altogether a new contribution in Sanskrit by a distinguished sholar, who as Principal, Government Sanskrit College, Banaras, Registrar, Sanskrit College Examinations, U.P., Superintendent of Sanskrit Studies, U.P., etc., etc., has supervised and directed the studies of Sanskrit on Shastric traditional lines for many years.

It will be found highly useful and thought-provoking by professors, teachers and advanced students of Sanskrit, and also by persons interested in the modern problems of Sanskrit.

Order for a copy at once, as the edition is expected to be finished shortly.

*Pages 325, price Rs. 3/- only.*

To be had of–

THe Manager,

**The Indian Press, Ltd.,**

ALLAHABAD & BANARAS.

# प्रख्यात विद्वानों की बहुमूल्य सम्मतियाँ

## *Extracts from Select Opinions.*

1. **Dr. Bhagavan-dasa, M.A., D. Litt., Banaras:—**

"......आचार्य श्री मङ्गलदेवशास्त्रिणा, प्रगतेर्भावनाया जागर्तिरेव संस्कृतज्ञानां साम्प्रतिकी मख्यावश्यकतेत्यनुभवता, स्वोपज्ञमनोरमपद्धत्या सोपपत्ति च सरससरलैर्मञ्जुभिश्च पदैर्गूढगभीरविषयान् प्रतिपादयता, प्रगतिशीलविचारपरम्पराभिः परिपूर्णो भव्यैर्भावैर्विभूपितो भारतीयताभावनाभावितश्च ग्रन्थोऽयं विनिर्मितः ।

अत्र हि प्राधान्येन संस्कृतज्ञानां हितेन संबद्धान् "अभिनवभारत संस्कृतज्ञानां स्थानम्", "भारतीयसंस्कृतेः स्वरूपम्", "देववाण्या अवनतिरस्माकं कर्तव्यं च", "आर्यधर्मस्य संदेशः" इत्यादिविषयान्, प्राचीनसंस्कृतवाङ्मयेन च संबद्धान् "वेदा अभिनवभारतं च", "भगवद्गीतायाः स्वरूपमुपयोगश्च"......इत्यादिविषयानधिकृत्य तत्तद्विशिष्टावसरेषु ग्रन्थकृता प्रदत्तानां भाषणानां संग्रहः । तत्परिशिष्टरूपेण च......वेदादिसच्छास्त्रेभ्यः संकलिता विचारगभीरा हृदयंगमाश्च संदर्भाः सूक्तयश्च नूनं ग्रन्थस्यात्युपयोगितां संपादयन्ति ।

स एष संस्कृतभाषायामिदंप्रथमत्वेन कृतो यत्नः संस्कृतज्ञानामवश्यमभिनन्दनीयो भविष्यतीति मे विश्वासः । तदस्य विषये

देववाण्याः समुत्कर्षं भावयंस्तद्विदां तथा ।
ग्रन्थ एष चिरं भूयाद्विदुषां हर्षवर्धनः ॥

इत्येव मदीयं शुभाशंसनम् ।"

2- **His Excellency Shri M. S. Aney, Governor of Bihar :—**

...I have great pleasure to observe that I read partly some of the speeches, particularly अभिनवभारते संस्कृतज्ञानां स्थानम्, भगवद्गीतायाः स्वरूपम्, श्रुतिविमर्शः (ऐतरेयब्राह्मण आचारविचाराः). I found the discussion and exposition of points raised therein very lucid and closely reasoned. The review of Aitareya-Brāhmaṇa.................. is sufficiently thought-provoking..............The reader can get a fairly good idea of the high moral ideals and the general outlook on life of the ancient Brahma-Vādins and the people from this.

In the chapter on सुविचारमाधुकरी you have brought out a panorama of essence of Vedic Culture from the times of Holy Vedas to the comparatively recent times of Dhammapadas..................

This close resemblance of thought in the preachings of great masters in India will

remove prejudices and create a better and more intelligent understanding among the followers of the various sects And that is, in my opinion, a great need from the point of view of the evolution of Indian Nationalism at the present time.

*The book, if prescribed for general reading by the students going up for University Examinations, will certainly be a great help in popularising the study of Sanskrit among the students.*

3. **Mahamahopadhyaya Dr. P. V. Kane, Ex-Vice-Chancellor, Bombay University, Bombay;—**

......प्रबन्धप्रकाशाख्यो ग्रन्थः......मया दृष्टः। महान् संतोषः संजातः। भवद्भिर्भारतीयसंस्कृतेः स्वरूपं सम्यग् निर्दिष्टम्। देववाण्या अवनतिः कथं जाता, अस्माभिः किं च कर्तव्यं तदपि सम्यक्तया प्रतिपादितम्। आर्यधर्मस्य संदेश आशावादमूरीकरोति न तु नैराश्यमिति यद्भवद्भिरुद्घोषितं तन्महान्तं प्रमोदं जनयति। गीर्वाणवाण्या व्यवहारः कथं सुकरो जायते तद्भवद्भिरनेन ग्रन्थेन सम्यक् प्रदर्शितम्। एवमेव तत्रभवद्भिर्दैव्या वाण्याः पुरस्कारः सदैव कृतो भवेदित्याशासे।

......'प्रबन्धप्रकाश' इत्याख्येन ग्रन्थेन बहूपकृतं तत्र-भवद्भिः।......

4 **The Hon ble Shri Shri Prakash Minister for Natural Resources and Scientific Research, Government of India, New Delhi :—**

... . मैं आपको बधाई और धन्यवाद देता हूँ कि आपने इतनी उपयोगी पुस्तक लिखी। ......मुझे आशा है आपकी पुस्तक का अच्छा प्रचार होगा और इसके द्वारा समुचित ज्ञान का संचार होगा।......

4. **The Hon'ble Shri C. D. Deshmukh, Minister for Finance, Government of India, New Delhi :—**

......सुरवाणुपासकेष्वेकमात्मानं गणयतोऽनतिविदग्धस्यापि मे भवतां प्रबन्धप्रकाशोऽनल्पं प्रमोदमाततान। आशासेऽभ्यधिकां यशःप्राप्तिं भवतां गीर्वाणवाणीसेवायाम्......

6. **The Hon'ble Shri N. V. Gadgil, Minister for Mines Works and Powers, Government of India, New Delhi ;—**

...I have got the book and I am reading it as time permits. However. I am glad to state that *it is a unique book of its kind.*

7. **The Hon'ble Shri B. G. Kher, Chief Minister, Government of Bombay, Bombay :—**

......प्राप्तो मया भवदीयप्रवचनसंग्रहात्मकः सुविचारमाधुकर्या समुपेतः 'प्रबन्धप्रकाश' नामको ग्रन्थः। पठितानि च कतिपयानि प्रवचनानि। विशेषतो गीताजयन्तीमहोत्सवशुभावसरे आविष्कृतं भगवद्गीतायाः स्वरूपं प्रत्यक्षीकृत्य सहर्षं समाधानमभून्मे मनसि।......अत्यन्तमनुगृहीतोऽस्मि।......तपस्तत्रभवतां वर्धताम्।

8. **The Hon'ble Shri K. M. Munshi, Minister for Food, Government of India, New Delhi :—**

Many thanks for.........a copy of your latest Sanskrit book Prabandha-Prakasha Part II.........I have glanced through your book with interest.........

9. **The Hon'ble Dr. Sampurnanand, Minister for Education and Labour, U. P., Lucknow :—**

......मैं आपकी पुस्तक 'प्रबन्धप्रकाश' ( भाग २ ) को पढ़ गया। मुझे वह बहुत पसन्द आई। कहीं कहीं मतभेद हो सकता है, पर इससे पुस्तक की उपयोगिता में कोई अन्तर नहीं आता। संस्कृत पढ़नेवालों को इस प्रकार की बहुत कम पुस्तकें अब तक उपलब्ध रही हैं।......

10. **Pandit Madho Sarup Vats, M. A., Director General of Archaeology in India, New Delhi :—**

I am extremely pleased to go through "Prabandha-Prakasha" Part II·········*The book is thought-provoking and a valuable contribution to modern Sanskrit literature.* Your essays couched in faultless Sankrit and modern analytic diction successfully refute the false argument that Sanskrit is a "Dead Language"·········

I find myself in full agreement with your views regarding the defects and shortcomings in the study of Sanskrit in Pathashalas by the old method,·········Essays like those under review should go a long way to remedy this defect·········

I am very much impressed by the "Samāvartana-Satra-Paddhati", which revives the picture of Ancient Indian Civilisation in most brilliant colours.

11. **Well-known Vedic Scholar Shri Pandit Brahma Datt Jijñāsu, Editor of "Veda-Vāṇi", Banaras :–**

......संस्कृत भाषा के लेखन पर पूर्ण अधिकार करने की कला (विज्ञान) का प्रकाश 'प्रबन्ध-प्रकाश' ग्रन्थ के रूप में भारतीय जनता के समक्ष आया है।......मैं अपने अनुभव के आधार पर कह सकता हूँ कि इस विषय पर मैंने इससे अच्छी रचना अब तक नहीं देखी।... निश्चय ही यह लिखकर आचार्य मङ्गलदेवशास्त्री जी ने संस्कृत छात्रों का ही नहीं, अपितु भारत का महान् उपकार किया है।......प्राचीन भारतीय संस्कृति, सभ्यता और साहित्य-संबन्धी बहुत ही ऊँचे, सामयिक तथा गम्भीर विचार अति सरलता से दिये गये हैं।......संस्कृत विद्यालयों के छात्रों को ही नहीं, किन्तु अध्यापकों को भी, 'प्रबन्ध-प्रकाश' द्वितीय भाग......अवश्य पढ़ना चाहिये।

हम चाहते हैं कि यह ग्रन्थ भारत के सभी विश्वविद्यालयों में संस्कृत भाषा पर अधिकार प्राप्ति के लिये प्रामाणिक माना जावे और पाठ्यग्रन्थों में रखा जावे।

12. **Well-known Art-Critic Shri Rai Krishna Dasa, Editor, the Kalānidhi, Banaras :—**

......आपकी पुस्तक 'प्रबन्धप्रकाश' (भाग २) को...... अधिकांश देख गया हूँ। आपने सचमुच बहुत ही सुन्दर ग्रन्थ

प्रस्तुत किया है। मुझे उससे बहुत उच्चकोटि का ( बौद्धिक ) भोज्य प्राप्त हुआ।......

**13. Dr. Babu Ram Saxena, M. A., D. Litt., Head of the Sanskrit Department, Allahabad University, Allahabad :—**

डाक्टर मङ्गलदेव शास्त्री के प्रबन्ध-प्रकाश के प्रथम भाग से विद्वत्समाज तथा विद्यार्थीगण चिरकाल से लाभ उठा रहे थे। संस्कृत भाषा में प्रबन्ध लेखन पर ऐसा उपादेय ग्रन्थ अभी भी दूसरा कोई नहीं है। डा० शास्त्री ने प्रबन्ध-प्रकाश का द्वितीय भाग प्रकाशित कर और भी उपकार किया है।......ग्रन्थकार न केवल संस्कृतभाषा और साहित्य के उच्चकोटि के विद्वान् हैं, अपितु शुद्ध राष्ट्रीय भावना से राष्ट्र-कल्याण के लिए सर्वदा मनन-शील रहते हैं।........**प्रस्तुत ग्रन्थ में, अन्य महत्त्वपूर्ण विषयों के साथ साथ, संस्कृत भाषा, साहित्य तथा संस्कृतज्ञ का क्या स्थान वर्तमान स्वतन्त्र भारत में होना चाहिए इस विषय का गम्भीर विवेचन है और अनेक ऐसे सुझाव हैं जिनसे राष्ट्र अग्रसर हो सकता है।**

ग्रन्थ के अन्तिम भाग में "सुविचार-माधुकरी" के नाम से संहिता, ब्राह्मण, उपनिषद् आदि प्राचीन भारतीय वाङ्मय से उद्धृत सुभाषित संगृहीत हैं जो बड़े उपयोगी हैं।.........**हमें विश्वास है कि प्रबन्ध-प्रकाश के द्वितीय भाग का समुचित स्वागत और सम्मान होगा।**

14. **Dr. Surya kanta, M. A., D. Litt. ( Punjab ), D. Phil. ( Oxon ), Officer D'Academie Francaise, Head of the Department, University Oriental College, Jullundur (E. Punjab) :—**

......प्रबन्धप्रकाश का द्वितीय भाग प्राप्त हुआ। धन्यवाद। वास्तव में जैसा नाम वैसा गुण। पुस्तक के प्रबन्ध पढ़ते ही बनते हैं। उनके भाव, उनकी भाषा, उनकी शैली आपके व्यक्तित्व से अनुस्यूत हैं, और प्रबन्धों की विविधता तथा सामयिकता ने पुस्तक में जान डाल दी है। मैं आशा करता हूँ कि संस्कृत के प्रेमी इसका आदर करेंगे।......

15. **Pandit Deva Datta Upadhyaya, Vyakarana-( Navya and Prachina ) Acharya, Vedanta-Acharya, Mimansa Tirtha, etc., Professor of Darshana, Government Sanskrit College, Banaras :—**

......नाविदितं......विद्वदग्रेसराणां यत्परश्शतवर्षेभ्यः...... परं लघिमानमासादयन्त्येषा गीर्वाणवाणी......कस्मैचित् प्राचीन-संस्कृतिसमुद्बोधकसुललितसरलसंस्कृतनिबन्धग्रन्थरत्नाय चिराय समुत्कण्ठिता समासीत्। ......संस्कृताध्येतृसमाजोऽपि..... पूर्वोक्ताय ग्रन्थरत्नाय नूनं चिरात् समुत्कण्ठितः समासीदेव।......तदेतत्सर्वं हृदि निधायैव......ग्रन्थकर्त्रा......प्रबन्धप्रकाशस्य द्वितीयभागोऽयं प्रकाशित इति मन्ये।......

......अस्मिन् ग्रन्थे हृदयग्राहिण्या तलस्पर्शिन्या सुललितसरल-संस्कृतशब्दावल्या भारतीयसंस्कृतेरपोषका निबन्धास्तथा निहिताः, यथानायासेनैव विदुषां......शास्त्रीयसिद्धान्तामृतनिःष्यन्दरसः सुस्वादितो भवेत्।......निबन्धेषु पदे पदे......लोकोक्तिसदृशवैदिक-मन्त्रप्रतानोऽस्य ग्रन्थस्यातुलं महिमानमातनोति। नान्यत्र एतादृशी विशिष्टा मनोहरा च शैली कापि दरीदृश्यते।......

अन्यगभीरविषयैः सहैव......'सुविचारमाधुकरी' इत्याख्यो भागस्तु महता परिश्रमेण ग्रन्थकर्त्रा "घटे सागर इव" निहितः।

किञ्च......प्रगतिशीलभावनानां समुद्बोधनपरस्य, अद्यत्वे प्रायेणाहरहो जागरितानां......नानाविधसमस्यानां समाधानपरस्य च कस्य चिद् ...ग्रन्थस्य देववाण्यामभावेन यत्तस्या दारिद्र्यमासीत् तद्दूरीकर्तुमेव इदंप्रथमत्वेन निर्मितोऽयं ग्रन्थो......विदुषां समादरभाजनं भविष्यतीति नास्त्यत्र सन्देहलेशः।

**सर्वत्र संस्कृतभाषाविज्ञैश्छात्रैर्विद्वद्भिश्च...............स्वगृहे स्वावासे स्वाश्रमे च नूनं 'हस्तपुस्तक' रूपेण संस्थापनीय-मनर्घमेतद् ग्रन्थरत्नम्।............**

**16. Pt. Lakshman Shastri Joshi, Tarka-tirtha, Editor-in-Chief "Dharma Kosha" and one of the Sanskrit Translators of the Indian Constitution, Wai ( Dist. Satara N. ) :—**

आपकी संस्कृत पुस्तक ( प्रबन्धप्रकाश, भाग २ ) मिली, और पढ़ भी ली। पुस्तक बहुत अर्थगम्भीर विविध विषयों के विवेचन से भरी हुई है। परम्परा और प्रगतिशीलता का मधुर सङ्गमन इसमें मिलता है।...

## Other Select Opinions

*on the*

# Prabandha-Prakasha

*PART II.*

1. **Prof. L. Renou, Professor of Sanskrit, University of Paris, Paris :—**

"I have received your excellent book in Sanskrit— Prabandha-Prakāśa, II, and admired your easy and elegant 'Rīti' in Sanskrit. The book is full of new ideas about Sanskrit education and learning. It may be recommended to every University interested in the treasure of Old Traditions."...........

2. **Prof. K. K. Handiqui, M. A., (Calc. Et Oxon.), Vice-Chancellor, Gauhati University, Gauhati :—**

"I have read Dr. Mangal Deva Shastri's Prabandha Prakasha Part II with considerable interest. The book contains his learned and thoughtful Addresses on cultural topics and the problems of Sanskrit Education, primarily in relation to those who study it under the

orthodox system. He deplores their aversion to modern studies and calls attention to the secular aspects of ancient Sanskrit learning. He lays stress on the optimistic tone of Vedic literature and the will to strive and succeed which finds eloquent expression in some of the Vedic Texts. In an instructive essay the author explains and illustrates the ethico-religious ideas in the *Aitareya Brāhmaṇa*, a famous text of later Vedic literature. The concluding section of the book contains a judicious selection of passages from Vedic and Classical Sanskrit texts, which throw light on the ideals of ancient Indian culture. The book will be read with pleasure and profit by all lovers of Sanskrit learning."

3. **Prof. Dharmendra Nath Shastri, Tarka-Shiromani, M. A., Head of the Sanskrit Department, Meerut College, Meerut, and Convener, Sanskrit Board of the Agra University :—**

"The Prabandha Prakāśa Part II mainly comprises the addresses delivered by Dr. Mangal Deva Shastri at the convocations of some National Universities and academies and at some cultural conferences. These addresses mark an altogether a new style of Sanskrit Prose. Never before have I come across

modern ideas being expressed in chaste and idiomatic Sanskrit with such ease. It shows how our classical language, in the hands of a master, is capable not only of expressing modern thoughts, but also imparting them a new vigour and richness. What struck me most is the manner in which gems of old wisdom (in the form of pithy maxims) have been set off against the background of modern ideology. It is indeed a treat for Sanskrit Scholars to go through the pages of these thought-provoking addresses in Sanskrit. The book will fulfil a long-felt need of Sanskrit Scholars of the post-graduate classes of Indian Universities".

4. **Pandit Vagishwara Vidyalankara, Sahityacharya, Prof. and Registrar, Gurukula University, Kangri, Hardwar (writes in the Gurukula-Patrika of the Gurukula University, Kangri) :—**

भारतीय वाङ्मय के क्षेत्र में डाक्टर मंगलदेव शास्त्री, एम० ए०, डी० फिल०, विद्यामार्त्तण्ड, का अध्ययन तो विशेष गंभीरता, व्यापकता तथा सूक्ष्मता के लिये प्रसिद्ध है ही, किन्तु सरल और सरस संस्कृत भाषा में नवीन विचारों को भी सफलता पूर्वक अभिव्यक्त करने की आपकी क्षमता अत्यन्त प्रशंसनीय है। बहुत

समय से संस्कृत दैनिक व्यवहार की भाषा नहीं रही। अतः पाण्डित्य, प्रयत्न तथा अभ्यास के बल पर यद्यपि विद्वज्जन उसमें पर्याप्त सुन्दर रचना कर लेते हैं, तथापि उसमें स्वाभाविक प्रवाह का भङ्ग कहीं कहीं अवश्य खटक ही जाता है। डाक्टर शास्त्री इसके अपवाद हैं। आप अनेक वर्षों तक काशी के राजकीय संस्कृत महाविद्यालय के आचार्य तथा वहाँ की संस्कृत परीक्षाओं के रजिस्ट्रार रहे। उस समय आप संस्कृत के शिक्षकों तथा छात्रों के साथ सीधे संपर्क में आये और आपने इस त्रुटि को विशेष रूप से अनुभव कर 'प्रबन्धप्रकाश' द्वारा इसका परिमार्जन करने का प्रयत्न किया। **आपका प्रयत्न इस दिशा में सर्वोत्तम है, यह पूर्ण विश्वास के साथ कहा जा सकता है।......**

**प्रबन्धप्रकाश जिस शैली में लिखा गया है वह सजीव तथा स्वाभाविक है।** उसे पढ़ते समय हमें यह प्रतीत नहीं होता कि अंग्रेज़ी या हिन्दी मुहावरों को संस्कृत का चोला पहना दिया गया है। निबन्ध लिखने के लिये आवश्यक विचारों का संग्रह, उन विचारों का क्रम से विन्यास, विकास तथा उपसंहार, और विचारों को व्यक्त करने के लिये उपयुक्त शब्दों तथा उनके प्रयोग की कला को सीखने के लिये **प्रबन्ध-प्रकाश अद्वितीय पुस्तक है। इसका अनुशीलन तथा इसकी शैली के अनुकरण का अभ्यास करके छात्र सफल लेखक बन सकते हैं। यही कारण है कि देश के सभी प्रधान विश्वविद्यालयों ने संस्कृत की उच्चतम परीक्षाओं के रचना-सम्बन्धी पत्र में इसे स्थान दिया हुआ है।**

अभी डाक्टर शास्त्री ने इसका द्वितीय भाग भी प्रकाशित कर संस्कृत छात्रों का महान् उपकार किया है।

प्रबन्धप्रकाश के इस द्वितीय भाग में डाक्टर शास्त्री द्वारा समय-समय पर विविध विश्वविद्यालयों में दिये गये दीक्षान्त अभिभाषण आदि के अतिरिक्त ऐसे निबन्ध भी हैं जिनमें वेद, ब्राह्मण, उपनिषद्, रामायण, गीता आदि ग्रन्थों का समुद्रमंथन कर निकाले गये बहुमूल्य रत्नों की माला है। इनमें प्राचीन साहित्य पर नूतन प्रकाश डाला गया है।

**प्रबन्ध-प्रकाश के ये दोनों भाग संस्कृत साहित्य के उज्ज्वल रत्न हैं।......**

## ५. प्रोफ़ेसर पद्मनारायण आचार्य, एम० ए०:—

प्रबन्धप्रकाश ( भा० २ ) में संस्कृत और संस्कृति के प्रेमियों के लिए बहुत कुछ है।......प्रत्येक संस्कृतविद्यालय में इसका संग्रह किया जाय तो छात्रों को युग की चेतना का परिचय मिल जायगा। ......सरल संस्कृत में स्वस्थ विचार इस प्रकार रखे गए हैं कि पढ़नेवाले को चिंतन और मनोविनोद दोनों का लाभ होता है। इन निबन्धों को पढ़कर विश्वास हो जाता है कि संस्कृत भाषा अभी सजीव है और उसमें युगानुरूप विचार प्रकट करने की पूर्ण शक्ति है।...... श्रुतिविमर्श और सुविचार-माधुकरी......स्मरण रखने योग्य हैं। ......प्रबन्धप्रकाश का प्रकाशन संस्कृत-भाषा-भाषियों तथा संस्कृत-प्रेमियों के लिए गौरव की बात है।

——

## ग्रन्थकर्त्रा डा० मङ्गलदेवशास्त्रिणा प्रणीतानां

### संपादितानां[1] वा ग्रन्थानां परिचयः—

( संस्कृते )

(१) ऋग्वेदप्रातिशाख्यम्, उवटाचार्यकृतभाष्येण सहितम्। प्रकाशकः—इंडियन प्रेस, लिमिटेड, इलाहाबाद।

(२,३) प्रबन्धप्रकाशः ( भागद्वयात्मक )। प्रकाशक— इंडियन प्रेस, लिमिटेड, इलाहाबाद।

(४) न्यायसिद्धान्तमाला ( द्वौ भागौ )। प्रकाशक— गवर्नमेंट प्रेस, इलाहाबाद।

(५) उपनिदानसूत्रम् ( सामवेदीयम् )। प्रकाशक— पूर्ववत्।

(६) उपेन्द्रविज्ञानसूत्रम् ( वेदान्तः )। प्रकाशक.—पूर्ववत्।

(७) आश्वलायनश्रौतसूत्रम् ( सिद्धान्तिभाष्यसहितम् ) ( प्रथमो भाग )। प्रकाशक—पूर्ववत्।

---

१—वाराणसेय राजकीय स० महाविद्यालयस्याध्यक्षरूपेण ग्रन्थकर्त्रा सादितानामनेकेषा ग्रन्थाना नात्रोल्लेख. क्रियते।

(८) **आर्यविद्यासुधाकरः** । प्रकाशकः—मेसर्स मोतीलाल बनारसीदास, बुक्सेलर्स, चौक, बनारस ।

(९) **भारतीयसंविधानस्य (उत्तरार्धस्य) संस्कृतानुवादः** ।

प्रकाशकः—

The Manager of Government Publications Delhi.

( इंग्लिशभाषायाम् )

(१०) **ऋग्वेदप्रातिशाख्यम्** English Translation, Critical Notes, Appendices etc.। प्रकाशकः—मेसर्स मोतीलाल बनारसीदास, बुक्सेलर्स, चौक, बनारस ।

(११) Part of the Introduction to the Critical Edition of the **ऋग्वेदप्रातिशाख्य**, Oxford University Press, Oxford ( out of print ).

( हिन्दीभाषायाम् )

(१२) **भाषाविज्ञान** ( अथवा तुलनात्मक-भाषाशास्त्र ), चतुर्थसंस्करण, प्रकाशक—इंडियन प्रेस, लिमिटेड, इलाहाबाद ।

(१३) **भारतीय आर्यधर्म की प्रगतिशीलता** ( भारतीय संस्कृति के विकास का विवेचनात्मक अध्ययन )। प्रकाशक—पूर्ववत् ।

(१४) **मिना** (= प्रेम और प्रतिष्ठा का संघर्ष ) ( 'मिना फ़न बार्नह्यल्म' नामक जर्मन नाटक का अनुवाद )। प्रकाशक—हिन्दुस्तानी एकेडेमी, इलाहाबाद ।

(१५) **वेदों का वास्तविक स्वरूप, अथवा—वेदों के महान् आदर्श ।** प्राप्तिस्थान—मेसर्स मोतीलाल बनारसी दास, बुकसेलर्स, चौक, बनारस ।

( प्रकाशनार्थ प्रस्तुता ग्रन्था )

(१) **शतपथब्राह्मणपर्यालोचनम्**

(२) **ऐतरेयपर्यालोचनम्**

(३) **ऐतरेयारण्यकपर्यालोचनम्**

(४) **वैदिकसूक्तसंग्रहः** ( अनुवादेन, विविधटिप्पणीभिः परिशिष्टैश्च सहित. )

(५) **ऋग्वेदप्रातिशाख्यम्** ( उवटभाष्यसहितऋग्वेदप्राति-शाख्यसंस्करणस्य बृहद्भूमिकादिसवलित. प्रथमो भाग )

अन्ये चैवविधा ग्रन्था ।

——